यथा तु यद् यावदिहोदितं मया निर्धारितं तत्त्वमिदं तथास्ति तत् ।
इति प्रतिज्ञा तु न मेऽस्ति केवलं विदां मतं देवयुगस्य[१] दर्श्यते ॥१२॥

यद्यन्मतं देवयुगे यथायथं सर्वं तदत्रैव निरूपितं मया ।
इति प्रतिज्ञाऽपि न मेऽस्ति केवलं देवैः प्रदृष्टे पथि दृष्टिरर्प्यते ॥१३॥

ये वेदमन्त्रा अपि संहितायां नैषां न चास्याः कृतमत्र भाष्यम् ।
न तत्क्रमं चाप्यनुरुध्य किञ्चिद् व्याख्यायते कश्चन वेदभागः ॥१४॥

या[२] तु मता परिभाषा यान् सिद्धान्तान् महर्षयोऽवधृतान् ।
आलम्ब्यैतान् मन्त्रानाम्नासिषुरत्र ते प्रदर्श्यन्ते ॥१५॥

अत्रोक्तां परिभाषां सिद्धान्तान् वा प्रदर्शितानत्र ।
ये ज्ञास्यन्ति समस्ता भास्यन्त्येषां विशिष्य मन्त्रार्थाः ॥१६॥

आलोडिता यैः श्रमतो न वैदिका ग्रन्था न यैरत्र समाहितं मनः ।
सिद्धिश्च दैव्यस्ति न येषु ते हठादर्हन्ति नोत्क्षेपयितुं कुतर्कतः ॥१७॥

व्याघाततो[३] वा पुनरुक्तितो वाऽनृतत्वतो वा न न तत्प्रमाणम् ।
प्राग् गौतमेनात्र समाहितत्वादाक्षिप्य नोत्क्षेप्यमिदं मदुक्तम् ॥१८॥

विज्ञानदृष्ट्या च परीक्षया च प्रपद्य देवैरुदिताः पुरार्थाः ।
तेषां परीक्षामधुना[४] त्वकृत्वा सिद्धान्तमात्रेण वदामि कांश्चित् ॥१९॥

मात्सर्यमुत्सार्य विचार्य्य वर्य्या युक्तीः समस्ता अवधारयन्तु ।
क्षुण्णे तदित्थं पथि संचरन्तो[५] मार्गं परिष्कारमिमं नयन्तु ॥२०॥

यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शने ।
यत्र प्रमाणं श्रुतयः सयुक्तयस्तद् ब्रह्मविज्ञानमिदं विमृश्यताम् ॥२१॥

इतिब्रह्मविज्ञानारम्भप्रतिज्ञा नाम प्रथमं वक्तव्यम् ॥१॥

---

[१] वेदप्रचारकाल एवात्र देवयुगपदेनाख्यातः ।

[२] तपस्यतामृषीणां बुद्धौ परमेश्वरानुग्रहेण सृष्टितत्त्वविज्ञानसिद्धान्ता आविर्भूताः, त एव मन्त्रेषु तैः प्रकटिता इति ग्रन्थकृता महर्षिकुलवैभवे सप्रमाणं प्रतिपादितम्, तदेवात्र संकेतितम् ।

[३] न्यायसूत्रे गौतमीये इमे आक्षेपा वेदेषु क्रियमाणाः समाहिताः, तथैव रीत्या वेदार्थानुवादके मद्ग्रन्थेपि ते समाधेया इति भावः ।

[४] इदानीं भारते परीक्षासामग्रीविरहात् परीक्षा न कर्तुं शक्यत इति भावः ।

[५] मया मार्गः प्रदर्शितः अग्रे विद्वांस एतेन संचरन्तो वैदिकं रहस्यं क्रमेणोद्घाटयन्तु इति भावः ।

## नचिकेतसं[१] प्रति यमोपदेशः

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥१॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरो ऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ॥२॥

स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन् नचिकेतोऽत्यस्राक्षीः ।
नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥३॥
(कठोप.)

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्तः ॥४॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥५॥

न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥६॥

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्यलब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमनु प्रमाणात् ॥८॥

नैषा तर्केण मतिरापनीया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापः सत्यधृतिर्वतासि त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥९॥

जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥१०॥

कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।
स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥११॥

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥१२॥

एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ।
स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥१३॥

इति यमनाचिकेतसीयश्रुतिः ।

---

[१] अस्य विषयस्य महत्त्वं गंम्भीरत्वं च प्रमाणयितुं कठोपनिषदंशोऽत्र उद्धृतः

## जिज्ञासावतारणम् ।

यद्[१] दृश्यते तत् किमु वा कदाभवत् कियत्प्रमाणं च किमस्य कारणम् ।
इत्थं बुभुत्सा स्वत एव जायते सा ब्रह्मसिद्धान्तत एति निर्णयम् ॥१॥

## [२]षड्दर्शन समालोचना ।

लो[३]कायतमतमन्यद् वैना[४]शिकमतचतुष्टयं चान्यत् ।
[५]स्याद्वादिकद्वयं यद्वैशेषिक[६]मेकमस्ति मतम् ॥२॥

प्रा[७]धानिकं चतुर्धा शारीरक[८]मष्टधा चेति ।
षड्दर्शनी प्रसिद्धा तद्धचर्वाक् कालिकं सर्वम् ॥३॥

---

[१] दृश्ये जगति सर्वेषां स्वाभाविकी जिज्ञासा प्रवर्तते । तन्निवर्तनाय निरूपणमावश्यकमिति प्रयोजननिर्देशः ॥

[२] उक्तां जिज्ञासां निवर्तयितुमिदानीं षड् दर्शनानि भारते प्रवर्तन्ते । तत्राप्यस्ति विप्रतिपत्तिः । केचिद्वैदिकान्येव षड् दर्शनानि गणयन्ति । केचित्तु त्रीणि अवैदिकानि, त्रीणि तु वैदिकानीति संगृह्य षड् दर्शनानि ब्रुवते । तेषामेवावान्तरभेदांश्च बहून् । तत्र द्वितीयं मतमेव ग्रन्थकर्तुः सम्मतमिति । तत्पूर्वं प्रदर्श्य पश्चात् परमतं समालोच्यते ।

[३] लोकायतापरपर्यायं चार्वाकदर्शनं प्रथमम् तदेवालम्ब्य प्रथमं बालानामशिक्षितानां च बुद्धिः प्रवर्तते इति ।

[४] द्वितीयं वैनाशिकापरपर्यायं बौद्धदर्शनम् । तच्च सर्वशून्यता, विज्ञानास्तिता; बाह्यपदार्थानुमेयता, आन्तरबाह्योभयसत्तेति मतचतुष्टयप्रतिपादकमाध्यमिकसौत्रान्तिकयोगाचारवैभाषिकनामभिः प्रसिद्धं चतुर्धा भिन्नम् ।

[५] स्याद्वादापरपर्यायं जैनदर्शनम् तृतीयम् । तच्च दिगम्बर श्वेताम्बरभेदाद् द्विधा भिन्नं प्रसिद्धम् । एतानि त्रीणि दर्शनानि न वेदप्रामाण्यमङ्गीकुर्वन्तीत्यवैदिकानि ।

[६] चतुर्थं वेदप्रामाण्यमङ्गीकुर्वत् काणादापरपर्यायं वैशेषिकं दर्शनम् ।

[७] पञ्चमं प्राधानिकपदाभिधेयं सांख्यदर्शनम् । तच्चतुर्धा लभ्यते निरीश्वरसांख्यं सांख्यसूत्र सांख्यकारिकादिपूपलभ्यमानमेकम् । योगदर्शनेऽनूदितं केवलं प्रणिधानार्थमीश्वरं स्वीकुर्वद्द्वितीयम् । प्रकृतिप्रेरकेश्वरप्रतिपादकं पुराणेपूपलभ्यमानं तृतीयम्, शिवः शक्तिर्बिन्दुश्चेति पदार्थत्रितयं मूलतोऽभ्युपगच्छदागमोक्तं चतुर्थमिति । दशवादरहस्याख्ये ग्रन्थे तु ग्रन्थकृता १—आर्षप्राधानिकम्, २—योगप्राधानिकम्, ३—राजप्राधानिकम्, ४—पुराणप्राधानिकम्—इति चतुर्धा सांख्यं व्याख्यातम् । तत्र राजप्राधानिकपदेनागमोक्तमेवाभिप्रेतं स्यात् ।

[८] वेदान्तापरपर्यायं शारीरिकदर्शनं सर्वान्तिमं षष्ठम् । तस्याष्टौ विधा उपलभ्यन्ते—(१)मायाशक्तिसहकृत ब्रह्माद्वैतप्रतिपादकं श्रीशंकराचार्यपरिष्कृतम्; (२)कामपि शक्तिं मौलिकीमनभ्युपगच्छत् शुद्धब्रह्माद्वैतप्रतिपादकं श्री वल्लभाचार्यपरिष्कृतम्; (३) विशिष्टाद्वैतबोधकं श्री रामानुजाचार्यैः शैवाचार्यैश्च परिष्कृतम्; (४) द्वैताद्वैतप्रतिपादकं श्री भास्कराचार्यं श्री निम्बकाचार्याभ्युपगतम्; (५) द्वैतपरं श्री मध्वाचार्य कृतभाष्यम्; (६) अचिन्त्य

[१]अद्यत्वे तु न्यायं वैशेषिकसांख्ययोगमीमांसाः ।
वेदान्तं वा ब्रुवते दर्शनषट्कं तदज्ञानात् ॥४॥
[२]वैशेषिकं च सांख्यं दर्शनमेतद्द्वयं मन्ये ।
तत्र जगत्कारणताऽणूनां प्रकृतेश्च दर्श्यते स्वैरम् ॥५॥
[३]सांख्यं ज्ञानं योगस्तत्कर्मेत्येकमेव तच्छास्त्रम् ।
सांख्यप्रवचनसंज्ञं भेदस्त्वाचार्य्यभेदतो भ्रान्तः ॥६॥
सम्यग्दर्शनतो यत् सम्यग् ज्ञानं ततश्चरित्रं च ।
सम्यक् स्यात् तत एव ज्ञानोदयतो विमुच्यतेऽस्यात्मा ॥७॥
अत एव प्रतिदर्शनमन्ते ह्युपदिश्यते क्रियायोगः ।
आचार्य्येणैकेन हि सांख्ये त्वाचार्य्यभेदतः कथितः ॥८॥
[४]न्यायोऽस्ति तर्कशास्त्रं तर्कन्यायः कथाशास्त्रम् ।
सन्ति पदार्थाः षोडश तत्र प्रोक्ताः कथाङ्गानि ॥९॥

---

भेदाभेदसिद्धांतस्थापकं श्री चैतन्य गोस्वामिभिर्विवृतम्; (७) श्री मदाचार्यभिनवगुप्तपादपरिष्कृतं प्रत्यभिज्ञादर्शनम्; (८) आगमेपूपलभ्यमानशक्त्यद्वैतम् इति । दशवादरहस्ये आचार्यविवृताः पट् तु एवमेव विवृताः निर्विशेपाद्वैतशारीरकम्, ऐकात्म्यवादशारीरकं चेति द्वयमपरमुक्तम् । तच्चेदं द्वयं ग्रन्थकृतैव संशयतदुच्छेदवादे विवृतम् । इत्थमवान्तरभेदसंकलन–या विंशतिर्दर्शनानि सिद्धयन्ति । शारीरकविमर्शे तु अवान्तरभेदैः पट् त्रिंशद्दर्शनानि ग्रन्थकृता गणितानि, तेषां विस्तारस्तत्रैवालोच्यः ।

[१] आधुनिक विदुषां पड् दर्शनगणनाप्रकार उच्यते । तत् खण्डनं च ।

[२] आधुनिकैरुक्तेपु पट्सु द्वयोरेव दर्शनत्वं न्याय्यम् । सर्वजगत्कारणस्य मूलतत्त्वस्यान्वेपणं दर्शनस्योद्देश्यम्, तदेतद् द्वयोरेव प्राप्यते इति । वेदान्तविषये त्वग्रे वक्ष्यते ।

[३] योगस्य पृथग् दर्शनत्वं खण्डयति । सर्वेष्वेव दर्शनेपु पूर्वं तत्त्वानि ज्ञानोपयुक्तानि प्रतिपाद्य अन्ते तदनुकूलः क्रियायोगः प्रदर्श्यते तेनैवाचार्येण । इह तु भगवता कपिलेन तत्त्वज्ञानं विवृतम् । भगवता पतञ्जलिना तु तदेव तत्त्वज्ञानमनूद्य क्रियायोगो विस्तारेण प्रतिपादितः । एवमाचार्यभेदेऽपि तत्त्वनिरूपणस्यैकविधत्वात् पृथग् दर्शनत्वं न सिद्धयतीति भावः । यत्तु सृष्टिविधावनुपयोगात्कपिलेनानभ्युपगतोऽपीश्वरः पतञ्जलिना प्रणिधानार्थमङ्गीकृतः, सोऽयमवान्तरभेद एव गणनीयः स्यात्, न तु दर्शनपृथक्त्वम् । जगन्मूलतत्त्वे जगदुत्पत्तिप्रक्रियायां च भेदाभावादिति । अतएव योगस्य सांख्यप्रवचनसंज्ञाप्याप्तैः कृतेति । अथवा क्रियायोगविस्तारात् सर्वदर्शनोत्तराङ्गं गोगशास्त्रमभ्युपगम्यताम्, न तु दर्शनमध्ये तद्गणना साधीयसी ।

[४] यथा योगः सर्वदर्शनोत्तराङ्गम्, तथा गौतमीयो न्यायः सर्वदर्शनपूर्वाङ्गम् । तत्र हि विचारापरपर्यायायाः कथाया नियमा आख्याताः, तत्र च निरालम्बो वादो न संभवतीत्युदाहरणरूपेण आत्मादीनि द्वादश प्रमेयानि परिगृहीतानि । तद्विपये च काणादाः सिद्धान्ता एव कथाप्रकारेण पूर्वोत्तरपक्षाभ्यां दृढीकृताः । तस्माद् गौतमीयशास्त्रं तर्कन्यायः, तर्कस्य-तत्त्वज्ञानार्थसमूहस्य, न्यायः-नीतिः-नियम इति यावत्, सोऽयं दर्शनपूर्वाङ्गतयैव स्वीकर्तव्यः ।

दार्शनिकानां द्वादश विवादविषयान् क्रमादुदाहृत्य ।
वादकथाया रूपं शिक्षितमस्मिन् न दर्शनं तत्स्यात् ॥१०॥

कर्म[1]ब्रह्मविभागाद् ब्राह्मणवेदे द्विधास्ति काण्डं[2] यत् ।
तद्वाक्यार्थविचारन्यायो मीमांसनं नाम ॥११॥

षोडशलक्षण्या सा मीमांसा काण्डयोर्द्वयोर्विहिता ।
आचार्य्यभेदतोऽत्र द्वैविध्यं भ्रान्तमेकशास्त्रं तत् ॥१२॥

ब्रह्म च कर्म्म च विषयौ शास्त्रार्थत्वेन चिन्तितौ तत्र ।
व्यापकविश्वविचारो नायं तस्मान्न दर्शनं तत्तत् ॥१३॥

यज्ञादीनि मनुष्याः स्वर्गार्थं यानि कर्माणि ।
कुर्वन्ति तत्र विधिवाक्तात्पर्य्यस्येह मीमांसा ॥१४॥

उपनिषदां वाक्यानां ब्रह्मणि तात्पर्य्यमस्ति नान्यत्र ।
इति वक्ति भिक्षुसूत्रं तत्र जगन्मूलचिन्तनं गौणम् ॥१५॥

---

नासौ दर्शनमध्ये पृथक् परिगणनीयः, जगन्मूलविषये कणादेन संवादात् । गौतमोक्ताः षोडश पदार्था अपि कथाङ्गान्येवेति सुस्पष्टं भाष्यकृता वात्स्यायनेन प्रतिपादितम् । तस्माद् गौतमः षोडशपदार्थवादी, कणादस्तु सप्तपदार्थवादीति नव्यानामुद्घोषोऽनालोच्यैव प्रवृत्तः । न हि जगत्पदार्थपरिगणने प्रमाण, संशय, वाद, जल्प, हेत्वाभासादीन् कश्चिदनुन्मत्तः पृथक् पृथग् गणयेत्, एवं हि पदार्थानामानन्त्यप्रसङ्गो दुरुद्धर इति । द्वादश प्रमेयान्यपि भगवता गौतमेन एषां विचारो मोक्षोपयोगीत्येव गणितानि, सपरिकरात्मतत्त्वज्ञानस्यैव मोक्षसाधनत्वात्, द्वादशसु चात्मातिरिक्तानामेकादशानामात्मपरिकरतयैव गृहीतत्वादिति भाष्यकृतैव सर्वं स्पष्टीकृतम्, न तु द्वादशैव जगति पदार्था इति गौतमस्याभिप्रायः । आकाशकालादीनां द्रव्याणां गुरुत्वादृष्टादीनां गुणानां च सर्वथाप्यसंग्रहप्रसङ्गात् । अर्थपदेन तत्रेन्द्रियार्थानामेव ग्रहणस्य सूत्रकृतैव व्याख्यातत्वात् । या तु गौतमः प्रमाणचतुष्टयवादी, कणादस्तु प्रमाण-द्वयवादीति विप्रतिपत्तिः, सापि वाग्विनोदमात्रम् । न हि भगवान् कणाद उपमान शब्दौ प्रमाणत्वेन नाभ्युपगच्छति, वेदप्रामाण्यस्य तेन सम्यक् समर्थितत्वात् । अनुमाने ते प्रमाणे अन्तर्भावयतीति लक्षणमात्रे विचारभेदः । पीलुपाक पिठरपाकादि विप्रतिपत्तिरपि सूत्राक्षरा-नारूढा केवलं पश्चाद्भाविनां विदुषामेव विप्रतिपत्तिः । अस्तु वा एतावन्मात्रेण विचारभेदेन वैशेषिकदर्शनस्याप्यवान्तरभेदाभ्यां द्वैविध्यम्, पृथग् दर्शनत्वं गौतमीयस्य न्यायस्य न संभवति । जगन्मूलनिरूपणे भेदाभावादिति सम्यगालोच्यम् । तस्माद्वादापरपर्यायकथानियमप्रतिपादक एव न्यायः न तु पृथग् दर्शनमिति ।

[1] पूर्वोत्तर मीमांसे अपि न दर्शनगणनायां गणनीये, तयोः केवलं वाक्यार्थविचारक-त्वादित्याह ।

[2] कर्मकाण्डं ज्ञानकाण्डं चेति ।

[१]एवमपीदं ब्रह्माद्वैतं विश्वस्य मूलमिह शास्त्रे ।
उपदिष्टमस्ति तस्माच्छारीरकदर्शनं क्रमाद्[२] ब्रुवते ॥१६॥

[३]वेदान्ता उपनिषदो विज्ञानं ब्रह्मणः श्रौतम् ।
स्मार्तानि दर्शनानि तु षडतः शारीरकं तेषु ॥१७॥

## दशविज्ञान प्रस्तावना

[४]लोकायतादिदर्शनषट्कं यद् दृश्यतेऽद्यत्वे ।
अर्वाचीनयुगे तद् भारतवर्षे मनीषिभिः क्लृप्तम् ॥१८॥

[५]इह तु वयं यां ब्रूमो दशविज्ञानीं पुरातनीं सा तु ।
स्वर्गे देवैर्दृष्टा वेदग्रन्थेऽवतारिता धन्या ॥१९॥

---

[१] ननु तर्हि भवतापि उत्तरमीमांसा शारीरकपदेनाष्टविधा किमिति दर्शनेषु परिगणिता पूर्वं स्वमतप्रदर्शनावसरे इति चेत्तत्राह उत्तरमीमांसायां वाक्यार्थविचारेण सहोपपत्त्यापि जगन्मूलविचारः कृत इति सा दर्शनेषु गणनामर्हति । पूर्वमीमांसायान्तु केवलवाक्यार्थविचार एव न तु जगन्मूलचिन्तनमिति न सा दर्शनान्तर्गता । पूर्वमीमांसायामपि या क्वचिज्जगतः पदार्थेषु विप्रतिपत्तिः प्रदर्श्यते, सा न सूत्रमूला, भाष्यकृता क्वचित्स्याद्विचाराः प्रदर्शिताः, निबन्धकृद्भिश्च विवृता इति सूत्रकृतो जगन्मूलप्रदर्शने प्रवृत्त्यभावान्न सा दर्शनम् । व्यासप्रणीतेषु तु सूत्रेषु वाक्यार्थविचारस्य उपपत्त्या जगन्मूलविचारस्य चोभयोरुपलभ्यमानत्वेन तच्छास्त्रं मीमांसा च दर्शनं चेत्युभयरूपम् । न्यायश्च मीमांसा चेति द्वयं चतुर्दशसु विद्यासु परिगण्यते इति ते विद्ये । अत्र पूर्वोक्तानि षट् तु दर्शनानि । श्रवणोपयोगिन्यः शब्दप्रधाना विद्याः, मननोपयोगीनि तर्कप्रधानानि तु दर्शनानीति प्रस्थानभेदः । अतएव चतुर्दश विद्याः, षट्-शास्त्राणीति पृथक् पृथगेव चिरन्तनी प्रसिद्धिः ।

[२] दर्शनानां यः क्रमो बुद्धेरेकहेलया सूक्ष्मतमतत्त्वे प्रवेशयितुमशक्यत्वात् श्रेणिरूपेण तां प्रवेशयितुं विन्यासः, सोऽपि शारीरकापरपर्याये वेदान्तदर्शन एव परिसमाप्यते । इतः परं सूक्ष्मविज्ञानासंभवात् । तत एव वेदस्य ज्ञानस्य तत्रान्तोऽवसानं भवतीति वेदान्तपदेनापि तत्प्रतिपाद्यते । तं क्रमं पूरयितुमपि तस्य दर्शनमध्ये गणनावश्यं भाविनीति क्रमप्राप्तं तदस्माभिर्गणितम् ।

[३] शारीरकविमर्शे ग्रन्थे वैशेषिक सांख्ये दर्शने, शारीरकं गीता च करतलामलक-वदात्मतत्त्वप्रदर्शकत्वाद्विज्ञाने इत्युक्तम् । तत्र संगतिमाह—इदं विज्ञानमपि स्मृतिरूपत्वा-द्दर्शनेष्वपि परिगणनीयमिति भावः । मुनिप्रणीता हि स्मृतय उच्यन्ते । कपिलादिवद् व्यासेन प्रणीतं सूत्रमपि स्मृतित्वाद्दर्शनमिति ।

[४] यथेदानीं जगन्मूलं निरूपयितुं षड्दर्शनानि प्रवर्तन्ते तथा पुरायुगे दश विज्ञानानि प्रचलितान्यासन् इति दृष्टान्तप्रदर्शनार्थमेवेह षड् दर्शनप्रस्तावः कृत इति भावः ।

[५] अस्यां भूम्यामपि पुरा त्रिलोकीकल्पनासीदिति ग्रन्थकृता देवासुरख्यातौ स्वर्गसन्देशे दशवादरहस्ये इन्द्रविजये च विशिष्य प्रतिपादितं सप्रमाणम् । तत्र हिमालयादुत्तरे शर्यणावत

[१]षण्णां तु दर्शनानां यस्मिन् काले पुरोद्भवो नासीत् ।
तर्हि स्वर्गे लोके दशविज्ञानप्रचारणां भूम्नः ॥२०॥
तानीदानीं लोके विज्ञानानि प्रचारयितुम् ।
[२]वेदग्रन्थसमूहादुद्धृत्यात्र प्रदर्श्यन्ते ॥२१॥

## सृष्टिकारणसंबन्धे स्वर्गदेवानां दश मतानि ।

प्रतनाः साध्या[३] देवा विप्रतिपन्नास्तु सृष्टिमूलेऽस्मिन् ।
(१) सदसद्भ्यां विदुरेके (२) ऽमृतमृत्युभ्यां परे विदुः सृष्टिम् ॥२२॥
(३) अन्येऽहोरात्राभ्या (४) मावरणा (५) दम्भसोऽथ (६) रजसोऽन्ये ।
(७) व्योम्नो (८) ऽपरतः केचिद् (९) दैवादपरेऽभिमन्वते सृष्टिम् ॥२३॥
इत्थं विप्रतिपत्त्या (१०) संशयमातन्वते[४] त्वन्ये ।
परितोषो न परस्परविरुद्धवादेषु जायते तेषाम् ॥२४॥
अथ[५] परमेष्ठी ब्रह्मा प्रजापतिस्तान् विरुद्धमतवादान् ।
प्रत्यालोचयमानः प्रत्याचष्टे स्म तत्तदैकान्त्यम् ॥२५॥
आदौ निरस्य तेषामेकान्तत्वं प्रपद्य च ब्रह्म ।
सृष्टेर्मूलं तस्मिन् समन्वयं मन्यतेऽमीषाम् ॥२६॥

---

पर्वतमारभ्य स्वर्गो लोकः ख्याप्यते स्म । तन्निवासिषु देवेषु वैदिकविज्ञानविचाराः प्रथमं प्रवर्तन्ते स्म । तत्रैवेश्वरप्रसादात् प्राप्तज्ञानैर्महर्षिभिरेतानि विज्ञानानि प्रवर्तितान्यासन्निति भावः ।

[१] इदानीं प्रचलितेभ्यो दर्शनेभ्यो वक्ष्यमाणानि विज्ञानान्यतिपुरातनानीति भावः ।

[२] ऋग्वेदस्य नासदीयसूक्ते (ऋ. सं० १० म० १२९ सू०) दशानां वादानां नामसंकेतः कृतः । अन्यत्र मन्त्रेषु ब्राह्मणेषु च प्रासङ्गिकं तद्विवरणं तत्र तत्रोपलभ्यते । तत् क्रमेण संगृह्य ग्रन्थकृता दशसु ग्रन्थेषु प्रकाशितम् । ते ग्रन्थाः—(१) सदसद्वादः (२) रजोवादः (३) व्योमवादः (४) अपरवादः (५) आवरणवादः, (६) अम्भोवादः, (७) अमृत-मृत्युवादः (८) अहोरात्रवादः (९) दैववादः (१०) संशयतदुच्छेदवादः—इति नाम्ना ख्याताः । सर्वसंग्रहात्मकः सर्वेषां वादानां संक्षेपतः निदर्शकश्च दशवादरहस्याभिधो लघु-ग्रन्थो ग्रथितः । सर्वान् वादान् संगृह्य ब्रह्मणा यः सिद्धान्तवादः प्रतिष्ठापितः सोऽयमत्र व्याख्यायते । तथा च दशवादारम्भप्रतिज्ञापद्यमत्राप्युद्धृतम् ।

[३] ते स्वर्गस्था देवाः पुरा साध्या इत्याख्यायन्ते स्म—इति 'यत्र पूर्वे साध्याः सन्ति देवाः' इत्यादिना पुरुषसूक्तादिषु संकेतितम् । तैर्वेदाः पूर्वं प्राप्ताः अनन्तरं तु भारतीयैर्महर्षिभिः । तेषु साध्यानां वेदेषु वक्ष्यमाणा दशवादा आम्नाता इति ।

[४] केचिदत्र जगन्मूले संशय एवेत्याहुरिति भावः ।

[५] साध्येष्वेव परमेष्ठी ब्रह्मा प्रादुर्बभूव । तेन दशानां वादानां पार्थक्यं निरस्य सर्व-समन्वयरूपः सिद्धान्तवादः प्रतिष्ठापित इति भावः । सर्वेषां वादानां तेन ब्रह्मणा समन्वयः कृतः । तदेतदृग्वेदीये नासदीय सूक्त उपलभ्यते (ऋ. सं० १०।१२९) इति तत्सूक्तमत्रोद्ध्रियते ।

2

## साध्यदेवानां दशमतेष्वादिब्रह्मणो विप्रतिपत्तिवादः ।

(१)नासदासीन्नो सदासीत् तदानीं नासीद् (२)रजो नो (३)व्योमा (४)परो यत् ।
(५)किमावरीवः कुह कस्य (६)शर्म्मन्नम्भः किमासीद् गहनं गभीरम् ॥
(ऋ. स. १०।१२९।१)

न (७)मृत्युरासीदमृतं न तर्हि न (८)रात्र्या अह्न आसीत् प्रकेतः । (२ म. पूर्वार्द्धं)
(९)अर्वाग्देवा अस्य विसर्जनेना (१०)ऽथा को वेद यत आबभूव ॥ (६ म. उत्तरार्द्धं)

## ब्रह्ममते सिद्धान्तवादाभ्युपगमः ।

[१]आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास ॥ (२ म. उत्त.)

तम आसीत् तमसा गूढमग्रे ऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत् तपसस्तन्महिनाऽजायतैकम् ॥ (३ म.)

कामस्तदग्रे समवर्त्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ ४ म.)

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ।
रेतोधा आसन् महिमान आसन् स्वधा अवस्तात् प्रयतिः परस्तात् ॥ (५ म.)

को[२] अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः ।
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न । (६ म.)

यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ॥ (७ म.)

---

[१] नासदीये सूक्ते हि पूर्वं सार्द्धेन मन्त्रेण एकैकसिद्धान्त ख्यापकानष्टौ वादान् निषेधरूपेण न पदेन निराकरणीयतया प्रदर्श्य द्वितीय मन्त्रस्यार्द्धेन 'आनीदवातम्' इत्यादिना मध्य एव सिद्धान्तः प्रदर्शितः । दैववादः संशयवादश्च पूर्वपक्षरूपोऽप्यग्रे सन्निवेशितः । सोऽयं क्रमो बोधसौकर्याय ग्रन्थकृतात्र परिवर्तितः । अत्र हि पूर्वपक्षरूपाणां दशानामपि वादानां बोधकान् मन्त्रान् पूर्वमेव सन्निवेश्य सिद्धान्तप्रतिपादका मन्त्रा अन्ते सन्निवेश्यन्ते "आनीदवातम्" इत्यादयः । अयं सिद्धान्त एव ग्रन्थेऽस्मिन् व्याक्रियते । अत्र मन्त्रे एकमेव मूलतत्त्वं "आनीत्"—प्राणनं कुर्वद्, इत्युक्तम् । सत्कार्यवादसिद्धान्तानुसारेण स्वान्तः स्थितमेव जगत् परतत्त्वं वहिः प्रकाशयति नत्वपूर्वमुत्पादयति । तदेतदेव प्राणनमुच्यते । प्रसिद्धप्राणनेप्यन्तः स्थितस्य वायोर्वहिर्निः सारणात् । अत्रापि प्राणनपदेन वायुरूपस्य प्राणस्य शङ्का मा भूदिति मन्त्रे 'अवातम्' इति पदेन वायोर्व्यावृत्तिः कृता । जगतः प्रकाशनेऽपि मूलतत्त्वं ब्रह्म न हीयते, न वा स्वरूपात् प्रच्यवते—इति परिणामो न वक्तुं शक्यते । तत एवागमिका अत्र विकासशब्दं प्रयुञ्जते । वैदिकाश्च प्राणनशब्दम् । तस्मिन् प्राणने हेतुभूता शक्तिरत्र मन्त्रे स्वधा शब्देनोक्ता । तदिदं मूलतत्त्वं रसनाम्ना शक्तिर्बलनाम्नात्र ग्रन्थे व्याख्यास्यते, प्राणनस्य च विस्तर इति ।

[२] आभ्यां मन्त्राभ्यां ज्ञानस्यास्य दुर्लभत्वं परमगाम्भीर्यं च व्यञ्जितम् ।

## [१]महर्षेर्विश्वकर्मणः सिद्धान्तवादः ।

प्राग् विश्वकर्म्मापि महामहर्षिर्द्यावापृथिव्योरनयोः प्रसृष्टौ ।
प्रश्नान् जनानामवताय्यं बुद्धचा प्रष्टुं समादिश्य च निर्णिनाय ॥२७॥

"किं स्विद् वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद् भुवनानि धारयन् ॥"
(ऋक् १०।८१।४)

ब्रह्म वनं ब्रह्म स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद् भुवनानि धारयन् ॥
(तै. ब्रा. २।८।९)

## विश्वसृष्टौ दीर्घतमसः प्रश्नाभिनयः ।

प्रश्ना यथा सन्ति जगत्प्रसृष्टौ तथैव चाध्यात्ममपि श्रुतास्ते ।
प्रश्नान् बहून् दीर्घतमा महर्षिश्चापृच्छतेऽध्यात्ममथाधिदैवम् ॥२८॥

"न विजानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि ।
यदा माऽगन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥ (ऋ.सं.१।१६४।३७)

अचिकित्वाञ्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान् ।
वियस्तस्तम्भ षडिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥१९॥
(ऋ. सं. १।१६४।६।)

एवं विधानामिह संशयानामाध्यात्मिकानामधिदैवतानाम् ।
यथा भवेन्निस्तरणं तदर्थं सिद्धान्तविज्ञानमिदं वदामः ॥२९॥

सदसत् प्रभृतीन् वादान् दश तान् पूर्वं प्रदर्श्य किञ्चिदिह ।
ब्रूमः प्रजापतेरथ सिद्धान्ते ब्रह्मणः सृष्टिम् ॥३०॥

वादानां[२] तु दशानां समन्वयाद् ब्रह्मणः सृष्टिम् ।
ब्रूमस्तथा यथैते व्याख्याताः सृष्टिमन्त्राः स्युः ॥३०॥

इति ब्रह्मविज्ञानस्य सिद्धान्तवादे—
प्रस्तावनानुवाकः प्रथमः ॥१॥

---

१ अथान्येषामपि ऋषीणां संवादोऽत्रेति बोधयितुमन्येऽपि कतिचन मन्त्रा उद्ध्रियन्ते ।

२ वक्ष्यमाणं सिद्धान्तं सम्यग् बुद्ध्वा यदि सृष्टिमन्त्रा अधीयेरन्, तर्हि स्फुटोऽर्थस्तेषां वैज्ञानिकोऽवभासेतेत्याशयः ।

## ग्रन्थारम्भः

[१]ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेऽह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।।

[२]पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।

[३]एतावान् ब्रह्मवेदोऽयं ब्राह्मणा विदुरञ्जसा ।
वेदेऽनेन तु सर्वं यद् वेदितव्यं विदो विदुः ।।

ओं तत् सद् ब्रह्मणे नमः ।।

## (१) प्रथमाधिकरणम्

व्याचक्ष्महे ब्रह्म, यदस्य मूलं विश्वस्य तद् ब्रह्म तदेकमाद्यम् ।
तदद्वितीयं तदु सर्वमेतन्नातः परं किञ्चिदिहास्ति वेद्यम् ।।१।।

[४]अस्त्येकमेवाखिलविश्ववीजं पश्यामि विस्तारममुष्य विष्वक् ।
अन्योन्यपर्यायविपर्ययेण सर्वैकता संप्रतिपत्तिसिद्धेः ।।२।।

यथैकमूलात् फल-पुष्प-पर्ण-प्रकाण्ड-शाखा-विटपादिसिद्धिः ।
तथैव पश्यापि तदेकभावादनेकभावोदयनेन विश्वम् ।।३।।

---

[१] श्रीभगवद्गीतामाधारीकृत्यैवात्र क्षराक्षराव्ययपुरुषनिरूपणादि कर्तव्यमिति सूचयितुं तत्प्रतिज्ञाश्लोक इहोद्धृतः । यद्यपि विषयोऽयं मन्त्रब्राह्मणात्मके वेदे तत्र तत्र निरूपितः, तत एव च ग्रन्थकृता संगृहीतः, तथापि सर्वोपनिपत्सारभूतायां भगवद्गीतायां स्पष्टैरक्षरैः पुरुषत्रयं व्याकृतमिति महदिदं पुरुषत्रयनिरूपणस्यालम्बनम् ।

[२] शुक्लयजुर्वेदीयानां शान्तिपाठमन्त्रोऽयं प्रसिद्धः । अस्यार्थो ग्रन्थकृता संशयतदुच्छेदवादे बहुधा विवृतः —

पूर्णं ततो ब्रह्म च कर्म पूर्णं तद् ब्रह्मणि कर्मणि पूर्णतास्ति ।
तद् ब्रह्म वीक्षे यदि सर्वकर्मातिरेकतो ब्रह्म तदावशिष्टम् ।। (पूर्णद्विसत्योपनिपत् ४१)
पूर्णं पुरा सर्गगतं च पूर्णं पूर्णात् पुनः पूर्णमुदच्यते तत् ।
पूर्णस्य पूर्णं परिगृह्यते चेद् अन्तेवशिष्येत तदेव पूर्णम् ।। ९ इत्यादि ।

[३] तदेतदग्रे ग्रन्थ एव स्फुटं व्याकरिष्यते । अनेनैव मन्त्रेण सर्वं प्रतिपाद्यं विज्ञायत इति भावः ।

[४] जगति ये दृश्याः पदार्थाः, ते सर्वेऽपि परस्परेण परिवर्तयितुं शक्यन्ते—अग्निर्जलरूपतां गच्छति, वायुरपि जलरूपतां, जलमपि वाय्वग्निरूपतां पृथिवीरूपतां चेत्यादि । यथैकस्वर्णमूलानि कटककुण्डलादीनि परस्परं तद्वत् । तेनैकमूलता सर्वेषां सिध्यति ।

[१]अन्यान्ययोगादिव तत्र यद्वन्नाना विशेषाः प्रभवन्ति मूलात् ।
इहान्ययोगाननपेक्ष्य तद्वत् सर्वे विशेषाः स्युरयं विशेषः ॥४॥
तत्रैवमत्रैवमयं विशेषः कस्मादिवास्तीति न तर्कणीयम् ।
विद्याद्[२] यथा रूपमचिन्त्यभावान्न चैव तर्केण तु योजयेत् तान् ॥५॥
शारीर[३]भावा हि यथैकरेतोबिन्दोरभूवन् बहुधा विभिन्नाः ।
कुतो विभेदः कथमेकबिन्दोर्विभिन्नभावा इति को नु विद्यात् ॥६॥
यद्रेतसश्चक्षुरभूत् ततोऽभूच्छ्रोत्रं वाक् चेति विशेष एषाम् ।
कस्मात् कुतश्चक्षुरिवान्यभावा न कर्म कुर्युस्तदचिन्त्यमेतत् ॥७॥
यावद् यथावत् पुनरस्य रूपं याः शक्तयश्चक्षुषि ताश्च सम्यक् ।
वेत्तुं कथंचित् प्रभवाम यत्नात् परं तु रूपं तदचिन्त्यमेव ॥८॥

## (शब्दोपपत्तिः)

[४]विश्वस्य तूलस्य यदस्ति मूलं तस्यैव चैकस्य तु बृंहणेन ।
पश्यामि विश्वं तत एव मूलं तद् ब्रह्मशब्देन सदा वदामि ॥९॥
खवद् विभुत्वान्न ततः परं बृहत् नान्यत्र सर्वं प्रथते च बृंहणम् ।
बृहत् सदा यत् परिबृंहणं च यत् तदुच्यते ब्रह्म जगद्यतोऽभवत् ॥१०॥
[५]सर्वं भृतं यत्र बिभर्ति वा समं सर्वं यतो वा भ्रियते वह्निर्न हि ।
तद् ब्रह्म सर्वस्य हि तस्य चक्षते बुधा विपर्य्यस्य तु भर्मणो हरौ ॥११॥

---

[१] वृक्षे मूलात् फल-पुष्प-पर्ण-स्कन्धाद्युत्पत्तौ मृज्जलादयोऽपि सहकारिणो भवन्ति, ब्रह्मणो जगदुत्पत्तौ तु तत्त्वान्तरं न सहकारि, तत्त्वान्तरस्याभावादिति दृष्टान्ताद् विरोधः । यद्यपि बलस्य सहकारितात्रापि वक्ष्यते, तथापि तदपि ब्रह्मणो नैकान्ततो भिन्नमिति दृष्टान्ताद् वैषम्यमस्त्येव । सर्वरूपेणालौकिकस्य लौकिको दृष्टान्तो न संभवतीति ।

[२] यद् यथास्ति तत्तथा व्याख्यातुं शक्यते, कुतस्तथास्तीति तर्कस्तु अलौकिके विषये सर्वत्र न विसरतीति भावः । विज्ञानमपि अस्मादिदं भवति इत्येव व्याचष्टे, कुतो भवतीति तु न सर्वत्र निर्वक्तुं शक्नोति ।

[३] आस्तामलौकिको ब्रह्मविषयः । नित्यं परिदृश्यमानायामपि प्राणिनामुत्पत्तौ एकस्मादेव रेतोबिन्दोः कथं नासाकर्णे चक्षुरादिविभाग इति न निर्वक्तुं शक्यम् ।

[४] बृहि धातोर्ब्रह्म शब्दनिरुक्तिः । सर्वतो बृहत्त्वाद्, बृंहणशक्तित्वाच्च तद् ब्रह्म-शब्देनोच्यते मूलतत्त्वम् । तस्य बृंहणं विस्तार एव जगदिति ।

[५] अथ भृ धातोर्ब्रह्म शब्द इति द्वितीया निरुक्तिः । धारणं पोषणं च भृ धातोरर्थः । सर्वं जगद् बिभर्ति आधारतया धरति, पुष्णाति, पालयति—रक्षति वा ब्रह्मेति कर्तरि मन् प्रत्ययः । भ्रियते जगदस्मिन्निति—अनेनेति वाधिकरणार्थकः करणार्थको वा मन् प्रत्ययो व्याख्येयः । तेन भर्मन्—शब्दसिद्धिः । हकारस्य सूक्ष्मरूपम् ऊष्मा इत्युच्यते, तत्संबन्धादेव

[१]नाम्नां यथा वागथ रूपसंहतेश्चक्षुर्यथात्मा पुनरात्मकर्मणाम्[२]।
[३]तथा यदुक्थं यदु साम दृश्यते तद्ब्रह्म विद्यादिह विश्वकर्मणाम् ॥१२॥

---

वर्णानां सृष्टिर्भवति । तदुक्तं श्रुत्या "अकारो वै सर्वा वाक्, सैषा स्पर्शोष्मभिर्व्यज्यमाना वह्वी नानारूपा भवति" इति । वर्गप्रथमानामूष्मणा योगे द्वितीयवर्णता भवति—यथा 'क' 'ख' 'च' 'छ' इत्यादि । एवं वर्गतृतीयानामूष्मणा योगे चतुर्थवर्णता भवति, यथा 'ग' 'घ' 'ज' 'झ' इत्यादि । तदत्र भर्म शब्दे भकारेऽपि वकारश्चोष्मा च । ऊष्मा च रेफश्चेति विचालिनौ वर्णौ । अनयोर्विचलनादेव शब्दाः विकृतिं यान्तीति वहुत्र दृश्यते । यथा 'गृह' शब्दे हकार ऊष्मरूपेण विचालितो गकारेण संयुज्य तस्य घत्वमापादयति, ऋकारेऽन्तर्निहितो रेफश्च पृथग् भूत्वाऽन्तिमेन अकारेण युज्यते, रेफपरित्यक्तश्च ऋकारो अकारतां यातीति 'घर' शब्दो भाषायां निष्पद्यते । वहून्युदाहरणान्येवं विधानि लभ्यन्ते, इममेव प्रकृतिनियममनुसृत्य भगवता पाणिनिना 'झलां जश झषि' 'झलां जशोऽन्ते' 'एकाचो वशो भष्' इत्याद्या विधयः सूत्रिताः । तदेवमत्रापि भर्मशब्दे भकारस्थ ऊष्मा हकाररूपेण पृथग्भूत्वाग्रे गतः, तत्परित्यक्तो भकारो वकाररूपतां प्राप्तः, भकारस्योपरिस्थितश्च रेफस्ततो विचलितो वकाराकारयोर्मध्ये गत ति भर्म शब्द एव ब्रह्म शब्दतां गतः । तदिदमुक्तं मूले 'भर्मणो हरौ विपर्यस्य वुधा ब्रह्म चक्षते' इति । यो यद् वस्तु विभर्ति, स तस्य वस्तुनो ब्रह्म भवति, यथा पृथिवी पार्थिवानाम्, सूर्यश्च तेजसाम् । इदन्तु मूलतत्त्वं सर्वस्यापि जगतो ब्रह्मेति सामान्येन ब्रह्मशब्देनैवोच्यते ।

[१] पूर्वपद्योक्तं भरणमेव विशदयति । नामानि वाच्येव ध्रियन्ते रूपाणि च चक्षुपैव ध्रियन्ते । रूपरसादयो हि गुणा न तत्तत्पदार्थनिष्ठाः, अपि तु तैजसप्राणसंवद्धास्तत्तद्वस्तु प्राणाश्चक्षुपा संवध्य रूपमुत्पादयन्ति । तदेतत्स्पर्शादीनां गुणानामिन्द्रियसंयोगजत्वमुक्तं भगवद्गीतासु "मात्रास्पर्शास्तु कौन्तेय शीतोष्ण सुखदुःखदा" इति । तस्माद्रूपाणि चक्षुपैवोत्पाद्यन्ते, चक्षुपैव ध्रियन्ते, तत्रैव च लीयन्त इति वैदिकं दर्शनम् ।

[२] सर्वमिदं जगत्कर्मभूतम्, क्रियते, उत्पाद्यत इति कर्म । क्रियावाचको वा प्रसिद्धः कर्म शब्दः । सर्वं दृश्यं जगच्च क्रियाया एव परिणतिरित्यग्रे ग्रन्थ एव प्रतिपाद्यम् । तानि सर्वाणि कर्माण्यात्मन्येव ध्रियन्ते । सर्वेषामाधारभूत आत्मैवेति । यद्वा नाम, रूपम्, कर्म—इति त्रयं जगत् । तेषां विधारका वाङ्मनः प्राणा आत्मनस्त्रयो अंशाः । इह चक्षुः पदमिन्द्रियवोधकमिन्द्रियसमष्टेर्मनस उपलक्षकम् । आत्मपदं च प्राणवोधकमिति ज्ञेयम् प्राणस्यैव सर्वक्रियाजनकत्वादिति । ततश्च कर्मणाम् क्रियाणाम् आत्मा प्राणः धारक इत्यादि ।

[३] यस्माद् यदुत्तिष्ठते—उत्पद्यते तत्तस्य उत्थम् । उत्थमेव सदुक्थमुच्यते वैदिकपरिभाषायाम् । यच्च सर्वस्मिन् कार्ये समरूपेण तिष्ठति, तत्सामेत्युच्यते । यद्विभर्ति, तद् ब्रह्म । उपादानकारणे त्रीण्येतानि लक्षणानि समन्वियन्ति । तत एव कार्यमुत्पद्यते तेनैव ध्रियते—तच्च समभावेन सर्वस्मिन् कार्ये व्याप्नोति । षोऽन्त कर्माणि इति धातोर्वा साम शब्दः, तेन तत्रैव सर्वं कार्यं जातं लीयत इत्यप्यर्थः । एतेन सर्वजगदुपादानं ब्रह्मेत्युक्तं भवति । सर्वमिदं द्वादशमं पद्यं शतपथब्राह्मण चतुर्दशकाण्डरूपस्य वृहदारण्यकोपनिषदः (३ अध्या ६ ब्रा० १—३ कण्डिका) अंशानुवादः ।

## (२) रसबलाधिकरणम्

[१]ब्रह्म श्रुतौ तद् रस इत्युदीरितं परास्य शक्तिर्बलमित्युदीर्यते ।
[२]बलं रसाद् भिन्नमिदं न गण्यते न श्रौतमद्वैतमसौ विरुद्धयते ॥१३॥

---

१ 'रसो वै सः' इति सुप्रसिद्धतैत्तिरीयकश्रुतिमनुसृत्य ब्रह्मणो रससंज्ञात्र व्यवहरिष्यते। निर्धर्मकमपरिणामि विभु ब्रह्म कथं जगदुपादानं भवतीति शङ्कायां ब्रह्मणः शक्तिः श्रुतौ पुराणादिषु च सर्वत्र स्वीक्रियते "ते ध्यान योगानुगता अपश्यन् देवात्मशक्ति स्वगुणैर्निगूढाम्" (श्वेताश्वतरोपनिषदि १ अ० ३ मं०) "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान बल क्रिया च (श्वेताश्व अ० ६ म० ८) इत्यादि श्रुतिषु शक्तिपदं स्पष्टं श्रूयते। अन्यत्र ब्राह्मणेषु क्वचिदीक्षापदेन, क्वचित्तपः कर्मादि शब्दैश्च ख्याप्यते। उक्ते ऋग्वेदस्य नासदीय सूक्ते च 'आनीदवातं स्वधया तदेकम्' इति स्वधापदेन शक्तिरेव ख्यापिता। पुराणादिषु च प्रश्नोत्तराभ्यां स्पष्ट-मुक्ता। सा शक्तिरिह ग्रन्थकृता बलशब्देन व्यवह्रियते। बलम्, शक्तिः, क्रिया—इत्येक एवार्थः। स्वापदशायाम्—अकुर्वद्दशायां बलमित्युच्यते, जागरिता कुर्वद्रूपा शक्तिः, तस्याः परिणतिस्तु क्रियेत्यग्रिमपद्ये उच्यते। जगत्सृष्टेः पूर्वं महाप्रलयदशायां शक्तिः प्रसुप्तेव भवतीति बलशब्देनैवात्र निर्देश आदृतः। 'स्वाभाविकी ज्ञानबलक्रिया च' इत्युक्त श्रुतौ हि तिस्रोऽप्यवस्था स्फुटं निर्दिष्टाः। येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः। तेनेशितं कर्म विवर्तते पृथिव्यप्तेजोऽनिलखानि चिन्त्यम्, श्वेताश्वतर ६ अ० २ म०) इति श्वेताश्वतर श्रुतौ च शक्तिरेव कर्मशब्देनाम्नाता, तद्विवर्ताश्च पृथिव्यादय उक्ताः। तस्य कर्मणः क्रियापरपर्यायस्यातिसूक्ष्मावस्थाया बलशब्देन निर्देशो युक्त एव। बृहदारण्यकोपनिषदि आरम्भं च "तन्मनोऽकुरुत, आत्मन्वी स्यामिति, सोऽर्चन् श्राम्यन्नचरत्" इति अर्चन-श्रम-चरण शब्दैः कर्मैव निर्दिष्टं बोध्यम्। "संशितं वीर्यं बलम्" (शतपथ ६।६।३।१४) "बाह्वोरेव बलं धत्ते" (शत० १३।३।२।५) इत्यादौ अकुर्वद्रूपशक्तिवाचको बलशब्दः श्रुतिषु प्रसिद्धः। "इन्द्रो बलम्" (शत० ११।१४।३।३) इत्यादौ च प्राणरूपस्येन्द्रस्य बलत्व-मुक्तम्, प्राण एव च ब्रह्मणो मुख्या शक्तिरिति मुख्यशक्तौ बलशब्दप्रयोग उपपन्नः। शत-पथस्य चतुर्दशकाण्डे (अ० ८ ब्र० १५ क० ४) बृहदारण्यकोपनिषदि (७अ० १३ ब्रा० ४-६क) तु 'नमस्ते तुरीयाय दर्शनाय पदाय परोरजसे, इति गायत्र्युत्तरभागव्याख्याने "सैषा गायत्री एतस्मिन् तुरीये दर्शने पदे परोरजसि प्रतिष्ठिता, तद्वै तत् सत्ये प्रतिष्ठिता, तद्वै तत् सत्यं बले प्रतिष्ठितम्, प्राणो वै बलम्, तत्प्राणे प्रतिष्ठितम्। तस्मादाहुर्बलं सत्याद् गरीय इति। एवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता" इति स्पष्टमेव बलस्य सर्वप्रतिष्ठारूपत्वमुक्तम्। सत्यस्य रसस्यापि बलं प्रतिष्ठेति १९ पद्ये वक्ष्यते।

२ मूलतत्त्वरूपेण रसबलयोर्द्वयोरभ्युपगमे अद्वैतं श्रुत्युक्तं न सिद्धयेदिति शङ्का निरस्यते। पृथक्सत्ताकपदार्थद्वयस्वीकार एव द्वैतं स्यात्। बलस्य तु पृथक् सत्ता नास्ति, रसात् पृथक् क्वापि कदाप्यनुपलब्धेः। तत एव द्वैतं न वक्तुं शक्यते। यथा हि महावस्त्रखण्डेन निर्मित

सुप्तं वलं जागरिता तु शक्तिः क्रिया तदीयः परिणाम इत्थम् ।
प्रोच्यन्त एकस्य वलस्य नूनं भिन्नैः पदैस्तित्र इमा अवस्थाः ॥१४॥

[१]धर्मो द्विधा तत्र रसो बलं च प्रोक्तौ बलोपेतरसः स धर्म्मी ।
परस्परेणायुतसिद्धमेतद्धर्मद्वयं धर्मि तदस्ति सर्वम् ॥१५॥

रसः स धर्म्मोऽस्ति बलं च धर्मो निर्धर्मकौ तौ प्रथमौ हि धर्मौ ।
अन्यस्तु धर्मोऽस्ति न यत्र धर्मे निर्धर्मकं तं प्रवदन्ति धर्मम् ॥१६॥

[२]धर्मस्य सत्तानुगतस्य मौलिके धर्मे निषेधोऽत्र विधीयते बुधैः ।
न भातिसिद्धा बहवोऽत्र भासिता धर्म्मा अपोह्यन्त इति प्रतीयात् ॥१७॥

[३]ततः परेस्मिन् यदतः परं परे ये के च धर्म्माः कथिताः परात्परे ।
ते भातिसिद्धा अवरे तु ते पुनः क्षरेऽक्षरे वा द्विविधा इति स्थितिः ॥१८॥

---

उष्णीषेऽनुगता महावस्त्रावयवाः, तत्रानुगतास्तन्तवः, तत्रानुस्यूतं तूलम् , तूलेऽनुगताः कार्पासावयवाः, तत्राप्यनुगता मृत्, मृद एव कार्पासस्योत्पत्तेः । एवं सत्यपि षडत्र पदार्था इति न कोऽपि व्यवहरति, एवमेव तूष्णीषं वदन्ति । तत्र न तेषां पृथक् सत्ता अपि तु मृद एव सत्तया कार्पासस्य सत्त्वम्; कारणसत्तैव कार्येण गृह्यते । कार्पाससत्तां तूलम्, तत्सत्तां वसनखण्डं गृह्णातीत्येकत्वमेव तत्रोच्यते, तथैव रसेनैव वलं सत्तावदिति । द्वित्वं नास्तीति भावः ।

[१] इमौ रसबलाभिधौ द्वावपि धर्मरूपौ, न तु धर्मिरूपौ, अत्र धर्मान्तराभावात् । अनयोः समवायस्तु धर्मी भवति आभ्यामेव धर्माभ्याम् । तदेवं धर्म एव धर्मिणं जनयतीति निर्दिष्टमत्र दर्शने ।

[२] द्विविधा हि भवन्ति धर्माः—सत्तासिद्धाश्च, केवलभातिसिद्धाश्च । येषां स्वरूपं धर्मिणि स्पष्टं प्रतीयते, ते सत्तासिद्धाः—यथा घटादौ रूपस्पर्शादयः । ये तु केवलं बुद्धयैवारोप्यन्ते, अन्यसापेक्षाश्च भवन्ति, न च धर्मिणि तत्स्वरूपं प्रतीयते, न वा तदपगमे वस्तुनः कापि हानिः—ते भाति सिद्धाः—यथा घटादौ द्वित्वत्रित्वादि संख्याः, घटान्तरापेक्षा दैर्घ्य-वैपुल्य स्थौल्याद्याः परिमाणरूपाः, संयोग-विभाग पृथक्त्वादयश्च । तदत्र रसबलयोः सत्तासिद्धाः केऽपि धर्मा न सन्ति बुद्धया तु व्यवहारार्थमेकत्व द्वित्व पृथक्त्वाद्या आरोप्यन्त एव । तैरेवात्रापि व्यवहारः स्यादिति ।

[३] अव्ययाक्षराक्षर नामकास्त्रयः पुरुषा अनुपदमेव वक्ष्यन्ते । अयं रसबलसमष्टिरूपस्तु समवायः परात्परः । क्षरः-अवरः, अक्षरः-परावरः, अव्ययः-परः, सर्वोत्कृष्टत्वात् , सर्वप्रथमत्वाच्च । अयन्तु रसबलसमवायो अव्ययादपि पर इति परात्पर उच्यते । ततः यद्, अतः परं परे-अव्यये, ततोऽपि परे परात्परे च ये धर्मा अत्र ग्रन्थ, श्रुत्यादिषु वा कथिताः, ते भातिसिद्धाः, पुनः अपरे अक्षरे क्षरे वा सत्तासिद्धाः, भातिसिद्धाः इति द्विविधा अपीति स्थितिः । इति पद्यान्वयः ।

## (३) संज्ञाधिकरणम्

[१]रसोऽमृतं नाम बलन्तु मृत्यु[२]र्बलं न चेत्स्याद् रस[३] एव किं स्यात् ।
रसो न चेत्स्यात् क्व बलं नु तिष्ठेत् तस्मादिमौ नित्ययुतौ हि धर्म्मौ ॥१९॥

[४]चित्तस्य यद्वद्विषयप्रसङ्गादनेकरूपैर्द्रवणाद् रसाख्या ।
बलप्रसङ्गाद् बहुरूपतास्य प्रदृश्यते तेन रसोऽयमुक्तः ॥२०॥

रसं हि लब्ध्वा सुखिता यतस्तत् सुखं रसो ब्रह्म सुखं रसस्तत् ।
रसोऽमृतं ब्रह्म किलामृतं यत् ततोऽमृतं ब्रह्म रसं वदन्ति ॥२१॥

बलं जले हि त्रिपथानुगं भवेदधश्च तिर्य्यक् च यथोर्ध्वतश्च खे ।
एवं यदत्र त्रिपथानुगं बलं पश्यन्ति तस्मात् प्रवदन्ति तं रसम् ॥२२॥

[५]आदाय चादाय रसं यतो बलं करोति नानाविधसत्त्वसर्जनम् ।
ततो रसानां सघनं यदिष्यते तस्मादयं नाम रसः प्रसिद्ध्यति ॥२३॥

[६]आवेष्टनं यत् परितः परेण परस्य बन्धाय दृढं श्लथं वा ।
तदुच्यते संवलनं रसस्य येनास्ति तत् सम्वलनं बलं तत् ॥२४॥

[७]स ज्ञायते तद्द्व्युभयं पवित्रं पाप्माऽभु तुच्छं सदसत् स्थितं यत् ।
विद्याऽप्यविद्याऽप्यमृतं च मृत्युः पूर्णं च शून्यं तदकर्म कर्म ॥२५॥

---

[१] रसवलयोः श्रुतिप्रसिद्धानि संज्ञान्तराण्यप्यत्रोच्यन्ते ।

[२] मृत्युनैवेदमावृतमासीद्, अशनायया, "अशनाया हि मृत्युः" (बृहद् १।२।१) इत्यादौ मृत्युपदाशनायापदाभ्यां बलमेवोच्यते ।

[३] बलाख्यां शक्तिं विना रसः किमपि कर्तुमशक्तः, शक्तिं विना करणायोगात्, रसं विना तु बलस्य स्थितिरेव न स्यात्, निराधारायाः शक्तेः क्रियाया वा क्वाप्यदर्शनादिति द्वयमपि स्वीकर्तुमावश्यकं युक्त्या ।

[४] रस शब्दस्य शृङ्गारादिषु वृत्तिविशेषेषु, आनन्दे जले च लोके प्रवृत्तिः । तेषां त्रयाणामपि सादृश्यमत्र त्रिभिः पद्यैः ख्याप्यते । ब्रह्मण आनन्दरूपता तु वेदान्तेषु प्रसिद्धा, ग्रन्थकृता च संशयतदुच्छेदवादे बह्वीभिर्युक्तिभिः प्रसाधिता । इहापि प्रकरणान्तरे साधयिष्यते ।

[५] सारभागेऽपि रसशब्दः प्रसिद्धः । रसपदाभिधेयं मूलतत्त्वमेव जगति सर्वेषु पदार्थेषु सारभागः । रसमेवादाय तदाधारेण बलं सर्वानर्थान् रचयतीति । अस्यैव सर्वत्र सघनं नाम समवायः । तस्मात्साररूपत्वादप्ययं रसः । पूर्वपद्योक्तं बलानां त्रिपथानुगत्वं चाग्रे मूल एव प्रपञ्चयिष्यते ।

[६] बल शब्दस्यार्थसंगतिमाह । बल धातुर्वेष्टने । इदं च शक्त्यात्मकं बलं रसं परितो वेष्टयति तरङ्गा इव जलम् । तस्माद्बलशब्दोपपत्तिः ।

[७] पवित्रम्, आभु, सत्, स्थितम् (स्थिरम्), विद्या, अमृतम्, पूर्णम्, अकर्म—इत्येतैः शब्दैः श्रुतिषु रस आख्यायते । तद्वैपरीत्येन पाप्मा, तुच्छम्, असत्, यत्, अविद्या, मृत्युः, शून्यम्, कर्म इति शब्दैस्तु शक्तिरूपं बलं ख्याप्यते ।

## (४) निर्वचनाधिकरणम्

[१]जगन्निरुक्तं ह्यनिरुक्तमित्थं द्विधा निरुक्त्या तु भवेन्निरुक्तम् ।
उन्मुग्धमव्याकृतनिर्विकल्पं पूर्वं निरुक्तेरनिरुक्तमुक्तम् ॥२६॥

इदं निरुक्तं यदनन्तविश्वं शश्वद्विभात्यस्य हि नोपरामः ।
यच्चाविनाशि स्थितमत्र किञ्चिद् ब्रह्मानिरुक्तं तदुदाहरामः ॥२७॥

तच्चानिरुक्तं द्विविधं हि सर्वानिरुक्तमापेक्षिकमन्यदाहुः ।
सर्वानिरुक्तं प्रथमं तदेकमापेक्षिकं स्याद्बहुधा प्रयुक्तम् ॥२८॥

[२]सर्वानिरुक्तं हि निलीनमेवान्यस्मिन्न विज्ञायत एव वै तत् ।
विज्ञेयमन्यत्तु निरुक्तरूपं तथा निरुक्ते च निलीयते तत् ॥२९॥

ब्रह्मेत्यदः स्यादनिरुक्तमाद्यं रसो बलं चेत्युभयं निरुक्तम् ।
बलाद्रसाच्चाप्यनिरुक्तरूपान्महत्पराद्वीह भवेन्निरुक्तम् ॥३०॥

[३]भूयोऽनिरुक्तं द्विविधं तदुक्तं नभ्यं च सर्वं च तदु प्रतिष्ठा ।
नभ्योऽणिमा सर्वमिहास्ति भूमा सर्वे निरुक्ता अनिरुक्तनिष्ठाः ॥३१॥

नभ्यं तु रूपं न विशेषतोऽस्मिन् शक्येत विज्ञातुमलक्षणत्वात् ।
तदाश्रितं यत्त्वनिरुक्तमन्यत् सर्वं ततो निर्वचनं कृतं स्यात् ॥३२॥

[४]अव्याकृतव्याकरणे विभक्तान्येकस्य रूपाणि बहूनि यानि ।
विवर्तरूपाण्युदयं लभन्ते शक्त्या निरुक्तानि मतानि तानि ॥३३॥

---

[१] विभक्त रूपं स्फुटं ज्ञायमानं निरुक्तमुच्यते । विभागः—स्फुटतैव निरुक्तिः । जगद्विभागात्पूर्वं ब्रह्म तु उन्मुग्धरूपम्, अव्याकृतम् निर्विकल्पकमुच्यते । तदेव विश्वरूपेण निरुक्तं भवति । तत्र च परिणामिनि अपरिणमद् ब्रह्मानुस्यूतं सत्ता चेतनादिरूपेण ।

[२] यत्कदापि न ज्ञायते, सदान्यस्मिन् निलीनमेव तिष्ठति, तत्सर्वानिरुक्तम् । यत्तु पृथग् भूत्वापि परस्मिन्निलीनं प्रतीयते लक्षणेन पार्थक्यं ज्ञायते उन्मुग्ध रसबलात्मकं पृथक् तु नोपलभ्यते, तदापेक्षिकमनिरुक्तम् । ब्रह्म सर्वथैवानिरुक्तम्, रसो बलं च द्वितीयविधम् । तद्धि लक्षणेन ज्ञायते । लभ्यते तु महति परे वा निलीनमेव । महत् परं चाग्रे व्युत्पाद्यम् ।

[३] प्रकारान्तरेण अनिरुक्तद्वयं व्याख्यायते । प्रत्येक पिण्डे एकः केन्द्रभागः, स वैदिक परिभाषायां 'नाभिः' इत्युच्यते । तत्र या शक्तिः सा 'नभ्यः प्रजापतिः' इत्याख्यायते वेदे । सा विशिष्य न ज्ञातुं शक्यते—इति सर्वथा अनिरुक्ता । पिण्डस्य वक्ष्यमाणवेदप्रकरणरीत्या यावत्पर्यन्तं व्यास, स तु सर्वः प्रजपतिः—इत्युच्यते । तत्तु अवयवशो व्याख्यातुं शक्यते, न तु सर्वत्र सर्वरूपेणेति तद् द्वितीयविधमनिरुक्तं ज्ञेयमिति पद्यद्वयेनाख्यातम् ।

[४] अव्याकृतस्य अविभक्तस्य, व्याकरणम् विभाग एव निरुक्तिः । पूर्वस्मिन् पद्यद्वये यद्धि 'अणिमा, भूमा' इति अनिरुक्त द्वयमाख्यातम् । तत्र नभ्यम् नाभौ केन्द्रे स्थिता या

[१]स्वशक्ति संसर्ग कृतोऽवतारः संसर्ग वैचित्र्यकृतो विकासः ।
विकासतो वाप्यवतारतो वाप्यनेकधा निर्वचनप्रयासः ॥३४॥

[२]अग्रे विकासेऽपि तथाऽवतारे भूयोपि भूयोऽप्यनिरुक्तपूर्वम् ।
करिष्यते निर्वचनं यदेषां तत्रानिरुक्तं तु निरुक्तपूर्वम् ॥३५॥

यतो विकासोऽथ यतोऽवतारस्तच्चानिरुक्तं प्रकृतिर्हि सास्ते ।
परिग्रहा ये परिवारभूताः सर्वे निरुक्ताः प्रकृतौ सि[३]तास्ते ॥३६॥

अज्ञेयतोऽर्वागखिलं निरुच्यते तत्रानिरुक्तस्य निरुक्तिरिष्यते ।
ज्ञातुं यतोऽज्ञातमिह प्रयस्यते त ब्रह्म[४]विज्ञानमिदं प्रकाश्यते ॥३७॥

## (५) द्वैतो[५]पपादाधिकरणम्

न चासतः संभवतीह भावः सतोऽप्यभावो न मतः कथं[६]चित् ।
[७]प्रवृश्यते तूभयथापि तेनामृतं च मृत्युं च पृथग् द्विधाहुः ॥३८॥

---

अणुतमत्वेन ख्याप्यमाना शक्तिः, सा सर्वथा अनिरुक्ता, तस्या विभाजनासंभवात् । वक्ष्यमाणानाम् ऋग्यजुः साम्नाम् अन्तिमं साममण्डलं सर्वम्--इत्याख्यायते तत्र सर्वेषामृगादीनामन्तर्भावात् तदपि अतिमहत्त्वादेव निर्वक्तुं न शक्यते, परं अवयवशस्तु निरुच्यते—इत्यापेक्षिकमनिरुक्तं तद् द्रष्टव्यम् । तयोर्मध्ये तु यानि रूपाणि, तानि केन्द्रशक्तेरेवोदितानि, तस्या एव विवर्तरूपाणि । अतात्त्विकोऽन्यथाभावो विवर्त उच्यते, केन्द्रशक्तिः स्वयं सततमेकरूपेण स्थिताप्येतानि जनयति, तस्माद्विवर्तरूपाण्येतानि तयैव शक्त्या उत्पादितानीत्येतत्पद्यार्थः । केन्द्रशक्तिविज्ञानमिदमतिगम्भीरम्—अग्रेऽपि विवृतमिदं स्यात् ।

१ ननु अनिरुक्तं भवता कथमुच्यते कथं वा विज्ञायते ? अवतारविकासाभ्यां ज्ञायते निरुच्यते चेत्युत्तरमाह ।

२ अनिरुक्ताद् निरुक्तमुत्पद्यत इति नो दर्शनम् । ज्ञानन्तु पूर्वं निरुक्तस्य, तत एव चानिरुक्तानुमानमिति वैपरीत्येनेति प्रपञ्च्यते पद्यैरेभिः ।

३ निरुक्ता अनिरुक्ते सिताः–बद्धाः ।

४ निरुक्ताज्जगतः तज्जनकस्यानिरुक्तस्य ब्रह्मणो विज्ञानमिति भावः ।

५ सद् ब्रह्म, असत्तु कर्म, द्वयोरेव मूलतत्त्वरूपेण स्वीकार आवश्यक इतीत्यधिकरणे प्रपञ्च्यते ।

६ "नासतो विद्यते भावो नाभावो विद्यते सतः" इति भगवद्गीता (अ २) अनुसन्धेयात्र ।

७ लोके तु असतां घटपटादीनामुत्पत्तिः, सतां च नाशोऽप्युपलभ्यते । तस्मात्तत्त्वद्वयम्—अमृत मृत्युनामकं स्वीक्रियते, एकं स्थिरम् एकं च परिवर्तनशीलम् इति ।

[१]स्थितिर्न यत्रास्ति कथं स गच्छद् गतिर्न यत्रास्ति न वा स्थितं तत् ।
एकात्मकं तत्परिवर्तशीलं विरुद्धधर्म्मद्वययोगि मर्त्यम् ॥३९॥

विना बलेनैकरसो रसो भवेत् स नानुयुज्येत विकारतः क्वचित् ।
अविक्रियादेव रसात्त्विदं जगन्न चोपपद्येत विकुर्वदाकृति ॥४०॥

अनाश्रयं क्वापि बलं न दृश्यते बलाश्रयं चेदथ तद्बलं पुनः ।
बलाश्रयं स्यात्तदिहान्ततो बलं यत्राश्रितं तन्न बलं रसो हि सः ॥४१॥

बलं हि कर्म्मात्मिकमप्रतिष्ठितं स्वभावतो विक्रियते प्रतिक्षणम् ।
ततः प्रतिष्ठातुमिदं न संभवेद् विना रसेन स्वमहिम्नि तद्बलम् ॥४२॥

[२]तस्मादिदं यत्र बलं प्रतिष्ठितं विलक्षणत्वं जनयत् प्रदृश्यते ।
अकर्म्मं तद्रूपमवश्यमिष्यते स्थितं सदा नृत्यति यत्र तद्बलम् ॥४३॥

[३]निस्तारतम्यं न विशिष्य गम्यं पाप्मातिरेकान्न तदस्ति रम्यम् ।
परेऽवरे वाप्य परावरे वा परात्परं गूढमिदं वदन्ति ॥४४॥

रसो बलं नास्ति बलक्षयोदये बलाश्रयस्यास्य रसस्य दृश्यते ।
तट[४]स्थता तेन विशेषरूपयोर्न चाविनाभाव इहेष्यते तयोः ॥४५॥

---

[१] विरुद्धयोरेकत्र दर्शने उदाहरणमाह—गतिस्थित्योरविनाभावो दृश्यते । गतिर्नाम परिणामः, स्थितिस्तु एकरूपता । तेनैव दृष्टान्तेन सर्वत्र स्थितिरपि गतिरपि, अर्थात् कूटस्थतापि, परिणामोऽपि चाभ्युपेय इति भावः । स्थिर पदार्थं विना गतेराश्रयः को भवेत्, कमालम्ब्य गतिस्तिष्ठेत् । स्थितिश्च यदि न स्यात्, तर्हि गतौ तीव्रत्वमन्दत्वभेदोऽपि नोपपद्येत, एकरूपैव गतिः सर्वत्र दृश्येत । यत्र तु स्थितिरधिका, तत्र गतिर्मन्दा उच्यते, यत्राल्पा तत्र तीव्रा उच्यते । तीव्रत्वेऽपि तारतम्यं भवत्येवेति स्थितिस्तत्रापि सिध्यति स्थितिरेवैकान्ततो भवेत्—तर्हि सर्वं कूटस्थमेव भवेत्, परिवर्तनं न स्यात्कुत्रापि । तस्मादुभयमपि सर्वत्राभ्युपेयम् । अयमेव प्रकारोऽग्रिमैः पद्यैः रसबलयोर्योजितः ।

[२] बलपरिणतिरेव क्रियेत्युदितं प्राक् । क्रिया स्वयं क्षणस्थायिनीति सा क्रियान्तरं धर्तुं न शक्नोति । यावद्धि तत्र क्रियान्तरमुत्पद्यते, तावदेव सा विलीना स्यात् । तस्मात् क्रियाया आधारः क्रियापेक्षया भिन्न एव स्वीकार्यः । स च क्रियाविलक्षण एव स्वीकार्यः । क्रिया क्षणिकेति स नित्य एव भवेत्, तत् क्रियापेक्षया भिन्नमिति 'अकर्म' उच्यते । तत्रैव कर्माण्युत्पद्यन्ते, विलीयन्ते च तत्रैव ।

[३] सर्वोपसंहारमाह-सर्वं वस्तु नवपुराणभावेन, तत्रापि तरतमभावेन परिवर्तमानं दृश्यते । क्रियाया अधिकेन प्रयोगेण तत्र पुराणतया अन्यता जायते । तथापि 'तदेवेदम्' इति प्रत्यभिज्ञायते । तस्मात् स्थिरं चलं च द्वयमपि मूलतया स्वीकार्यम् । स्थिरं चात्र निगूढं भवति । परावराद्याः पुरुषाः पूर्वमुक्ताः, तेषु पूर्वं पूर्वं निगूढं परत्र । परात्परस्तु सर्वत्र निगूढः ।

[४] बलस्य क्षये उदयेऽपि क्व बलाश्रयस्य रसस्य तटस्थता दृश्यते, रसस्य क्षयोदयौ न दृश्येते-इत्यर्थः । न हि अङ्गुलौ क्रियाया उपरमे अङ्गुलिरपि नष्टा भवति । तस्मात् क्रिया, तदाश्रयश्च पृथग्भूतावेवेति ।

## (६) वि[1]प्रतिपत्त्यधिकरणम्

कर्मैव विश्वं तदसत्स्वरूपं न ब्रह्म भिन्नं श्रमणा वदन्ति ।
ब्रह्मैव विश्वं प्लवतेऽत्र कर्म्मेति ब्राह्मणा ब्रह्मविदो वदन्ति ॥४६॥

शून्यं च दुःखं क्षणिकं स्वलक्षणं निस्सारकर्म्माद्वयवादितो मते ।
ब्रह्माद्वयं पूर्णसुखं सनातनं परोवरीणैकरसं परे विदुः ॥४७॥

येषामसद् ब्रह्म भव[2]न्त्यसारात्मानो ध्रुवं ते स्वयमप्यसन्तः ।
ब्रह्माविनाश्यस्ति सदेति येषां मतिः स्थिरात्मान इमे हि सन्तः ॥४८॥

[3]यथाऽभ्रखण्डावृतमर्कमण्डलं पृथग् दृशोऽस्पृशतां न जायते ।
सूर्य्यास्तिधीरेवमिहापि कर्म्मणा वृतेऽमृते धीः सहसा न जायते ॥४९॥

तदभ्रखण्डावृतदृष्टिमण्डलं न संस्पृशत्यत्र तदर्कमण्डलम् ।
[4]रविर्न चेत्तर्हि तदभ्रमण्डलं कथं तमस्याकलयेत्तमोमयम् ॥५०॥

तत्कर्मदोषावृतदृष्टिमण्डलं न ब्रह्म तद्व्यापकमाशु पश्यति ।
न ब्रह्म चेत् कर्म्म निराश्रयं कथं स्थितं भवेत् कस्य च सा क्रिया भवेत् ॥५१॥

तद् ब्रह्म तस्माद् पृथगिष्यते ध्रुवं तत्रैव तत्कर्म्म समस्तमास्थितम् ।
उदेति तत्रैव च तिष्ठति क्षणं लयं च तत्रैव तदेति खण्डशः ॥५२॥

[5]ब्रह्मैव तत् कर्म तदन्यदस्मात् कर्म्मेति निर्धारयितुं न शक्यते ।
ब्रह्मैव यद् ब्रह्मणि चिन्त्यमेतन्न ब्रह्म तत् प्राङ न यतो न पश्चात् ॥५३॥

ब्रह्मैव[6] तत्स्यादतिरिच्यते वा कर्म्मास्ति नूनं सदसत्स्वरूपम् ।
भेदेऽपि न द्वैतमिहोपकल्प्यं मृत्योरसत्त्वात् परतो हि सत्त्वात् ॥५४॥

---

[1] अत्र मतभेदो दृश्यते—श्रमणाः (बौद्धाः) क्रियैव जगत्, न तदाश्रयः कश्चिद् इत्यातिष्ठन्ते । श्रमः क्रिया, तद्वादित्वात्ते श्रमणाः । ब्रह्मैव मुख्यम् क्रिया तु तत्रैवोत्पद्यते विलीयते च इति ब्राह्मणा वदन्ति । उभयोर्मतमत्रोच्यते ।

[2] ते स्वमात्मानमप्यसारं वदन्तीति स्वोक्त्यैव 'असारात्मानः' इति परिहासः । असद्वादित्वात्स्वमप्यसन्तं वदन्ति इति ।

[3] यदि उभयमप्यस्ति, तर्हि सर्वैः कुतो न ज्ञायते-इत्यस्योत्तरमाह ।

[4] यदि सर्वथैव सूर्यो न भवेत्, तर्हि तमोमये जगति अभ्रमण्डलमपि न दृश्येत । तथैवात्राप्यनुसंधेयम् । यदि नाम ज्ञानरूपो रसो न स्यात्, तर्हि कर्मापि कथं ज्ञायेत-इतिभावः ।

[5] इमे ब्रह्मकर्मणी सर्वथा भिन्ने अभिन्ने वा–इति तु निर्धारयितुं न शक्यम् । कर्म पृथङ न दृश्यते-तस्मादभेदः सिद्धयति, क्षणिकं कर्म नित्ये ब्रह्मणि कदाचिद् दृश्यते, कदाचित्तु न दृश्यते, व्यक्तिरूपेण तस्य विनाशत्वात् । तस्माद् भेदोऽपि सिद्ध्यतीति भावः ।

[6] ब्रह्मण्येव कर्म दृश्यते-आश्रये एव क्रिया दृश्यते, ततः पृथगदर्शनात् । तेन क्रिया नाश्रयतो भिद्यत इति प्राप्तम् । अङ्गुलिक्रियातः प्रागप्यङ्गुलिरस्ति क्रियोपरमेऽप्यस्ति, तस्मा-

अनुक्षणं[१] यत्परिवर्तमानस्वरूपमस्ति स्थितमेव नित्यम् ।
विनश्यदेवास्त्यविनाशि तस्मात् त्रिधा विदां विप्रतिपत्तिरस्मिन् ॥५५॥

येषां सतोऽसद् भवतीह तेषां मुख्या स्थितिर्भक्तिरियं[२] निवृत्तिः ।
अथासतः सद् भवतीति वादे मुख्या निवृत्तिः स्थितिरेव भक्तिः ॥५६॥

न चासतः सन्न सतोऽप्यसद्वा कदाचिदस्तीति परं मतं यत् ।
असच्च सच्चेत्युभयं स्वतन्त्रं नाभूत्परस्मात्परमित्यवोचन् ॥५७॥

तत्रासतः सद् भवतीति वादे येषां त एते श्रमणाः प्रसिद्धाः ।
पूर्वं सदासीत् परतस्तु तस्मात् कर्मेदमित्थं तु वदन्ति विप्राः ॥५८॥

सदेव[३] नाग्रेऽप्यसदेव नाग्रे किन्त्वाभु तुच्छेन वृतं पुरासीत् ।
इत्याह सिद्धान्तमिह प्रजेशस्तेनोभयं तत् सदसत् तदासीत् ॥५९॥

---

दङ्गुलितो भिन्नैवाङ्गुलिक्रियेति प्राप्तम् । तत्रैकतरनिर्धारणासंभवाद् भेदाभेदाभ्यामनिर्वाच्यायाः क्रियाया मूलं मायेति वेदान्तिभिरभ्युपगतम् । कथमप्यस्तु पृथक् सत्ताभावाद् द्वैतं तु न शक्यते वक्तुमित्युपपादितं प्राक् ।

[१] प्रतिक्षणं परिवर्तनेऽपि अस्तिबुद्धिर्न विचलति । घटोऽस्ति, घटखण्डमस्ति, मृदस्ति, जलमिश्रणे पङ्कोऽस्ति—इति नामरूपपरिवर्तनेऽपि अस्तिबुद्धेरनपायात् । किमपि न दृश्यते-तत्रापि नास्ति इति अभावेन सहाप्यस्ति बुद्धिस्तिष्ठत्येव । तदत्र द्वये त्रेधा विचारः । सदेव मुख्यम्—सदसत्कर्मं तु कल्पितमेव । असदेव वस्तु, सत्ता तु प्रवाहात् कल्प्यते । उभयमपि स्वीकार्यमिति च । तदेव चतुर्भिः पद्यैः प्रपञ्चितम् ।

[२] निवृत्तिः—अभावः असत्त्वम् भक्तिः—गौणमित्यर्थः ।

[३] प्रजेशः-प्रजापतिः-ब्रह्मा तु नासदीयसूक्ते पूर्वोक्ते 'नासदासीन्नो सदासीत्तदानीम्' इति केवलासद्वादं केवलसद्वादं चेत्युभयमपि न पदेन निराकृत्य 'तुच्छयेनाभ्वपिहितं तदासीद्' इति सिद्धान्ते उभयास्तितावादं स्वीचकार । साध्येषु देवेषु प्रादुर्भूतेन ब्रह्मणा पृथक् पृथग् दश वादान् निराकृत्य समन्वयवादः प्रतिष्ठापित इत्युक्तं प्राक् । तदित्थमत्र समन्वयः कृतो यत्सद् असच्च-ब्रह्म कर्मंचेति यावद्, द्वयमपि मूले एवासीत् । किन्तु असत् कर्म तुच्छम्, तस्य स्वतन्त्रा सत्ता नास्ति पृथगनुपलम्भाद्, व्यक्तिरूपेण उत्पादविनाशशालित्वाच्च । रसः व्यापकत्वादाभु आभुपदं विभुसमानार्थकमेव । रसस्य ब्रह्मणः कस्मिंश्चिदपि देशे कस्मिंश्चिदपि च काले अभावो नास्तीति देशकालपरिच्छेदशून्यं मुख्य तत्त्वं तत् । बलन्तु तस्मिन् आभौ-रसे तिष्ठतीत्यभ्वमुच्यत इत्युक्तं प्राक् । आभौ भवमभ्वम्, छान्दसो ह्रस्वः । तच्च क्षणिकम्, प्रतिक्षणोत्पादविनाशशालि, परमाणुदेशावगाहि चेति अतिपरिच्छिन्नम् । रसे एव तदुत्पद्यते विलीयते च, तरङ्गा इव जले । तत एव तुच्छमुच्यते । परं तत्र संख्याकृतमनित्यमस्तीति व्यक्तिभेदेऽपि सर्वं देशं कालं च तदपि व्याप्नोति । कोऽपि देशः कोऽपि कालश्च तद्विनाकृतो नास्तीति । व्यक्तीनामुत्पादविनाशयोः सत्त्वेऽपि समष्टिरूपेण तदपि पूर्णमुच्यते 'पूर्णमदः पूर्णमिदम्' इत्याद्यासु श्रुतिषु । तदेवं मूले एवोभयं ब्रह्मणा नासदीयसूक्ते स्वीकृतम् ।

## (७) वैधर्म्म्याधिकरणम्

न चा[१] नयोर्देशकृतं पृथक्त्वं स्वरूपतस्त्वस्ति च नास्ति चेह ।
बुद्धं पृथक् स्यान्न पृथक् तु सुप्तं पृथक्त्वमेवास्ति तयोस्तु धर्म्मे ॥६०॥

रसप्रतिष्ठस्य बलस्य देशो रसो विभुत्वात्तु रसस्य नान्यः ।
ब्रह्मैव सर्वस्य ततः प्रतिष्ठा[२] न स्यात्प्रतिष्ठा क्वचिदप्रतिष्ठा ॥६१॥

रसप्रसुप्तस्य बलस्य यद्वद्रसः स्वरूपं न रसात्पृथक् तत् ।
[३]रसेन भुक्तस्य बलस्य तद्वद्रसः स्वरूपं न रसात्पृथक् तत् ॥६२॥

रसे प्रबुद्धस्य बलस्य यद्वद् भवेत्स्वरूपं रसतो विभिन्नम् ।
[४]बलेन युक्तस्य रसस्य तद्वद् भवेत्स्वरूपं रसतो विभिन्नम् ॥६३॥

[५]परस्परान्वाहितभिन्नरूपयोः परस्परेण व्यतिरिक्तयोस्तयोः ।
सर्वात्मना विप्रतिपन्थिवृत्तिता स्यादन्यथा द्वैतविकल्पना वृथा ॥६४॥

---

पृथक् सत्ताया अभावाद् द्वैत्यं तु न स्वीकृतम् । सत्ता रसेनैव बलं सत्तावदिति पार्थक्याभावात् 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' इति श्रुतिर्न विरुद्धयते । न च तथापि विजातीय-द्वैतं तु कथंचित् प्रसक्तमेवेति शङ्कनीयम्, तदानीं बलस्य प्रसुप्तत्वात्—प्रसुप्तस्य च रसानति-रेकादिति वक्ष्यति । न च 'नेह नानास्ति किञ्चन' इति नैवात्मिकमद्वैतमपि विरुद्धयते, प्रबुद्ध-स्यापि बलस्य पृथक् सत्ताया अस्वीकारादित्यसकृदवोचाम । अनिर्वचनीयेन स्वीकृतेनापि अद्वैतं न भज्यत इति सिद्धान्तसरणिः । तुच्छत्वादसदेवोच्यते बलम् । अनिर्वचनीयत्वेऽपि सद्भिन्नत्वमेवात्रासच्छब्दार्थः । सोऽयं सदसत् समवायो मूलत एव स्वीकृत इति पद्यार्थः ।

१ यद्यपि रसबलयोर्देशकृतं पृथक्त्वं न शक्यते वक्तुम् रसस्य विभुतया तद्रहित-देशस्यासंभवात्, बलस्य रसाश्रितत्वेन तद्देशताया एव सिद्धत्वाद् जलतरङ्गवत् । स्वरूपेण च द्वयमपि, पृथक्त्वम् अपृथक्त्वं च, प्रबुद्धस्य सुप्तस्य च शक्यते वक्तुम् । सुप्तस्य स्वरूपं न पृथक् प्रतीयते, प्रबुद्धस्य तु पृथक् स्वरूपं प्रतीयत इति । अङ्गुली यावत् क्रिया न जायते, तावदङ्गुलिरूपमेव बलम् । क्रियोत्पत्तिदशायान्तु अङ्गुलितः पृथक् क्रियास्वरूपमङ्गुल्याश्रितं प्रतीयत एव तत एव अङ्गुली क्रियेत्याधाराधेय भावो व्यवह्रियते । धर्मस्तु उभयोः पृथक् पृथगिति वैधर्म्यमवश्यं वक्तव्यम्, तदेवोपपाद्यते । उभयोरपि धर्मौ भातिसिद्धौ एवेत्युक्तं प्राक् ।

२ सदा रस एव बलाश्रयः । आश्रय एव प्रतिष्ठा शब्देनोक्तः ।

३ रसेन भुक्तस्य रसे लयं गतस्य अस्तस्येति यावत् ।

४ यदा अङ्गुलौ क्रिया भवति, तदा निष्क्रियाङ्गुलितः तत्र वैलक्षण्यं प्रतीयत एव । तद्वद् बलजागरेपि रसस्य पूर्वापेक्षया वैलक्षण्यं भवत्येवेति ।

५ यदि वैधर्म्यं न स्यात् तर्हि बलं किमर्थं कल्प्येत ।

[१]ब्रह्मामृतं पूर्णमखण्डमद्वयं शान्तं शिवं शाश्वतिकं तथाऽभयम् ।
अनादि चानन्तमसङ्गमव्ययं तन्निर्गुणं निष्कलमेकमक्रि[२]यम् ॥६५॥

क्षुब्धं बलं तु क्षणिकं प्रदेशवद् घोरं[३] मितं शून्य[४]मनेकमल्प[५]वत् ।
प्रतिक्षणापूर्वमिति स्व[६]लक्षणं क्रियात्मकं भूरिकलं महा[७]गुणम् ॥६६॥

[८]बृहत् सदा यत् परिबृंहणं यत् तदुच्यते ब्रह्म तदक्षयं स्यात् ।
अथात्र संसृज्य विसृज्यते यत् तदुच्यते कर्म्म स वै[९]विसर्गः ॥६७॥

ब्रह्मास्ति नित्यं जगतः प्रतिष्ठा तत्सर्वबीजं तदयं[१०]विकाशः ।
कर्म्मैव तस्यास्ति बलं[११]स्वरूपं तदस्ति नास्तीति सतो विनाशः ॥६८॥

विश्वस्य तूलस्य यदेकमूलं ब्रह्मातिमात्रं धृतसर्वकर्म्म ।
अविश्व[१२]नाशे क्वचिदेकनाशेऽप्यहो विनाशं कथमस्य मन्ये ॥६९॥

[१३]न नाश्यते नोत्क्रमते न हीयते न वा विकारं भजते न जीयते ।
न बद्धमुक्तं तदिहाधऊर्ध्वयोर्बहिस्तथान्तः समरूपतः स्थितम् ॥७०॥

---

[१] विरुद्धा धर्मा एव रसबलयोः ब्रह्मकर्मणोः पद्यद्वयेन दर्श्यन्ते । सर्वेऽपीमे भाति सिद्धाः ।

[२] देशत्यागरूपा परिणामरूपा च कापि क्रिया तस्मिन्न संभवति विभोरखण्डस्य तदसंभवादित्यक्रियमुच्यते । यद्यपि बलं तदाश्रितम्, बलपरिणतिभूतं कर्मापि तदाश्रयेणैवोत्पद्यते । परं तत्रोत्पन्नमपि कर्म न तं विकरोतीत्येवानिर्वचनीयत्वम् । एतच्च निर्विकाराधिकरणे दृष्टान्तैरुपपादयिष्यते मूले ।

[३] दुःखयोनिः । एतदग्रे उपपाद्येत मूल एव ।

[४] सत्तारहितम्, पृथक् सत्ताभावादिति ।

[५] अणु प्रदेशम् ।

[६] क्षणिकानि सर्वाणि कर्माणि विलक्षणानीति एकस्य दृष्टान्तोऽपरत्र न संभवतीति भावः ।

[७] क्रियैव धारावाहिकतां गता गुणरूपतां प्रतिपद्यत इति सर्वगुणरूपमेतदेव, गुणाश्रयतापि चात्रैव । रसे गुणानुत्पादात् ।

[८] गम्भीरत्वादर्थस्य बुद्धावारोपयितुं पुनः पुनरुच्यते ।

[९] विसृज्यते-तस्माद्विसर्गोऽपि कर्मोच्यते । विसर्ग एव सर्गः ।

[१०] परिणतेरभावाद् ब्रह्मणो विकाश एव जगद्वाच्यम् ।

[११] बलस्य दृष्टं रूपं कर्मैव तत् क्षणमात्रमस्ति, परतस्तु नास्तीति सतः उत्पन्नस्य तस्य विनाशोऽपि दृश्यत इत्यन्वयः ।

[१२] जगति व्यक्ति रूपेण ते तेऽर्था नश्यन्ति जगत्तु समष्टिरूपेण न कदापि नश्यतीति जगन्मूलस्य नाशः कथमुपगम्यताम् । विश्वस्य नाशाभावे मूलस्य नाशः कथं मन्येत इति अन्वयः ।

[१३] ब्रह्मलक्षणानि पुनरावर्त्यन्ते दाढर्याय ।

सदेव तु ब्रह्म न नास्ति कर्हिचित् सति[१] स्थितं कर्म्म ततः सदिष्यते ।
असत्तु[२] सत्तां कथमेति कर्म्म तन्न शक्यते वेत्तुमिदं कथञ्चन ॥७१॥

[३]यत्कर्तृ तत्कर्म यदस्य भोक्तृ तद् ब्रह्म चैतद् द्वयमस्ति भिन्नम् ।
कर्म्मैतदस्ति क्षणिकं ततस्तत् कथं स्वयं स्यात् स्वफलस्य भोक्तृ ॥७२॥

[४]कर्म्माणि यानि स्वयमुद्भवन्ति ततो जगन्तीह समुद्भवन्ति ।
क्रिया न चेत् स्यात् किमपीह न स्यात् कर्म्मैव कर्तृ प्रवदन्ति तस्मात् ॥७३॥

[५]बलेन कम्पश्च फलं च कर्म्म तन्नानाश्रयं नु प्रभवेत् कथंचन ।
बलेन कम्पे जनिते तदाहितो भोगो विशेषः स हि यत्र भोक्तृ तत् ॥७४॥

[६]रसोऽमृतं नाम बलं तु मृत्युर्ब्रह्मामृतं तद्यदकर्म्मरूपम् ।
मृत्युस्तु कर्म्मैव यदत्र नित्यं दृष्टं च दृष्टं च न दृश्यते च ॥७५॥

[७]ब्रह्मैकमस्त्यक्रियमिष्यते यतः क्रियाश्रयत्वेपि न नास्ति तत् क्वचित् ।
न मीयते तद् विभु चाव्ययं दिशा देशेन कालेन च रूपतोऽपि वा ॥७६॥

मृत्युः किमेको बहवोथ मृत्यवः किमेवमस्मिन् क्रियतां न संशयः ।
[८]एको ह्यणुश्चैष सदामृते ऽमृतः प्रजासु स व्याविशति त्वनेकधा ॥७७॥

---

[१] सति ब्रह्मणि स्थितत्वात् कर्मणः सत्ता प्रतीयते । ब्रह्मसत्तयैव तत् सत्तावदिति ।

[२] स्वयमसत् परसत्तया कथं सत्तावद् भवतीत्यनिर्वचनीयमिदम् ।

[३] क्रियाश्रयः कर्ता फलाश्रयन्तु कर्मेति वदन्ति वैयाकरणाः । कर्मत्वं कर्तृत्वं च नैकत्र भवतीति वेदान्तदर्शन उपपादितम् । अत्र कर्तृता कर्मपदवाच्यायां क्रियायाम्, भोक्तृता फलाश्रयता तु ब्रह्मणि इति द्वयोरपि स्वीकार आवश्यकः ।

[४] क्रियायां कर्तृत्वमुपपाद्यते । स्वयं क्रियापि अन्यस्योत्पत्तिरूपां क्रियां जनयतीति कर्तृत्वं नानुपपन्नम् ।

[५] ब्रह्मणि भोक्तृत्वमुपपाद्यते—बलं पूर्वं कम्पं क्षोभापरपर्यायं जनयति, तत्फलं देशत्यागरूपा क्रिया भवति । बलं कम्पो देशत्यागश्चेति त्रयमपि अनाश्रयं न दृश्यते । तस्मात् तदाश्रयं ब्रह्मैव मन्तव्यम् । क्रियाश्रयत्वाद् जगदुत्पादनाभिमुख्यं तत्र विशेषः, स एव भोगः । तथापि न तत्र विकार इति वैलक्षण्यं पुनः पुनरनुसन्धेयम् ।

[६] पूर्वोक्तान्युभयोर्नामानि निरुक्त्या व्युत्पाद्यन्ते । कदापि मरणासंस्पर्शाद् रसो ब्रह्म अमृतम् । नित्यं मरणधर्मतया मृत्युर्बलम् । स्वयं म्रियते, स्वसंबन्धात्परं मारयितुम्-आवरीतुं चेष्टते-तस्मात् मृत्युः । दृष्टनष्टरूपतात्र विवृता ।

[७] लोके दृश्यते परिच्छिन्ने वस्तुनि क्रिया कम्पं स्थानाच्च्युतिं च जनयति, यथा ७४ श्लोके उक्तम् । विभौ तु अवयवाभावान्न कम्पः । सर्वत्र सत्त्वाच्च न स्थानच्युतिः, अव्ययत्वान्न परिणामः तेन तत्र क्रियाविशेषं कमपि जनयितुं न शक्नोति, स्वयमेव तु शाम्यतीति ।

[८] अमृते लीनरूपेण स्थित एक एव । विभागज्ञानाभावात् । जगति दृश्यमानस्त्वनेक एवेति स्फुटम् ।

पश्यन्ति विज्ञा अमृतं पवित्रं मृत्युन्तु पाप्मानमुदाहरन्ति ।
बलानुसारादुभयोः प्रसङ्गात् सर्वं पुनात्येव च पूयते च ॥७८॥

[१]पुनाति पाप्मानमिदं पवित्रं पाप्मा च तस्मै कलुषं करोति ।
एकान्ततस्तत्र सदेव नासत् जगत्प्रसन्नं न न क[२]ल्मषं वा ॥७९॥

आयु[३]ज्य बन्धेन विशिष्य यस्मादुपैति भावोदयनं विकारम् ।
विज्ञानमस्याव्रियते यतो वा स एष पाप्मावृणुते ऽमृतं तत् ॥८०॥

[४]बन्धे पवित्रस्य भवेदनुग्रहस्तदा विभूतिः क्रमते ततः क्रमात् ।
पाप्मापनोदाद् विकसत् प्रसीदति ज्ञानामृतज्योतिरियं पवित्रता ॥८१॥

मृत्युर्लयं गच्छति चामृते यतो यतोऽमृते श्लेषमयं च गच्छति ।
ततो[५]ऽमृतं लिङ्गमिहोच्यते तथा यदत्र कर्म्मास्ति स योनिरिष्यते ॥८२॥

शून्यं तदन्यत् परिपूर्णमन्यत् स्थानं द्विधा कर्म्मण एव दृष्टम् ।
[६]यत्र क्रिया नास्ति न तत्र सर्गः शून्यं विकाशावरणं तदिष्टम् ॥८३॥

यत्रैव सर्गस्तदिदं तु कर्म्मामृतेन पूर्णेन हि पूर्णमाहुः ।
[७]सत् सत् तदानन्दमयं विकाशोऽप्येवं द्विधा स्थानममुष्य मृत्योः ॥८४॥

[८]अथामृतस्थानममुष्य मृत्योर्भूमा स तस्मात् परिपूर्णमेकम् ।
तदत्र शून्येपि न नास्ति पूर्णं व्योमेव सर्गेऽपि तदस्ति पूर्णम् ॥८५॥

---

[१] पाप्मा कालुष्यम्, सदसद्रूपतया असत्त्वेन संयोजनमेव कालुष्यम् ।

[२] उभय जातत्वाज्जगति प्रसादः कालुष्यं चेत्युभयं प्रतीयते ।

[३] योगवन्धविभूतयः संसर्गविशेषाः संसर्गाधिकरणे निरूपणीयाः । तत्र योगे बन्धे च नवभावोदयो भवतीति रसे विकारः प्रतीयते । तत्रात्मनो रसस्य रूपं ज्ञानमाव्रियते । तदेतत्कालुष्यमुच्यते ।

[४] बन्धेऽपि यदा संवन्धविशेषेण अनुग्रहेण रस आविर्भवति, तदा विभूतिसंसर्गः क्रमते । तदा च वलस्याभिभवाद् रसः प्रसादमधिगच्छतीत्येवैव पवित्रता । सर्वमिदं संसर्गाधिकरणे स्फुटं स्यात् । इत्थं पापपवित्रशब्दयोरुपपत्तिर्दर्शिता ।

[५] लयं गच्छति यत्र तद् लिङ्गम् । तस्माद्रसो लिङ्गम् । यौति-मिश्रीभवति-संश्लिष्यति इति योनिः । तस्माद् वलं योनिरित्युच्यते ।

[६] यत्र कर्म लीनम् , तत्र सर्गो नास्ति—इति तत् कर्मणः शून्यं स्थानम् । तत्र विकाशस्य किञ्चिदावरणमात्रं कर्मणा भवति । यत्र तु सर्गः, तत्र रसस्य पूर्णतामादाय कर्मापि पूर्णमुच्यते ।

[७] पूर्णमेव सदित्युच्यते । सदेवानन्दमयं विकासश्चोच्यते । एवं कर्मैव द्विविधं भवति—पूर्णं च शून्यं च ।

[८] अमृते स्थितं कर्मापि तद्रूपतया भूमा, पूर्णं चोच्यते । तेन शून्यमपि कर्म पूर्णं नास्तीति न । अर्थाद् रसस्य पूर्णतया तद्रूपतां गतस्य कर्मणोऽपि पूर्णता व्यवह्रियत एव । तत एव 'पूर्णमदः पूर्णमिदम्' इति श्रुतौ इदं पदनिर्दिष्टस्य कर्मणोऽपि पूर्णत्वमुक्तम् । सा श्रुतिरनूदितोत्तरपद्ये ।

पूर्णं पुरा सर्गगतं च पूर्णं पूर्णात्पुनः पूर्णमुदच्यते तत् ।
पूर्णस्य पूर्णं परिगृह्यते चेदन्तेऽवशिष्येत तदेव पूर्णम् ॥८६॥

## (८) संसर्गाधिकरणम् ।

[१]नानाविधाः कर्मणि तत्र कर्मणः संसर्गभेदाः प्रभवन्ति ये यथा ।
न तैस्तथा हन्त भवन्ति कर्हिचित् कर्माण्यकर्मण्यपि योजितानि हि ॥८७॥

कर्म्मा[२]न्वयः कर्म्मणि पञ्चधा स्यात् स्थानावरोधेन समञ्जसेन ।
ऐकात्म्यरूपेण तथैकभाव्यरूपेण भक्त्या च विशेषसर्गे ॥८८॥

---

[१] रसवलयोः परस्परं कीदृशः सम्वन्ध इत्यस्मिन् प्रकरणे विचार्यते । प्रकरणमिदमनेनैव ग्रन्थकृता निवद्धे संशयतदुच्छेदवादेऽपि दृश्यते, तत्र स्पष्टं प्रतिपादितम्—यल्लोके यथा विभिन्नानां पदार्थानां संवन्धा विविधा भवन्ति, तथा रस वलयोः सम्वन्धो न विचार्यः । लोके हि संयोगादिः संवन्धो द्विनिष्ठो भवति, द्वावपि पदार्थौ परस्परं संयुज्येते, द्वावपि च संवन्धफलभाजौ भवतः । एकतरक्रियाजन्यः, उभयक्रियाजन्यो वा तत्र सम्वन्धो भवति । इह तु संवन्धो न क्रियाजन्यः, रसे नास्ति क्रिया, वलं तु क्रियारूपमेव, तत्र संवन्धाय क्रियान्तरं कुत आपतेत् ? वलमेव चात्र रसेन संवध्यते, न तु रसो वलेन संवध्यते । वलं हि रसाश्रितमेव स्वरूपं धत्ते, न तु पृथक् तस्य स्वरूपम् । तस्माद्वलमासज्जनमुच्यते । रसस्य तु न संवन्धापेक्षा, न वा तत्र संवन्ध फलम्, तत्सदा स्वतन्त्रमेव । वलं हि उत्पद्यते च विलीयते च । रसस्य तु न तेनोत्पन्नेन उपचयः, न वा विलीनेन कापि हानिः । तस्मात्तन्निरञ्जनमुच्यते । ततश्चैकनिष्ठे एवात्र संवन्धः । लोके ये सम्वन्धा दृश्यन्ते, ते वले वलस्य संवन्धाः—कर्मणि कर्मसंवन्धा इति यावत् । यद्यपि कर्मणि कर्मान्तरं संवन्धो न सम्भवतीत्युदितं प्राक् । तथापि अयं तत्राभिप्रायो वेदितव्यो यत्कर्म स्वयं क्षणिकत्वात् कर्मान्तरं धर्तुं न शक्नोति, यदा तु रसे तद् धारावाहि भवति, तदा तत्र कर्मान्तरसंवन्धो भवत्येव । कर्मविशिष्टे रसे यः कर्मान्तर संवन्धः, स एव रसस्थितेन कर्मणैव कर्मान्तरसंवन्धो विज्ञेयः । रसस्य निरञ्जनतया तत्र कर्मसंवन्धासंभवात् । तस्माल्लोके ये दृश्यन्ते संवन्धाः, तान् कर्मणैव कर्मसंवन्धान् वदामः । सा च प्रक्रिया रसकर्मणोः परस्परं संवन्धे उक्त युक्त्या न संभवतीति संक्षेपेणात्र प्रथमे पद्ये उच्यते । कर्मणि ये कर्मान्तरस्य नानाविधाः सम्वन्धाः लोके दृश्यन्ते ते अत्र रसवलयोः ब्रह्मकर्मणोः संवन्धे न संभवन्ति, तथापि संवन्धस्तु अत्राप्यस्त्येव यतो हि कर्माणि अकर्मणि ब्रह्मणि योजितान्येव स्वरूपं दधते । सम्वन्धाभावे वलस्वरूपमेव नोदियादिति । तस्मादत्र विलक्षणः कीदृशः संवन्ध इति प्रतिपाद्यमेव । तत्र लोके कर्मविशिष्टस्वरूपाणां पदार्थानां तादृशैः पदार्थान्तरैः कीदृशाः सम्वन्धा भवन्तीति निदर्शनाय प्रथममग्रेतनैः पद्यैः प्रतिपाद्यते, ततः तद्विलक्षणा अत्र कीदृशाः संवन्धाः संभवन्तीति प्रतिपादयिष्यते-लोकदृष्टान्तेनैव अलौकिके बुद्धिप्रवेशसंभवादिति ।

[२] कर्मविशिष्टे पदार्थे कर्मविशिष्टस्य पदार्थस्य संवन्धः पञ्चधा दृश्यते, स एष कर्मणोरेव परस्परं संवन्धः । रसस्य तु तन्निष्ठस्यापि तत्र तटस्थतेति ।

[१]जलेन पूर्णेन जलं मृदा न मृत् स्थितेर्विरोधान्मणिके निवेश्यते ।
स्थानाच्छ्रयाणोरपसर्पणात्त्वसौ शङ्कुर्निखातः क्षितिभित्तिदारुषु ॥८९॥

[२]समञ्जसत्वात्तु गृहे प्रकाशे दीपप्रकाशाः शतमाभवन्ति ।
दीपेषु भूयःस्वधिकावगाहोऽधिकोऽस्ति भासोऽपि सदेशवृत्तेः ॥९०॥

यद्दर्पणे चाक्षुषि चाल्पदेशे तेजांसि रूपाणि पृथग्विधानि ।
दिग्भ्यः समागत्य पृथग् विधाभ्यः सहैव तिष्ठन्ति समञ्जसं तत् ॥९१॥

वि[३]चाल्यमानं हि बलेन केनचिद् विरुद्धदिग्लब्धबलात् कराश्रयात् ।
स्थिरीभवेत् तत्र विरुद्धदिग्भवं बलद्वयं तद् युगपत् सहाश्नुते ॥९२॥

---

[१] मृज्जलयोः स्थानावरोधकत्वात् एकस्य स्थितौ द्रव्यान्तरं तत्र न निवेशयितुं शक्यते, सोऽयमप्रवेशः, अर्थात् संबन्धाभावः स्थानावरोध कृतः । तत्र विभिन्नप्रदेशावगाहिनोर्द्वयो-र्जलयोः, मृदोर्वा द्वयोः संयोगमात्रं भवति, न तु परस्परानुप्रवेशः । सेयमेका विधा, जलपूर्णे पात्रे याः काश्चन मृत्कणिकाः प्रवेश्यन्ते, तत्र तु जलाणूनां स्वभावेन निविडरूपेणावस्थाना-भावाद् व्यतिरिक्तेऽवकाशे मृत्कणिकाप्रवेश उन्नेयः । भित्तौ शङ्कुनिखनने च बलान्मृदव-यवाः स्थानादपसार्यन्ते—तत्र च शङ्कुः प्रवेश्यते । तत्रापि संयोग एव संबन्धः ।

[२] प्रकाशरश्मीनां नैवं स्थानावरोधकता, तेन एकस्मिन्नेव स्वल्पेऽपि गृहप्राङ्गणे शतं दीपप्रकाशाः संभवयन्तीति । सोऽयं समञ्जससंबन्ध उच्यते । एकस्मिन्नेव प्रदेशेऽनेकेषां द्रव्याणां समावेश इति विभिन्नोऽयं संयोगप्रकारः । ननु तत्रापि विरलतया तेजः परमाणवा-स्तिष्ठन्ति, पूर्वोक्तजलमृत्प्रक्रियावत् । तेन एकेन रश्मिना शून्ये व्यतिरिक्ते स्थाने रश्म्यन्तर-प्रवेशो भवति, किं च बहुषु दीपेषु अधिकप्रदेशावगाहोऽपि दृश्यते, तेन तत्रापि स्थानावरोधो-ऽस्त्येवेति यदि केचिद् ब्रूयुः । तत्रोच्यते । अधिकेषु दीपेषु सत्सु यथा विस्तृते प्राङ्गणे अधिकावकाशावगाहो दृश्यते, तथाऽल्पे प्राङ्गणे अधिको भासः—प्रकाशस्य घनतापि दृश्यते । सेयं घनता एकस्मिन्नेव प्रदेशे बहूनां तेजोऽणूनां संयोगादेव संभवतीति एकस्मिन्नेव प्रदेशे रश्मीनां सामञ्जस्यमुपगन्तव्यमेव । विरलतया एकेन रश्मिना त्यक्ते प्रदेश एव रश्म्यन्तर संबन्धो यदि स्यात्, तर्हि घनता प्रकाशस्य न संभवेत् । पूर्वं परित्यक्तेऽपि स्थाने इदानीं प्रकाशव्याप्ति-रित्यव घनतावभासो जायते इति कश्चिदागृह्णीयात्, तदर्थमुदाहरणान्तरमपि समञ्जसस्यो-पन्यस्यतेऽग्रे । दर्पणे चक्षुषीत्यादिना ।

[३] क्रियायां सामञ्जस्योदाहरणमाह—यद्यैकैव रज्जुरेकस्मिन्नेव काले तुल्यबलेन पुरुष-द्वयेन विरुद्धयोर्दिशोः समाकृष्यते तर्हि सा कुतोऽपि न गच्छति, स्थिरेवावलोक्यते । तत्रोभाभ्यां पुरुषाभ्यां स्वस्वकराभ्यां निहितं बलद्वयं सामञ्जस्येनैव तिष्ठति, सर्वेषु प्रदेशेषु बलद्वय-संचारस्योपगन्तव्यत्वात् । अन्यथा एकेन बलेन कश्चित्प्रदेशो विचलेदिति । केचित्तु प्रत्येक-माहितेन बलेन रज्जौ गतिर्जायत एव, परमेकस्मिन्नेव क्षणे यावन्तं प्रदेशं सा पूर्वस्यां दिशि गच्छति, तावन्तमेव प्रदेशमपरेण समाकृष्टा पश्चिमायामपीति गतिर्न प्रलीयते इति व्याचक्षते । तन्मते द्वयोः क्रिययोः समञ्जसतया स्थितिराख्येया । पूर्वस्मिन् मते तु बलयोरेव परस्परं प्रतिबन्धकयोः सामञ्जस्येन स्थितिरिति ।

आपो[१]ऽग्निना चूर्णमथाम्बुना धृतेरैकात्म्यमायाति मृदाग्निपाचिता।
तेजो[२]ऽम्बुनस्ते परमाणवो नवं जलाणुभावं जनयन्ति योजिताः ॥९३॥
[३]गच्छत्यगच्छन् शिबिकास्थितो नरस्तद्भूषितभूतः शिबिकागतिक्रमात्।

---

[१] तृतीयं संबन्धम् 'ऐकात्म्यम्' उदाहरति अग्नौ प्रतापितं जलमुष्णं भवति, तत्र जले न उष्णता, किन्तु जलावयवा अग्न्यवयवाश्च एकत्रानुप्रवेशिता ऐक्यं नामाभिन्नस्थानत्वं गता इत्यग्नेरुष्णता प्रतीयते जलशैत्यं तु अभिभवान्न प्रतीयते। समञ्जसे द्वयोः पदार्थयोः पृथक्स्थितिः, इह तु एकतैव जाता इति वैलक्षण्यम्। तथैव गोधूमचूर्णादौ जलसंपर्कात् चूर्णस्य यः पिण्डीभावः प्रतीयते, विकीर्णानां चूर्णावयवानां परस्परसंश्लेषरूपा धृतिर्जायते, तत्रापि जलचूर्णयोरैकात्म्य-संबन्धः। शुष्केऽपि जले अग्नेरवयवैरनुप्रविष्टैर्धृतिर्भवति अग्न्यवयवेष्वपि च निर्गतेषु व्याप्तवायु-भक्त्या धृतिर्भवतीति वक्ष्यतेऽग्रे। एवं जलेन मृदवयवान् संयोज्यानन्तरमग्निपाचिता मृद् इष्टका-रूपेण परिणता भवति, तत्रापि मृज्जलयोर्मृदग्न्योश्चैकात्म्यम्। तत्राप्यग्नौ निर्गते व्याप्त-वायुविभूत्यैव इष्टका स्थितिरिति वक्ष्यते।

[२] ऐकभाव्यमुदाहरति। अम्भो नामका अप् परमाणवः तेजः परमाणुभिः संयुज्य स्थूलजलस्याणूनुत्पादयन्ति-तत्राप्कणानां तेजः कणानां चैकभाव्यं भवति। इमे एव अप् परमाणवः तेज परमाणवश्च 'हाइड्रोजन्' 'आक्सिजन' नामभ्यामाधुनिकैर्वैज्ञानिकैर्व्यवह्रियन्ते। अनयोः संयोगादेव स्थूलं जलं जायते। इदं च "अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवम्" इति ऋक् संहिता मन्त्रेण स्पष्टमभिव्यञ्जितम्। अप्सु यः सोमः अपां सूक्ष्मावस्थारूपः तिष्ठति, तेन सर्वेषां भेषजानाम् ओषधीनां सत्ता तत्र प्रतीयते। सोमस्य द्रावकश्च विश्वकल्याणकरोऽग्निरपि तत्रास्तीति सोमेनैव बोध्यते-अग्नीषोमयोर्नित्यं सहचरभावादिति मन्त्रतात्पर्यम्। भगवता कणादेनापि वैशेषिकसूत्रेषु "अपां संघातो विलयनं च तेजः संयोगात्" इति तेजः संयोगो जले स्पष्टमुक्तः। योगदर्शनेऽपि च विभिन्नजातीयैः सामान्यविशेषात्मकैर्द्रव्यैरभिनवपरमाणुसंघटनं स्पष्टमुद्घुष्टम्। तेन जलस्य संयोगजस्यैक-द्रव्यत्वं पुरातनैर्भारतीयैरज्ञानादुपगतमासीदिति पाश्चात्यविदुषामाक्षेपः श्रुति दर्शनादीनां मर्मा-नालोच्यैवेति विज्ञेयं सुधीभिः। अपां हि अम्भः, मरीचिः, मरः, आपः इति चतस्रोऽवस्था ऐतरेय ब्राह्मणे सुस्पष्टं व्याख्याताः। तत्र अम्भ इति प्रथमावस्थैव हाइड्रोजन पदेनाधुनिकै-र्वैज्ञानिकैर्व्यवह्रियते। इदं दृश्यमानं स्थूलं जलं तु चतुर्थी ततोऽपि परा वा अवस्था, या संयोगविशेषादेव जायते। एवं बीजजलमृत्संमिश्रणादङ्कुरोत्पत्तावपि ऐकभाव्यमुदाहर्तव्यम्। एभिः संबन्धविशेषैरेव पृथग्विधा उपादानोपादेयभावाः (कार्यकारणभावाः) भवन्तीति भावयन्तु सुधियः। ऐकात्म्यसंबन्धे एकस्य वियोगोऽपि प्रकृत्यैव भवति, यथा तप्तजलादौ चूर्णपिण्डीभावादौ च दर्शितम्, ऐकभाव्ये तु रासायनिकप्रक्रियां विना द्वयोः सम्मिलितयो-र्वियोगो न जायते, अभिनवद्रव्योत्पत्तिरपि चात्र भवति। रासायनिकप्रक्रियया कृते च वियोगे तदभिनवं द्रव्यं विनश्यतीति पार्थक्येन संबन्धस्याभिधानम्।

[३] पञ्चमं भक्तिसंबन्धमाह—नरे गत्यभावेऽपि शिबिकागत्यैव नरेऽपि गतिर्जायते, सोऽयं शिबिकया नरस्य भक्त्यापादकः संबन्धः। शिबिकाक्रियायाश्च नरे भक्तिरूपः संबन्धः। एकस्य परत्रोपसंक्रमणमेव भक्तिः।

[१] इतीदृशे पञ्चविधेऽपि वान्वये स्थानावरोधोऽभिमतः प्रधानतः ॥९४॥

यः कर्म्मणि ब्रह्मणि संभवो न स स्थानावरोधेन कदापि जायते ।
पूर्णे रसे ऽपूर्णबलं यतस्ततस्तादात्म्यरूपेण युनक्ति सर्वतः ॥९५॥

शश्वद्धि ते ब्रह्म च कर्म च द्वे तयोश्च सम्बन्ध उदेति शश्वत् ।
द्वयं विशिष्टाद्वयमेतदेवं सम्बद्धरूपं ध्रियतेऽपि शश्वत् ॥९६॥

[२] न तत्र मात्रानियमस्तयोः स्यात् सम्बन्धसत्त्वेऽपि न तत्र सर्गः ।
असक्तमस्मिन्नमृतं हि मृत्यौ स्वतन्त्रमाभाति तथा स मृत्युः ॥९७॥

मितोमितेनाथ निरूढमात्रया ऽमृतेन मृत्युः क्रमते यदा क्वचित् ।
तदात्र सम्बन्धविशेष इष्यते संसर्गसंज्ञस्तत एव सृज्यते ॥९८॥

[३] संसर्ग उक्तो द्विविधो रसेऽस्मिन् बलस्य वृत्तित्वमथ स्वरूपम् ।
शक्त्याश्रयत्वं किल वृत्तिता स्यात् तादात्म्यमैकात्म्य मिति स्वरूपम् ॥९९॥

यत्र ग्रहातिग्रहभावसिद्धिस्तद्वृत्तिसंसर्गि बलं निरुक्तम् ।
यत्रापृथक्त्वं हि परस्परेण स्वरूपसंसर्गि बलं तदाहुः ॥१००॥

---

[१] उक्तेषु पञ्चविधेषु स्थानावरोधो मुख्यः सम्बन्धः, तस्यैव लौकिकेषु द्रव्येष्वाधिक्येन दर्शनात् । रसबलयोस्तु स संबन्धो न संभवतीत्यग्रिमेण पद्येनोच्यते । रसस्य विभुत्वात् तद्रहितं स्थानमेव नास्ति, यत्र बलादन्यो मन्यते । तयोश्च पार्थक्येन कदाप्यनुपलब्धेः संबन्धान्तराण्यपि न संभवन्ति । तस्मात्तादात्म्यरूपस्तयोर्विलक्षण एव संबन्ध इत्याशयः । रसबले सदैव संबद्धे, अनयोर्विशिष्टमेकं रूपं विज्ञेयम् । अनयैव दृष्ट्या विशिष्टाद्वैतं प्रचलितम् ।

[२] एवं सत्यपि तादात्म्यसंबन्धे सृष्टिर्न संभवति । परस्परं सङ्गो नास्तीति द्वाभ्यां स्वतन्त्राभ्यां न सृष्टिसंभवः । यदा तु बलं स्वयं परिच्छिन्नं स्वसंबन्धाद् रसेऽपि परिच्छेदमापादयति—तरङ्गा इव समुद्रजले । तदा अमितोऽपिरसो मित इव प्रतीयते—आकाशमिव गृहभित्यादिनिबद्धम् । तस्मिन् मिते यदा बलान्तरसंबन्धो भवति, तदा सृष्टिः प्रवर्तते । स एष एकेन बलेन मिततयावभासिते रसे यो बलान्तरस्य संबन्धः, स संसर्ग पदेनोच्यते । सम्यक् सर्गारम्भ एव संसर्गः ।

[३] उक्तस्य संसर्गस्यापि द्विविधत्वमुच्यते—स्वरूपसंसर्गः, वृत्तित्वसंसर्गश्चेति । स्वरूपस्थितयो रसबलयोः संबन्धः स्वरूपसंसर्ग उच्यते । तत्र बले बलान्तरसंबन्धात् चितिः प्रवर्तते । चितिर्नाम चयनम् । यथेष्टकोपरि इष्टकान्तरनिधाने चयनं भवति, तथा बलेऽपि बलान्तरस्यागमनं चितिरुच्यते । सत्यामपि बलचितौ रसस्य प्राधान्ये अव्ययः, अक्षरः, क्षरः—इति त्रयाणां पुरुषाणां प्रादुर्भावेऽग्रिमे प्रकरणे वक्ष्यते । बलप्राधान्ये तु मायाप्रकृत्यादि शक्तिप्रादुर्भावोऽप्यग्रे व्याख्यास्यते । तदेवं विशिष्टानां पुरुषाणां प्रकृतीनां च पुनर्यः परस्परं संबन्धः स वृत्तित्वसंसर्ग उच्यते इति सुसूक्ष्मं भाव्यम् । सर्वमिदमग्रे मूल एव स्फुटं स्यात् । तत्र पुरुषस्य शक्त्या संबन्धे ग्रहातिग्रहभावो भवतीति वैदिकी परिभाषा । साग्रिमे पद्ये निर्दिश्यते ।

[१]कर्म्मत्वकर्म्मस्थमकर्म्म कर्म्मसद् भिन्नं द्वयं तत् तदभिन्नमद्वयम् ।
अकर्म्म भिद्येत न कर्म्म भिद्यते ऽध्यासोऽमृते स्यादिति षड्विकल्पवान् ॥१०१॥

[२]स्वरूपसंसर्ग इहोदितस्तयोर्बलस्वरूपेण रसोऽवभासते ।
रसस्वरूपेण बलं प्रवाहि तन्न चान्यतोऽन्यद्भवति क्वचित्पृथक् ॥१०२॥

[३]तदन्तरे तत्परितो बहिर्यदाऽहितं हि मृत्यावमृतं समन्तात् ।
वस्तेऽमृतं मृत्युरमुष्य मृत्योरात्मामृतं न म्रियते ततस्तत् ॥१०३॥

स्थितेर्विरोधो न यतोऽमृतेन मृत्योर्मतस्तेन समाननेतत् ।
शून्येऽपि सर्गेऽपि सदास्ति पूर्णं न चामृतं कर्म्मणि नास्ति पूर्णम् ॥१०४॥

[४]योगश्च बन्धश्च विभूतिरित्थं स्वरूपसंसर्ग इह त्रिधा स्यात् ।
त आत्मसर्गास्त्रिविधाः प्रसिद्धाः संसर्गनाशं तु वदन्ति मोक्षम् ॥१०५॥

ब्रह्मप्रधानः स विभूतिसर्गः कर्म्मप्रधानः पुनरेष बन्धः ।
द्वयोस्तु साम्यं भवतीह योगो विश्वं त्रिसंसर्गवशात् प्रवृत्तम् ॥१०६॥

[५]यत्र द्वयोरन्वितयोरपूर्वं द्वियोगजं सृष्टमुदेति किन्तु ।
अन्योन्यमन्योन्यहतं मृतं सत् पृथक् स्वतन्त्रं न भवेत् स बन्धः ॥१०७॥

---

[१] स्वरूपसंसर्गेऽपि षोढा व्यवहारो भवतीत्युच्यते। अकर्मणि ब्रह्मणि कर्मस्थितम्—इत्येको व्यवहारः। अकर्म ब्रह्मैव कर्मणि स्थितम्—इति द्वितीयः। इदं द्वयं परस्परं भिन्नमिति तृतीयः। अभिन्नमिति चतुर्थः। ब्रह्म स्वतन्त्रतया कर्मणो भिद्यते, कर्म तु न ब्रह्मणो भिद्यत इति पञ्चमः। ब्रह्मैव सत्यम्, मृत्युरूपस्य कर्मणस्तु तत्र अध्यासभ्रममात्रम् इति षष्ठः। लोकेऽपि उपादानकारणेन सह उपादेयस्य कार्यस्य उक्ताः षड्विधाः संबन्धा व्यवह्रियन्ते। पटस्तन्तुषु संबद्धः स्थितः, (१) तन्तवः पटे सन्ति (२) पटस्तन्तुषु भिन्नः पदार्थ उत्पन्नः (३) पटस्तन्तवश्चाभिन्ना एव (४) तन्तवः पटाद्भिद्यन्ते—पूर्वमपि सत्त्वात्, पटनाशेऽपि चोपलब्धेः। पटस्तु न तन्तुभ्यो भिद्यते, पृथगनुपलम्भात् (५) तन्तव एव सत्यम्, पटस्तु तत्र अध्यस्तः (आरोपितः) (६) इति। एवं षड्विकल्पवान् स्वरूप संबन्ध इति। एते च बुद्धिभेदेनैव जनिता विकल्पाः, न तु वस्तुतः कोऽपि भेद एषु।

[२] संसारदशायां क्रियैव सर्वत्र प्रतीयते-क्रियाश्रयो रसोऽपि क्रियारूपेणैव भासते। प्रलयदशायां तु रसरूपेणैव प्रवहितबलं प्रलीयत इति।

[३] "अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्। मृत्युर्विवस्वन्तं वस्ते मृत्योरात्मा विवस्वति" इति श्रुतिमर्थतोऽनुवदति। श्रुतौ अमृतपदेन विवस्वत्पदेन च ब्रह्मैवोक्तम्—मृत्युपदेन तु बलमिति। अमृतं मृत्यौ आत्मरूपेण प्रविष्टम्, तस्मान् मृत्युर्न म्रियते। रसमाधारीकृत्यैव बलं तिष्ठति, अन्यथा तस्य स्थितिरेव न स्यादित्यर्थः।

[४] स्वरूपसंसर्गस्य प्रकारान्तरेण त्रिविधत्वमुच्यते। एभिस्त्रिभिः संबन्धैः त्रयः पुरुषा वक्ष्यमाणाः प्रादुर्भवन्ति। संसर्गनाश एव च जीवस्य मोक्ष इत्युच्यत इति भावः।

[५] त्रिषु संबन्धेषु बन्धस्य स्वरूपलक्षणमुच्यते। द्वयोर्योगात् तृतीयं किञ्चिदुत्पद्यते, संयुक्तं द्वयन्तु म्रियते-भिन्नतया न प्रतीयते यत्र संबन्धः।

[१]यथाप्सु वायुः प्लवते स खण्डशो यदोदकैराव्रियते स बुद्बुदः ।
न चावृतिस्त्रुटयति चेत्तदोभयं संसृज्य बद्धं भववेति फेनताम् ॥१०८॥

[२]दुग्धं प्रतप्तं यदि शीतवायुनाभिभूयते वायुरयन्नु वध्यते ।
दुग्धस्य वायोरपि बन्धनान्मिथः शरः समुद्भूय पृथग् विजायते ॥१०९॥

अग्निः क्रमादुत्क्रमते रसान्नयन् वायुः क्रमादन्तरुपैति संसवत् ।
वायोः स्वयोग्ये हि रसेऽनुबन्धनादयं रसस्तत्र शरः प्रजायते ॥११०॥

[३]यत्र द्वयोरन्वितयोः स्वतन्त्रप्रवृत्तयोः कर्म्मणि साहचर्य्यात् ।
द्वियोगजं सृष्टमपूर्वमुद्यान्न चान्यतोन्यन्म्रियते स योगः ॥१११॥

[४]प्राचीं प्रतीचीं च पृथक् पतत्रे पतत्रिणः संपततस्ततः स्यात् ।
गत्योर्द्वयोर्योगवशादुदीची गतिर्विभिन्ना समकोणसिद्धा ॥११२॥

[५]यत्पाणिना पाणिरमुष्य घृष्यते बलाद् बृढोऽश्मा प्रतिहन्यतेऽश्मना ।
विरुद्धशक्तिद्वययोगतस्ततस्तदाऽनलश्चक्रगतिर्विजायते ॥११३॥

---

१ अयोऽपीमे संसर्गालोके एवोदाह्रियन्ते, लोके दृष्ट्वैवालौकिके बुद्धिप्रवेशसंभवादित्युक्तमेव । रसस्थितानां बलानामेव परस्परामिमे संबन्धाः । रसस्तु न क्वापि वस्तुतो बध्यते, न वा युज्यते असङ्गत्वात् । तस्य तु विभूतिरेव संबन्धः सर्वत्रेति वक्ष्यति । तत्र बन्धस्योदाहरणमाह—अप्सु वायुः सदैव प्लवते-संबध्य प्रचलति । यदा तु अन्तः प्रविष्टेन वायुना जलांश उपार उत्पलावितः अन्तश्च वायुः प्रविष्टः अर्थाद् वायुर्जलांशेनावृतः तदा बुद्बुदः प्रतीयते । आवरणे त्रुटिते द्वयं पृथग् भवति बुद्बुदः प्रलीयते । यदा तु बलविशेषेण आवरणं चिरं न त्रुटयति, तदा वायोर्जलस्य च बन्धेन फेन उद्भवति । वायुर्जलञ्चेत्युभयमपि पृथङ्न प्रतीयते ।

२ बन्धस्योदाहरणान्तरमाह । प्रतप्ते दुग्धे शीतवायुः प्रविशति । वायुवेगादुत्प्लुतं दुग्धं फेन प्रक्रियावद् वायुमावृणोति । अग्निः दुग्धरूपं रसं नीत्वा ऊर्ध्वमुत्क्राम्यति, स्वभावात् । वायुस्तु अन्तः प्रवेष्टुमिच्छति । तदा वायोश्च दुग्धस्य च बन्धनात् शरः (थरःमलाई इति प्रसिद्धः जायते) । अग्निस्तु उत्क्रम्य बहिर्गच्छति ।

३ द्वितीयस्य संबन्धस्य योगाभिधस्य लक्षणमुच्यते । द्वयोर्योगात् तृतीयमुत्पद्यते, किन्तु तद् द्वयमपि तिष्ठति, बन्धवन्न म्रियते स योगः ।

४ योगस्योदाहरणम् । पक्षिणः उत्तराभिमुखी भूयोड्डीयमानस्य प्रत्येकं पक्षौ प्राग् दिशि प्रतीच्यां दिशि च क्रियामारभेते । तयोः क्रिययोर्योगादुदीच्यां गतिर्जायते । प्राचीं प्रतीचीं प्रति प्रवृत्ता गतिरपि च न म्रियते स एव प्राच्यां प्रतीच्यां च जायमानयोर्गत्योर्योगः । तै गती अपि स्थिते, नवीना च गतिरुत्पन्नेति ।

५ द्वितीयमुदाहरणं योगस्यैवोच्यते । स्पष्टार्थं पद्यम् । पाण्योरग्निसंबन्धादूष्मा प्रतीयते । अश्मनोस्त्वग्निप्रादुर्भावः स्फुटमेव जायते । इयमेव प्राचीनेकाले ग्रामीणानामग्निप्रकटनक्रिया प्रचलतिस्म ।

[१]यत्र द्वयोरन्वितयोस्तु सगविकं मृतं स्यादमृतं द्वितीयम् ।
स्वतन्त्रमेकं परतन्त्रमन्यच्चान्वेति नान्वेति विभूतिरेषा ॥११४॥

[२]यदिच्छतो यत्नवतः स्थिरः करः प्रोत्तिष्ठतीह प्रचरत्यनेकधा ।
प्राणस्य प्रज्ञानुचरस्य सा करे विभूतिरन्तर्निहिताऽप्यलिप्तवत् ॥११५॥

[३]न चेष्टका शुष्कमृदा भवेत्ततो जलात्करोतीह मृदं सुपेशलाम् ।
तयेष्टकासंपदि शोष्यते जलं सूत्रात्मवायुर्विभवत्ययेष्टकाम् ॥११६॥

[४]न लौहखण्डद्वितयं परस्परं संसृज्यते तेन तदग्निना द्वयम् ।
सुपेशलं चेदपि सृज्यते ततः सूत्रात्मवायुर्विभवत्यमुष्मिन् ॥११७॥

[५]गजाश्व-वेश्माद्रिवनादयो यदा दृष्टौ स्मृतौ वा प्रतिभान्ति तत्र हि ।
विज्ञानमेकं विभवत्यनुक्रमादमीषु भूयो महिमस्वनेकधा ॥११८॥

---

[१] तृतीयस्य संबन्धस्य विभूतेर्लक्षणमाह । द्वयोर्योगे एकं म्रियते, अपरन्तु अमृतं जीवदेव तिष्ठति । मरणजीवनयोरर्थमाह—एकं स्वतन्त्रम्, द्वितीयन्तु परतन्त्रं जायते । पारतन्त्र्यमेव मरणमित्यर्थः अथवा एवमुच्यताम्—एकमन्वेति, अन्यत्तु नान्वेति संबन्धफलं नानुभवति तटस्थमिव स्थितं भवति इति यावत् । स संबन्धो विभूतिरित्युच्यते ।

[२] विभूतेरुदाहरणचतुष्कं श्लोकचतुष्टयेनोच्यते । पूर्वमात्मनि—मनसि-हस्तचालनस्य इच्छा जाता, ततः प्रयत्न उत्पन्नः । इच्छा मनसः (प्रज्ञायाः) धर्मः, यत्नस्तु प्राणस्य । ततो हस्ते क्रिया प्रजायते । तत्र प्रज्ञाभिधस्य मनसः प्राणस्य च हस्तेन सह विभूतिसंबन्धः । प्रज्ञाप्राणौ स्वतन्त्रौ, हस्तस्तु परतन्त्र इति । अन्तः संबद्धावपि प्रज्ञाप्राणौ अलिप्तवत् तटस्थतयैव तिष्ठतः न कोऽपि तत्र विकार उत्पद्यत इति । क्रियायास्तु हस्तेन सह ऐकात्म्यसंबन्धः पूर्वोक्त एव ।

[३] द्वितीयमुदाहरणम्—शुष्कया मृदा इष्टका निर्मातुं न शक्यते इति जलेन मृदमार्द्रां कृत्वा इष्टका निर्मीयते । आतपेनाग्निना वा जलं शोष्यते । शुष्केऽपि जले मृदवयवानां संबन्धः कुतो न विश्लिष्ट इति विचारे सर्वत्र व्याप्तो यः सूत्रात्मपदवाच्यो वायुः स इष्टकां धारयति । सूत्रात्मवायुरयं देवताविशेषः । तस्येष्टकया विभूतिसंबन्धः । स वायुः स्वतन्त्रः, इष्टका तु तत्परतन्त्रा, इष्टकारूपस्य तदधीनत्वात् । वायौ न कोऽपि संबन्धकृतो विकारः ।

[४] पूर्ववदेवोदाहरणान्तरम् । अग्निना द्रवीभावमापाद्य लोहखंडद्वयं संयोज्यते । तत्र संयोजकोऽग्निः । अग्निनिर्गमे पूर्वोक्तो वायुरेव सूत्रात्मा तं संयोगं परियाति । तत्रापि सूत्रात्मवायोर्विभूतिरेव ।

[५] अस्माकं दृष्टौ प्रत्यक्षज्ञाने स्मृतौ वा बाह्यानां विषयाणां गजाश्वगृहपर्वतप्रभृतीनां भाने ज्ञानेन सह बाह्यपदार्थानां संबन्धो भवति । तत्र ज्ञानस्य विभूतिरेव संबन्धः, ज्ञाने तल्लेपाभावात् । नन्वत्र गजाश्वादिष्वपि बाह्येषु न कापि परतन्त्रता, न वा ज्ञानसंबन्धफलं किञ्चिद् दृश्यते ति कथं विभूतिलक्षणसमन्वयः । सत्यम्, बाह्येषु विषयेषु न पारतन्त्र्यम्, न वा ज्ञानजन्यं किमपि फलम् ज्ञाततां विषयतां वा कर्मकारकलक्षणानुगमनाय यद्विषयेषु मीमांसका नैयायिका वा कल्पयन्ति, तत्तु वाचा विजृम्भणं कल्पनामात्रमेव, न वस्तुगत्या

[१]तृणेषु बन्धादिह दुग्धमत्रानलो विभूत्या द्रवताऽम्बुयोगात् ।
दुग्धे तृणं वृत्तिमदाहितं चेदेकत्र संसर्गचतुष्कमित्थम् ॥११९॥

[२]स्वरूप-संसर्गिबलादिहात्मा विधीयतेऽनेकविधः स भोक्ता ।
वृत्तित्वसंसर्गिबलात्तु भोक्तुस्तस्यात्मनो भोग्यमुपस्थितं स्यात् ॥१२०॥

---

ज्ञातता विषयतादिनामकं किमपि बाह्येषु विषयेषूत्पन्नं कोऽपि दर्शयितुं शक्तः, न वा ज्ञाता-ज्ञातानामश्वादीनां कोऽपि विशेषः परेणानुभूयते । अतएव वैयाकरणा ज्ञा धातु प्रभृतीन् कर्तृस्थ भावकानेव वदन्ति । परं बाह्यैर्विषयैरस्माकं ज्ञाने स्वप्रतिबिम्बभूता गजाश्वादय उत्पाद्यन्ते, ते अन्तरा गजाश्वादयो ज्ञानेन नित्यसंबद्धाः, ज्ञान एव तिष्ठन्ति, स्मृतिस्वप्नमनोराज्यादिषु त एव काले कालेऽनुभूयन्ते, बाह्येषु नष्टेष्वपि ते न नश्यन्ति, अतएव नष्टानामपि भानमनुभवसिद्धम्—इत्यस्माकं दर्शनमन्तरसंसारवादिनां पञ्चदशा-व्याकरणमञ्जूषादिषु प्रपञ्चितम् । ते अन्तरा गजाद्या ज्ञानस्यैव महिमान उच्यन्ते । तैरेवात्रज्ञानस्य विभूतिसंबन्ध उपपादितः । तेषां ज्ञानपरतन्त्रता ज्ञानान्वितता च स्फुटैव । ज्ञानं तु न तद्बद्धम्—इति स्वतन्त्रमेवोच्यते । तत एव तत्रैवंविधा अनन्ता विषयाः समाविशन्ति चापयन्ति चेति विभूति-लक्षणसमन्वयस्तत्र भावनीयः । तदुक्तं पद्ये—अमीषु भूयो महिमसु भूयस्सु अनन्तेषु स्वमहिम एकं ज्ञानं विभवति-विभूतिसंबन्धेन वर्तत इति । एकं ज्ञानम्–द्रव्यरूपा बुद्धिः, सांख्यवेदान्तादिषु अभ्युपगता । तत्प्रतिबिम्बितस्यात्मनोऽपि ज्ञानपदेन व्यवहारः, तस्यापि च विभूतिरेव संबन्ध एषः । एते च अन्तरा गजादयो बाह्यैरेवोत्पादिताः, ज्ञाने निवेशिताः—इति उभयोरभेद-बुद्ध्या बाह्यैरपि ज्ञानस्य विभूतिसंबन्ध एवाख्येयः । तेनैव संबन्धेन च बाह्यानामपि कर्मकारकत्वम् । इत्थं विभूतेरुदाहरणानि प्रपञ्चितानि । द्वयोः संबन्धे एकं म्रियते—परस्मिन् लीयतेइत्यप्युदाहरणं ग्रन्थकृता संशयतदुच्छेदवादे भगवद्गीताविज्ञानभाष्ये चोक्तम्—यथा स्फटिकसन्निधौ यदा जपाकुसुमं स्थाप्यते तदा जपाकुसुमस्फटिकरूपयोः संबन्धे जापाकुसुम-रूपमेव प्रतीयते-स्फटिकरूपं तत्रैव लीयते, जपाकुसुमरूपे च न कोऽपि विकारः, तत् स्फटिकात् पृथग्भूयापि तथैवावभासते इति जपाकुसुमरूपस्य तत्र विभूतिसंबन्धः । तथैव दिवा दृश्यमानस्यापि चन्द्रस्य चन्द्रिका न दृश्यते । सूर्यप्रकाशे सा लीनेति सूर्यप्रकाशस्य तत्र विभूतिसंबन्ध इत्यादि ।

[१]एकत्रैव त्रिविधान् स्वरूसंसर्गान् वृत्तित्वसंसर्गमपि च दर्शयति । दुग्धमग्नौ प्रतापितम्–तत्र चैकं तृणं पतितम् । अत्र दृश्यताम्—गवा जग्धैर्विविधैस्तृणैः पीतेन जलेन च दुग्धमुत्पादितम् । तत्र दुग्धे विविधानां गवा खादितानां तृणानां बन्धरूपः संबन्धः—तैः सर्वैर्विनष्ट-स्वरूपैर्दुग्धमुत्पादितमिति । गवा पीतेन जलेन च दुग्धाणूनां योगरूपः संबन्धः । अविलीनं स्थितमेव जलं दुग्धाणुषु द्रवत्वमुत्पादितवदिति । गोर्जठरस्थितेन अनलेन तृणेषु दुग्धभाव आपादितः, स वह्निरपि दुग्धे वर्तते, किन्तु विभूतिसंबन्धेन । तस्य केवलं दुग्धस्वरूपरक्षकस्य स्वतन्त्रत्वात्, पूर्वोक्त सूत्रात्म वायुवत् । प्रतप्ते दुग्धे प्रविष्टानामग्निकणानामपि च दुग्धेन विभूतिसंबन्ध एव । प्रपतितस्य तृणस्य च तत्र वृत्तित्वसंबन्ध इति भाव्यतां सुसूक्ष्मम् ।

[२]वक्ष्यमाणा भोक्तार आत्मानः स्वरूपसंसर्गैः प्रादुर्भवन्ति, संसर्गवैलक्षण्यादेव तत्र वैलक्षण्यं वक्ष्यते । तत्र भोग्योपस्थितिस्तु वृत्तित्वसंसर्गादिति मूल एवाग्रे विवरणीयम् ।

[१]यत्राश्रितस्याश्रयतोऽन्वयेन संसृज्य नापूर्वमुदेति किञ्चित् ।
यत्राश्रितं स्वाश्रयनैरपेक्ष्यात् प्रवर्तते कर्म्मसु वृत्तिता सा ॥१२१॥

यथा हि पथ्यस्य जनस्य गच्छतः पन्था निमित्तं ध्रुवमाश्रयत्वतः ।
न चैवमप्येष गतिस्वरूपगो वृत्तित्वमेवं तदुदाहरन्ति ॥१२२॥

यथाऽ[२]माकाशगतः समीरणो व्याप्नोति चाकाशमशेषदिक्ष्वपि ।
न वायुनाऽऽकाशमिदं विलिप्यते तथाखिलं स्याद्रसवृत्ति तद्बलम् ॥१२३॥

[३]आसक्त्युदारौ समवाय इत्थं वृत्तित्वसर्गोऽपि भवेत् त्रिधैव ।
तेन स्वरूपत्रययुक्तवृत्तित्रयं षडेतेऽमृतमृत्युसर्गाः ॥१२४॥

अन्योन्यमेते परिवर्त्तिताः स्युस्तेषाममीषां परिवर्तनं यत् ।
आकस्मिकं तन्न फलान्न कामात् स्वभाव एवात्र परं निदानम् ॥१२५॥

[४]बलस्य यस्यां रसवृत्तितायां सिद्ध्यत्यसाधारणतैव तस्मिन् ।
निष्पन्दता वा रसलिप्तता वा न जायते सा तदुदारवृत्तिः ॥१२६॥

यथायमाकाशगतः समीरो निर्लिप्त एव प्रचरत्यमुष्मिन् ।
भवत्यसाधारणतामुपेतः स्वभेदतस्तद्वदिहापि विद्यात् ॥१२७॥

यथा जलं पुष्करपत्रनिष्ठं निर्लिप्तमेव प्रचरत्यमुष्मिन् ।
भवत्यसाधारणतामुपेतं क्वचिद्भृतं तद्वदिहापि विद्यात् ॥१२८॥

---

[१] स्वरूपसंसर्गः, वृत्तित्वसंसर्गश्चेति संसर्गद्वैविध्यं प्रागुक्तम् । तत्र स्वरूपात्संसर्गः त्रिविधो व्याकृतः । इदानीं वृत्तित्वसंसर्गलक्षणमुच्यते । लक्षणमुदाहरणं च स्फुटमेव । गच्छतो जनस्य पथा वृत्तित्वसंसर्ग इति ।

[२] रसेन बलस्य वृत्तित्वमेव संबन्ध इत्युच्यते । पूर्वोक्तेषु पञ्चसु संबन्धेषु समञ्जस-संबन्धोऽनयोरुपपद्यते । त्रिषु स्वरूपसंबन्धेषु विभूतिसंबन्धेन रसास्थितिरास्थेया । वृत्तित्व-संसर्गेषु चोदारवृत्तिता याग्रे लक्ष्यते । एत एव रसबलयोः संबन्धाः संभवन्ति । इतरे तु बलविशिष्टस्य रसस्य बलान्तरैरन्यैर्बलविशिष्टैर्वा संबन्धा यथायथं भाव्याः । वस्तुतस्तु वृत्तित्वसंसर्गः पुरुषस्य शक्त्या सह संबन्ध एव इति ९९ श्लोके उक्तम् । वक्ष्यते च तथैव १३५ श्लोके । पुरुषश्च बलविशिष्ट एव । तस्माद्बलविशिष्टे पुरुषे बलान्तरसंबन्ध एव वृत्तित्वम् । आश्रया श्रायभावं लक्ष्यीकृत्य तु शुद्धयो रसबलयोरपि वृत्तित्वसंबन्ध उपचारेण व्यवह्रियते ।

[३] वृत्तित्वसंसर्गस्यापि त्रिविधत्वमाख्यायते । त्रयः स्वरूपसंसर्गाः, त्रयश्च वृत्तित्वसंसर्गा इति षड्विधः संसर्गः । अमृतमृत्युसर्गाः—अमृतमृत्युसंसर्गा इत्यर्थः ।

[४] असाधारणता, तस्य रसस्यैव संबन्धिता—न सर्वरससामान्यभावो यया सिध्यति । यथा आकाशगतस्य वायोस्तद्देशसंबन्धिता केवलं व्यवह्रियते । न त्वन्यः कोऽपि विकार इत्युक्तं श्लोके । निष्पन्दता-स्वरूपं हित्वा रसलीनता, रसे लिप्तता वा न जायते—सा उदारवृत्तिः ।

[१]बलस्य यस्यां रसवृत्तितायां सिद्ध्येदवष्टम्भ इहाविदूरे ।
निष्पन्दमस्मिन्नवलम्बितं स्यान्न संचरेत्सा समवायवृत्तिः ॥१२९॥

यथा पटस्तन्तुषु मृद्घटो वा मृत्स्वेव तिष्ठत्यवलम्बमानम् ।
निष्पन्दरुद्धं न ततः पृथक् स्यान्न चाश्रयं हन्ति तथेह विद्यात् ॥१३०॥

यथा गुणा द्रव्यगता अमुष्मिन् प्रतिष्ठिताः सन्त्यवलम्बिनस्ते ।
निष्पन्दरुद्धा न ततः पृथक्स्युर्नवाश्रयं हन्युरिहापि तद्वत् ॥१३१॥

[२]बलस्य यस्यां रसवृत्तितायां बलेन लेपः पुरुषेऽत्र सिद्ध्येत् ।
लेपाच्च तस्यावरणाद् विकारः स्यादात्मनः सा खलु सङ्गवृत्तिः ॥१३२॥

यथाऽऽहितं सैन्धवखिल्यमप्सु व्याप्नोति ता श्चावृणुते विलिम्पत् ।
रूपाद्रसाद्वा विकरोति तोयं ह्यासक्तिवृत्त्यात्म बलं च तद्वत् ॥१३३॥

यथा विशुद्धस्य पटस्य रञ्जनात्सर्वो हि तन्तुः सविकार ईक्ष्यते ।
तदङ्गलेपावरणात् तथात्मनो विकार आसक्तिवलेन जायते ॥१३४॥

सा[३] चैककर्मात्मनि तत्र शक्तिरुदारवृत्त्यैव हि संनिवर्त्ते ।
उदारशक्त्या तु परः स्वभावादाविश्य विश्वं स बिभर्ति नित्यम् ॥१३५॥

[४]कार्य्यप्रसूतिः समवायवृत्त्या द्वैकर्म्मकत्वे समवायवृत्तिः ।
ततोऽक्षरस्यैव तु कारणत्वं परस्य नैतत् समवायिभेदात् ॥१३६॥

[५]आसक्ति-वृत्त्यैव भवेद् विकारो न त्वक्षरे नापि परे विकारः ।
त्रैकर्म्मिके सत्युपपत्तितोऽयमसङ्ग आत्मा स परोऽक्षरश्च ॥१३७॥

---

[१] अविदूरे अवष्टम्भः—एकत्र स्थितिः । निष्पन्दम्—चलनशून्यं च बलं स्यात्—चलनस्वभावं जह्यादित्यर्थः । उत्तरे श्लोके उदाहरणम् । १३१ श्लोके च द्वितीयमुदाहरणम् । न्यायशास्त्रेऽप्यवयवावयविनोर्गुणगुणिनोश्च समवाय एव संबन्ध उच्यते ।

[२] सङ्गवृत्तिः—आसक्तिः । अयमेव संसर्गो विशेषेण सृष्टिप्रयोजकः । पुरुषः संसर्ग-विशिष्टो रसः—मायया परिच्छिन्न इति पुरुषप्रकरणेऽनुपदं वक्ष्यते । तत्रैव लेपो विकारो वा संभवति, न तु शुद्धे रसे । तत्र च लेपो विकारो वा तन्निष्ठे बल एव विश्राम्यति । रसस्तु तत्राप्यलिप्त एव भवतीति निर्विकाराधिकरण उपपादयिष्यते । अत्र पद्यानि स्फुटानि ।

[३] एकं शुद्धं कर्म रसे शुद्धे संबद्धमव्ययाख्यः परः पुरुष इति वक्ष्यते । तस्मिन्नव्यय-पुरुषे शक्तेः संबन्ध उदारवृत्त्यैव भवति । अव्ययः परः पुरुषश्च विश्वं उदारवृत्त्यैव बिभर्तीति पद्यार्थः ।

[४] कर्मद्वयविशिष्टस्याक्षरस्यैव समवायवृत्तिः । तदनुकार्यप्रवृत्तिरिति सर्वं पुरुषप्रकरणे प्रतिपाद्येत मूले । परपुरुषे न समवायवृत्तिरित्यत्रोक्तम् ।

[५] आसक्तिवृत्तिस्तु न परस्य न वा अक्षरस्य, किन्तु कर्मत्रयचितिविशिष्टस्य क्षरपुरुषस्यैवेति स्मरणीयम् ।

[१]उदार एवं समवाय एवं व्यासक्तिरेवं त्रिवितिवृत्तितेयम् ।
त्रिधापि कर्म्मात्मनि कर्म्महेतोः प्रवर्त्तते शुद्धरसे तु नास्ति ॥१३८॥

[२]स्वरूपसंसर्गि बल प्रवृत्त्यात्मनः स्वरूपेऽस्य तथा स्वभावे ।
शक्तौ च वृत्तौ स्वयमेव भेदः प्रवर्त्तते तेन च वस्तुभेदः ॥१३९॥

[३]कुतः स आत्मा कुत एव शक्तिः कुतश्च संसर्गविशेषसिद्धिः ।
कुतश्च सृष्टिक्रम इत्थमेतन्न वेद्मि तद्वेद्मि यथा तदस्ति ॥१४०॥

[४]संसृज्यते वा प्रतिसृज्यते वाऽनुसृज्यते वाप्यमृते स मृत्युः ।
सर्गः स मोक्षस्त्वमृताद्विमोको मृत्योः स खण्डस्य न चाखिलस्य ॥१४१॥

[५]मितस्य कस्यापि रसस्य मायाव्यपायतः संभवतीह मुक्तिः ।
न तेन सर्वस्य मितस्य मायामुक्तिः प्रकल्प्या प्रतिभावभेदात् ॥१४२॥

## ६ मायाधिकरणम्

[६]अथो रसे तत्र बलस्य सर्गादुदेति योयं विविधो विशेषः ।
कुतः स आयाति वियाति स क्वेत्यजानता सा कथितात्र माया ॥१४३॥

सामान्यमाया महती च मायाऽन्यो योगमायेति भवन्ति मायाः ।
तिस्रः प्रसिद्धा अथ योगमायां तां विष्णुमायामिति केचिदाहुः ॥१४४॥

स्व[७]रूपसंसर्गवशाद्रसे स्थितं बलं विशेषद्वयमत्र भावयेत् ।
मात्रां च संस्थां च ततः स मात्रया संसृज्यते तद्वदसौ च संस्थया ॥१४५॥

---

[१] त्रिविधापीयं वृत्तिता वक्ष्यमाणेषु पुरुषेष्वेव न तु शुद्धे रसे इति पुनः स्पष्टीकृतम् ।

[२] रसस्य बलस्य चैकत्वेऽपि संबन्धभेदादेव दृश्यः सर्वो भेदो भवतीति भावः ।

[३] कथमयं भेद उत्पद्यते इति न विशिष्य निर्वक्तुं शक्यते अनिर्वचनीयत्वात् ।

[४] संसर्गो वियोगो वा बलस्यैव । रसस्तु तटस्थ इति पुनः स्मारितम् ।

[५] रसस्य तु परिच्छेदं परित्यज्य स्वीयापरिच्छिन्नताप्राप्तिः—अर्थात् स्वरूपावस्थानमेव-मुक्तिरुच्यते । नन्वेवमेकस्य मुक्तौ परिच्छेदविनिर्गमे संसाराभावः स्यादिति चेत्तत्राह । मायया परिच्छेदे कृते अनेकत्वेन मानं जातमितेति सति भेदे एकस्य मुक्तावपि अन्यत्र नास्ति युक्तिरिति संसारः प्रवर्तत एवेति ।

[६] संबन्धविशेष एव मायापदेन व्यवह्रियत इति संबन्धेन सहैव मायाविवरणमप्यारभ्यते । यस्योपपत्तिर्न ज्ञायते, तदिन्द्रजालादिकं लोके मायापदेन व्यवह्रियते । श्रुतावप्यस्मिन्नर्थे शब्दोऽयमनेकत्र व्यवहृतः, अत्रापि बलमिदं कुत आयाति कुत्र वा विलीयते, विरुद्धधर्मकं रसात् कथमुत्पद्यते इत्याद्युपपादयितुं न शक्यते, तस्माद्बलमेव मायापदेनोच्यते । तत्संबन्धोऽपि नोपपादयितुं शक्य इति बलं बलसम्बन्धश्चोभयमपि मायापदव्यपदिष्टं भवति । अग्रिमेण पद्येन मायाभेदा उक्ताः ।

[७] मायाशब्दस्य व्याकरणसिद्धमर्थमाह । मा धातुरयं परिमाणे–परिच्छेदे–मितौ वर्तते । बलं च स्वयं मितं स्वसंबन्धादमिते रसेऽपि मितिं भासयति, जलतरङ्गवदित्युक्तं प्राक् । रसे

[१]छन्दः स्वरूपं द्विविधं तदुक्तं या तत्र मात्रास्त्यथ यात्र संस्था ।
दिग्देशकालैः प्रमितिस्तु मात्रा छन्दो मितं तत्कृतवृत्तमाहुः ॥१४६॥

जात्या[२]कृतिव्यक्तिकृतिस्तु वर्णच्छन्दः कृतं तेन तु वर्णवृत्तम् ।
मात्राकृतं वर्णकृतं स्वरूपं यस्योच्यतेऽसौ पुरुषः प्रवृष्टः ॥१४७॥

औ[३]पाधिकस्तस्य मतः स मात्रासंसर्ग एतेन रसस्य खण्डः ।
न वस्तुगत्या परिकल्पनीयो घटस्थिताकाशवदर्थबाधात् ॥१४८॥

[४]अणूनि रूपाणि बृहन्ति नानाविधानि मृत्योः स्वयमुद्भवन्ति ।
तत्सर्गरूपावरणेन पूर्णाखण्डामृतं खण्डवदेव भाति ॥१४९॥

---

या मितिर्भासते, सा मात्रापदेनोच्यते । तादृश्या मित्या मात्रया यद्रसस्य परिच्छिन्नं रूपं प्रदर्श्यते तद्रूपं संस्थोच्यते । एवं मात्रां संस्थां च बलं बलसम्बन्धो वा उद्भावयति—इति मितिसाधनत्वात् तद्द्वयं मायापदेन व्यवह्रियते । या प्रत्ययः साधनार्थे द्रष्टव्यः । एवं मिति-साधने बले तत्संसर्गो वा मायाशब्दः पूर्वं प्रवृत्तः । इयं च मितिर्वस्तुतो रसो नास्ति—असत्येव प्रतीयते । कथं चान्यधर्मोऽन्यत्र प्रतीयते इति न निर्वक्तुं शक्यते ।

ततस्तत्सामान्याद्यदिन्द्रजालादिकमसदेव प्रतीयते, यस्य चोपपत्तिर्न ज्ञायते, तत्र सर्वत्रैव माया शब्दः प्रवृत्त इत्याशयः । मितिरेव मात्राशब्देनोच्यते, मात्रावद्धं वस्तु च संस्थाशब्देन लोके व्यवह्रियते । ते इमे मात्रासंस्थे बलेन रसे समुद्भाविते । रसोऽपि ताभ्यां संसृष्ट इवा-भातीति ।

[१] इमे मात्रा संस्थे एव छन्दः शब्देन वैदिक्यां परिभाषायामुच्येते । 'माच्छन्दः, प्रमाच्छन्दः' इत्यादि यजुर्मन्त्रे तत्संकेतितम् । ग्रन्थकृता च छन्दः समीक्षायां विस्तरेणैतन्निरूपितम् । "गायत्र्या ब्राह्मणं निरवर्तयत्, त्रिष्टुभा राजन्यम्" इत्यादिना ब्राह्मणेषु छन्दोभ्य एव वर्णाद्युत्पत्तिर्या तत्र तत्रोक्ता, गायत्र्याः सोमहरणकथा च या सर्वेषु ब्राह्मणेषु विवृता, तत्सर्वमनेनैव संकेतेन सुबोधं भवतीति निरूपितं ग्रन्थकृता तत्र तत्र । तदेवात्रापि संकेत्यते । छन्दः शास्त्रे हि वर्णनियमो मात्रानियमो वा छन्दः शब्देनोच्यते—सा मितिरेव । तन्निबद्धा वाक् तु वृत्तपदेनोच्यते, सैव संस्था विज्ञेया ।

[२] तथैव वैज्ञानिके प्रकरणे मायया मित्या जात्याकृति व्यक्तीनां या कृतिः उत्पत्तिः, सा मितिः वर्णच्छन्दो मात्राच्छन्दो वा । तया मित्या पुरुषस्वरूपं यत्संपादितं स मितः पुरुषो विज्ञेयः । अमितस्य मितिकरणेनैव पुरुषप्रादुर्भाव इति ।

[३] वस्तुतो रसस्य ब्राह्मणः न परिच्छेदः, परिच्छेदे रसस्यानित्यताप्रसङ्गाद् अर्थबाधः—मूलस्यैव नाशे जगति सर्वार्थविनाशो अपुनरुत्पत्तिरूपः स्यात् । तस्माद् घटाकाशा-दिवत् कल्पिता एवैषा खण्डरूपता ।

[४] यद्यपि मृत्युपदवाच्यं बलमणुप्रदेशावगाहि, तथापि सन्तानरूपेण प्रवाहरूपेण च तदल्पं महच्च भवतीति विस्तृत्य प्रतिपादनीयमग्रे । तेनावृतस्य रसस्यापि अणुत्वं महत्त्वं च प्रतीयत इत्यर्थः ।

त[१]स्यामितस्यापि मितिः कृतेयं माया समायाति वियाति चेयम् ।
मितिस्तु माया मित एव मायीश्वरोस्य मायामयमेव राष्ट्रम् ॥१५०॥

रसे[२] बलस्याथ भवन्ति संस्थाः संसर्गभेदास्त्रिविधाः प्रसिद्धाः ।
बन्धश्च योगश्च विभूतिरेता रसे भवन्ति त्रिविधा हि संस्थाः ॥१५१॥

बन्धक्रमेण प्रभवेदियं वाक् प्राणस्तु योगक्रमजो निरुक्तः ।
मनो विभूतिक्रमतः प्रवृत्तं संसर्गभेदात् त्रय आत्मसर्गाः ॥१५२॥

[३]संसृज्य तस्मिन् प्रतिसृज्य भूयो यत्रैष नानात्वमुपैति मृत्युः ।
तत्राभ्वमायाति वियाति तस्मात् तदभ्वमस्मिन्महती हि माया ॥१५३॥

य[४]दद्भुतं यत्वसदेव दारुणं यतः पृथग्भावमिवात्मनोऽर्घ्यते ।
आशङ्कते चात्मनि विक्रियां यतो लोके तदभ्वं तदु यक्ष उच्यते ॥१५४॥

अत्यद्भुतं चासदिदं भयावहं ततः पृथक्त्वं पुनरिष्टमात्मनः ।
विभाव्यते ब्रह्मणि विक्रिया ततस्तद्ब्रह्मणोऽभ्वत्रितयं प्रकल्पते ॥१५५॥

---

[१] माया समायाति वियाति चेति खण्डरूपेण तस्या अनित्यतोक्ता । प्रवाहरूपेण तु नित्यैव सा । मायापरिच्छिन्न एव चेश्वरो भवतीति स्पष्टार्थं पद्यम् ।

[२] बलस्य संसर्गभेदास्त्रय उक्ताः बन्धो योगो विभूतिश्चेति । तत एव रसस्य त्रिधा संस्था भवन्ति—विभूत्या मनः, योगेन प्राणः, बन्धेन च वाक् । एतास्तिस्र आत्मसंस्था उच्यन्ते । त्रिरूपोऽयं जन्यो व्यावहारिक आत्मा व्यवह्रियते । आत्मप्रसङ्गे हि "सोऽयमात्मा मनोमयः प्राणमयो वाङ्मयः" इत्यादि क्रमव्युत्क्रमाभ्यां शतशो ब्राह्मणेषु श्रूयते । लोके हि ज्ञानक्रियार्थाभिधानि त्रिविधानि वस्तूनि उपलभ्यन्ते, तत्र ज्ञानस्य सर्वस्याप्यायतनं मनः, क्रियाणां प्राणः, अर्थानां च वाक् । अस्माभिर्ये पदार्था मनः प्राणवाक् शब्दैः स्वशरीरे परिचीयन्ते, तेषां मूलभूता इमा मनः प्राणवाचोऽव्यय पुरुषकला इति बहुशोऽग्रे विभिन्नेषु प्रकरणेषु व्याख्यास्यते । वाक् शब्दोऽयमवाक् शब्दस्य अकारलोपेन निष्पन्नः । मनः प्राणापेक्षयाऽवाग्भूता निम्नश्रेणिभुक्तेयमित्यर्थः । एतामेवाव्ययकलामाश्रित्य क्षरपुरुषविकास इति सर्वभूतजननीयम् । सांख्यैरपि भूतोत्पत्तौ सर्वतः प्रथमं शब्दतन्मात्राया एवोत्पत्तिरुच्यत इति शब्दरूपाया अपि वाचः सर्वभूतमूलत्वं शक्यते व्याख्यातुमिति । तेष्वेतेषु विभूतिसबन्धेन मनः, तत्र संसर्गप्रकरणोक्तरीत्या रसस्य प्राधान्यम्, योगसंबन्धेन प्राणः, तत्र रसबलयोरुभयोः समप्राधान्यम्, बन्धेन तु वाक् । अत्र रस आवृतो भवति, बलमेव तु प्राधान्यं लभते इति संक्षेपः ।

[३] उक्ता आत्मनः संस्था आभव इति श्रुतिषूच्यन्ते । विभुपर्यायोऽयमाभु शब्दः । बलमेव तु चितिरूपेण भूयोभूयः परम्परया संसृज्य या बलप्रधानाः संस्थाः सृजति, ताः क्रमेण रूपं नाम कर्म चोच्यन्ते, या १५६ पद्यमारभ्य व्याख्यास्यन्ते । ता एता अभ्वम्, यक्षम्—इति नामभ्यां श्रुतिषु परिभाष्यन्ते इदमेव महामायास्वरूपम् । आभौ भवमभ्वम् । छान्दसो ह्रस्वः । इदमेव त्रयम्-आयाति, वियाति, भूयोभूयः परिवर्तत इति जगत्यनुभूयते ।

[४] अभ्वयक्ष शब्दयोरर्थोपपत्तिरुच्यते । अद्भुतं दारुणं चाभ्वयक्ष शब्दार्थः । अपूर्वमेव भासते कुत आयातीति न ज्ञायते, तस्माददद्भुतमिदं त्रयम् । आत्मनि विकारं जनयतीति दारुणम् । तत एवात्मपक्षपातिनो मुमुक्षवः पृथग् भावमस्मादिच्छन्तीति ।

[१]रूपं च तत्कर्म च नाम चेति प्रजायते ब्रह्मणि कर्म्मबन्धात् ।
त्रयं तदभ्वं तदु यक्षमुक्तं पुनः पुनस्तन्म्रियतेऽमृतस्थम् ॥१५६॥

न [२]सर्वथावो म्रियतेऽमृते स्थितं ततोऽमृतो मृत्युरथामृतं पुनः ।
यदावृतं नित्यमनेन मृत्युना रसः स तस्माद्बहुरूपकर्म्मवान् ॥१५७॥

स्वरूपसंसर्गि बलं तु भावो वृत्तित्व-संसर्गि बलं च कर्म्म ।
[३]भावः स यन्नाम यदस्य रूपं मात्रा च संस्थेत्युभयं हि रूपम् ॥१५८॥

घटत्वमाद्यं न ततः पृथक् स्याद् घटस्य कर्म्मेत्यखिलेषु विद्यात् ।
[४]घटस्य यन्नाम घटस्य मात्रा संस्थेति रूपं च घटस्य भावः ॥१५९॥

---

[१] इदं त्रयं कर्मणां परस्परं बन्धाज्जातम्, किन्तु अस्यापि त्रयस्याश्रयभूतं ब्रह्मैव । निराश्रयाणां कर्मणां स्थितेरसंभवात् । तदुच्यते मायां प्रकृत्य वेदान्तग्रन्थेषु 'आश्रयत्वविषयत्व-भागिनी निर्विशेषचितिरेव केवला' इति । अत्र कर्मपदेन घटपाटादीनां विभिन्नवस्तूनां यत् प्रातिस्विकं कर्म जलाहरणाङ्गावरणादिकम्—तदुच्यते । इयं प्रातिस्विकी क्रियापि तत्र तत्र दृश्यमाना तस्मान्मुख्याद् बलपदाभिधेयात् कर्मण एवोत्पद्यत इति भावः ।

[२] प्रतिक्षणपरिवर्तनशीलतया मरणस्वभावमपीदं नामरूपादिकं अमृतमाश्रित्य स्थितमिति सर्वथा न म्रियते । परिवर्तनमेवास्यानुभूयते न तु सर्वथा विनाशः । कस्यचिद्रूपस्य कस्यचिन्नाम्नः कस्यचित्कर्मणश्च सदैवोपलम्भात् ।

यथा पटे विशीर्णे तन्नामरूपं च नास्ति, परन्तु तन्तुरिति नाम लघुरूपं चास्त्येव । पूर्ववदङ्गप्रावरणरूपं कर्म नास्ति, किन्तु यत्किञ्चिदङ्गुल्यादिप्रावरणन्तु अस्त्वेव । तन्तुष्वपि दग्धेषु भस्मेति नाम, उड्डीयमानं रूपम्, मालिनीकरणादि कर्म चास्त्येवेति सर्वत्रोह्यम् । तेनामृतस्थतया मृत्युरूपमपीदं नामरूपाद्यमृतमेव जातमित्यनुभूयते । अनेन नामरूपादिना मूलतत्त्वरूपो रसस्त्वाव्रियते । मृद एव कार्पासादिक्रमेण तन्तुपटाद्या उत्पन्नाः, किन्तु पटं तन्तून् वा दृष्ट्वा मृदं न कोऽपि परिचिन्तेति लौकिकः ! परं विचारदृशस्तु मृद एवेदं सर्वं विजृम्भितमिति जानन्त्येव । अनयैव दिशापरम्परया गमने मृदपि जलपरिणामः, तदपि तेजसस्तदपि वायोरित्यादिक्रमेण सर्वत्र रस एव बहुभिर्नामरूपकर्मभिर्भिन्नं प्रतिभातमिति निश्चीयेत । सर्वस्यापि परिवर्तनस्यैकत्रैव विश्रामादिति सुसूक्ष्ममह्यम् ।

[३] उक्ते त्रयेऽपि नामरूपं च वस्तुनो भावः—वस्तुस्वरूपानुप्रविष्टमिति प्रतीयते लोकैः । कर्म तत्तद्वस्तुनः प्रातिस्विकी क्रिया तु वस्तुवृत्तिरिति परिचीयते । तेन नामरूपे स्वरूपसंसर्गेण, कर्म तु वृत्तित्वसंसर्गेण स्थितमिति सिद्धयति । तत्रापि रूपपदेन न केवलमत्र श्वेतकृष्णाद्येव ग्राह्यम् । अपि तु मात्रा—परिच्छेदः, संस्था—परिच्छिन्नं वस्तु चोभयमपि रूपपदेन गृह्यते ।

[४] नामरूपं च घटस्य भाव इत्युक्तं पूर्वस्मिन् पद्ये । घटस्य भाव एव घटत्वमुच्यते । तस्माद् नामरूपं रूपपदवाच्या मात्रा संस्थेत्येतदेव घटत्वम् । ततश्च घटत्वं घटात् पृथगेव जातिविशेष इति नैयायिकोक्तं केवलं सौकर्येण शिक्षणोपयोगाय भवतु नाम, न तु वस्तुतो घटत्वं नामरूपाभ्यामतिरिक्तं किमपीति अत्र बोधितम् । अतएव दर्शनान्तरेषु अतिरिक्त जातिवादो नाङ्गीक्रियते । नामरूपं च प्रत्येकं भिन्नमिति 'घटः' 'घटः' इत्यनुगता प्रतीतिः कथं

[१]ज्योतिर्निबद्धं बलमस्ति रूपं प्राणेन संबद्धबलं तु कर्म्म ।
स्यान्नाम सम्बद्धबलं तु वाचा मायाबलानि त्रिविधानि तानि ॥१६०॥

[२]तद्ब्रह्मणोऽव्ये परपूरुषे च प्रवाह नित्यं ध्रियतेऽक्षरे वा ।
क्षरे त्वनित्यं भवतीह भावः स्यादप्यभावो रसविप्रकर्षात् ॥१६१॥

[३]पूर्वासुतोऽपि प्रभवस्थया यः प्रतिष्ठयाऽव्व त्रितयस्य योगः ।
स एष भावोऽथ तया वियोगो भवेदभावोऽप्युभयः स मर्त्यः ॥१६२॥

---

स्यादिति तु स्थूला शङ्का । विभिन्नत्वेऽपि तत्र बुद्धिः समानरूपोदेति इति बुद्धचनपेक्षैवानुगता प्रतीतिर्जायते । तदुक्तं भगवता कणादेन वैशेषिकसूत्रे "सामान्यं विशेष इति बुद्धयपेक्षम्" इति । अनुगतस्य तत्त्वस्याभावेऽनुगता बुद्धिरेव कुत इति चेद्—रसो बलं चानुगतमस्त्येवेति गृहाण । ननु तत्तु सर्वत्रैवानुगतमित्यन्यत्र तादृशी प्रतीतिः कुतो नेति चेद्—बलपरिणतिभूते उक्ते नामरूपे यत्रानुगते, तत्रैव तथा प्रतीतिरिति कृतं विस्तरेणात्र लघुटिप्पणे । अखिलेषु घटेषु इदं त्रयमनुगतं विद्यादिति पद्येऽन्वयः ।

[१] मनः, प्राणः, वाक्—इति या आत्मनः संस्था उक्ताः, तासामेव क्रमेण रूपाणि—ज्योतिः, विधृतिः, प्रतिष्ठा—इति प्रकरणान्तरे विस्तरेण व्याख्यास्यते मूले । एषां नामादीनां ताभिरात्मसंस्थाभिः क्रमेण संबन्ध इत्यत्र संकेतमात्रमुच्यते । रूपस्य ज्योतिषा-अर्थान्मनसा, कर्मणः प्राणेन, नाम्नस्तु वाचा इति वाचा संबद्धबलन्तु नाम स्यादित्यन्वयः ।

[२] वक्ष्यमाणेषु त्रिषु पुरुषेषु परपुरुषे—अव्यये अक्षरे च इदं नामाद्यभ्वत्रयं प्रवाह-नित्यम् । न कदाप्युच्छिद्यते । क्षरे तु अनित्यम्—यत्र प्रतीयते तत्र भाव इत्युच्यते । यत्र तु रसविप्रकर्षान्न प्रतीयते—तत्राभाव इत्युच्यते । यथा यत्र सरसि जलं शुष्कं तत्र वाष्पीभूय तदुड्डीनमिति अस्मच्चक्षुषोरत्यन्तं विप्रकृष्टम्, तत एव नामादित्रितयाश्रयस्य रसस्यैव तत्रा-स्मदपेक्षया विप्रकर्षाद् जलाभावं व्यवहरन्ति लोकाः । सोऽयं विप्रकर्ष एवाभाव इत्युच्यते—न त्वभावो नाम कश्चिद्विलक्षणः पदार्थो नैयायिकैरिवोपगन्तव्यो वैदिकैः । दार्शनिकैरप्युक्तम् "भावान्तरमभावोऽन्यो न कश्चिदनिरूपणाद्" इति । नैयायिकानां प्रक्रिया तु केवलं बालानां बोधसौकर्यायोपयुज्यते । यदपि च जैनाः सर्वं वस्तु स्वक्षेत्रस्वकालस्वभावाद्यपेक्षया सत्, तदेव तु परक्षेत्रपरकालपररूपाद्यपेक्षया असदिति सर्वं भावाभावरूपत्वादनैकान्तिकं वदन्ति—सदसतोर्विस्तरेण सप्तभङ्गाश्च कल्पयन्ति-तदपि सर्वं स्थूलविचारविचेष्टितं वैदिकैरनस्थेयमेव । उक्तरीत्या एकस्यैव वस्तुनो विभिन्नदेशकालसंबन्ध इति परक्षेत्रपरकालादिकल्पनायाः स्थूल-त्वादिति संक्षिप्तटिप्पणे न विस्तरापेक्षा । वैदिकोऽध्वैवात्र व्याख्यातव्यः ।

[३] लोकव्यवहारे तु अपूर्वैर्नामरूपकर्मभिरभ्वपदवाच्यैर्योग एव भाव इत्युच्यते । अपूर्वैर्नामरूपकर्मभिः संबन्धे एव घट उत्पन्न इत्यादि व्यवहारः । तैर्वियोगे एव च घटो नष्ट इत्यादि व्यवहारः । पद्ये प्रतिष्ठा या उक्ता, सा सर्वमूलभूताया भूतजनन्या वाच एव रूपमित्युक्तं प्राक् । विस्तरेण च व्याख्यास्यते मूले प्रकरणान्तरे । सा च प्रतिष्ठा प्रभवे कारणे स्थितैव कार्येण गृह्यते इति सत्कार्यवादः कार्यकारणयोरनन्यत्वं चात्र संकेतितं द्रष्टव्यम् । यदग्रे विस्तार्येत ।

[१]तदेव भावेषु यदस्ति नानाविधत्वमुक्तः स विशेष एव ।
तत्रैकभावेऽपि भवन्त्यनन्ता इमे विशेषा इति भावसिद्धिः ॥१६३॥

[२]सा योगमाया ऽन्वितयोस्तु कर्म्मणोः पूर्वे प्रतिष्ठे उभये निजाभ्वतः ।
यदि च्यवेते अथ चेन्नवा भवत्येका प्रतिष्ठेह नवाभ्वगामिनी ॥१६४॥

## (१०) शक्त्याधिकरणम्

[३]वृत्तित्वसंसर्गवशादथास्मिन् रसे समन्वेति बलं यदन्यत् ।
सा शक्तिरुक्ता प्रकृतिः स्वभावः प्रोद्भावयत्याश्रयभोग्यमर्थम् ॥१६५॥

---

१ नामरूपकर्मकृतमेव पदार्थेषु भिन्नत्वम् । सत्तानन्दचिद्रूपो रसस्तु सर्वत्रैक एव । भिन्नत्वमेव विशेष इत्युच्यते । भेदप्रयोजकः पदार्थान्तरं विशेष इति तु कल्पनामात्रम् । एकस्मिन्नेव रसे इमे अनन्ता विशेषा भासन्ते—इति सर्वेषामेषां नाश्रयो महासामान्यरूपो रसस्त्वेक एव सिद्धयतीति ।

२ तदित्थं मितिकरणेन मात्रा संस्था च येन बलेन प्रादुर्भाव्यते, सा सामान्येन माया-पदेन, नामरूपकर्म त्रितयाभ्वप्रादुर्भाविका तु महामाया पदेनोच्यत इत्युक्तम् । विस्तारकरणम्, रसस्य विशेषेणावरणं चात्र महत्त्वम् । इदानीं योगमाया निरुच्यते । योगे—पदार्थद्वयसंवन्धे सति या समुपतिष्ठति माया, सा योगमायोच्यते । द्वयोः कर्मविशिष्टयोः रसयोः कर्मप्राधा-न्यात् कर्मपदवाच्ययोः, योगे द्वे अपि कर्मणी प्रतिष्ठातः—स्वस्वरूपाद् यदि च्यवेते—स्वस्वरूपं द्वयोरपि विलीयते, तृतीया च अभिनवाभ्वगाहिनी प्रतिष्ठा प्रादुर्भवति—अभिनवान्येव नामरूप-कर्माणि प्रवर्तन्ते—यथा वृक्षत्वग्गुडादिसंयोगान् मद्यम्, अन्नजलादिसंयोगात्सुरा, कोलानां शोरापद वाच्यस्य च योगात्पर्वतादेरप्युच्चाटकद्रव्यम् ( बारूद ) इत्यादि । तत्राभिनवनाम-रूपकर्मोत्पादकं बलं योगमायोच्यत इत्यर्थः । इयं योगमाया आत्मस्वरूपमत्यन्तमावृणुते, नहि तत्र मूलतत्त्वं मनागपि प्रतीयते । अत एव श्रीमद्भगवद्गीतायामस्या आवरकत्वमुक्तम् "नाहं प्रकाशः सर्वस्य योगमाया समावृतः ।" इति । योगमायामुपाश्रितो भगवान् रन्तुं मनश्चक्रे इति श्रीभागवतस्य रासपञ्चाध्यायी पद्येऽपि योगमायाम्—मनुष्यधर्ममुपाश्रित इति व्याख्यातव्यम् । मनुष्यता हि विभिन्नेन्द्रियमनःशरीरादिसंवन्धे भवतीति सा योगमाया-जन्यैव । आगमशास्त्रे तु माया महामाया योगमाया विभिन्नरूपतयैव व्याक्रियन्ते, सोऽयं शास्त्राणां परिभाषाभेदो नात्र प्रपञ्चयितुं योग्यः ।

३ बलविशेषरूपां शक्तिमपि संक्षेपतोऽत्र दर्शयति । अस्या विस्तरस्तु प्रकरणान्तरेऽ-भिधीयते । मायादिबलविशिष्टे रसे प्रवाहरूपेण यदन्यस्य बलस्य संसर्गो वृत्तित्वाख्यः, तेन संसर्गेणान्वितं तद्बलमेव शक्तिरित्युच्यते, प्रकृतिः, स्वभावः इत्यादीन्यपि शक्तेरेव नामानि । अनया आत्मनो भोग्यं सृज्यते ।

एतद्ग्रहातिग्रहरूपसर्गप्रसिद्धरूपः प्रथितः स आत्मा ।
स्वभोग्यसम्पादकमेतदन्तःस्थितं तु कर्म्मैव मतास्य शक्तिः ॥१६७॥

विना न शक्त्या पुरुषः क्वचित् स्याच्छक्त्या विशिष्टः पुरुषोऽपविष्टः ।
यदस्य शक्त्या क्रियतेऽस्य भोग्यं तदर्थजातं पुरुषार्थमाहुः ॥१६८॥

[1]क्वचित्तु शक्त्योपहितं नु कर्म्मातीताऽमृतं यत्पुरुषं वदन्ति ।
तदेतदारोपकृतं यतोऽत्रामृते भिदा नोपहिते विशिष्टे ॥१६९॥

## (११) पुरुषाधिकरणम्

रसो [2]बलं चेति परस्परेणाव्यावृत्तरूपावुदितौ हि धर्म्मौ ।
रसेन धर्म्मेण बलाख्यधर्म्मः संभूय धर्म्मी भवतीह भावः ॥१७०॥

[3]तत्र ग्रहातिग्रहरूपमाहुः संसर्गमेतं त्वमृतेन मृत्योः ।
ग्रहोऽमृतं मृत्युरतिग्रहो वा न चान्यदन्येन विना कृतं स्यात् ॥१६६॥

---

[1] अत्र शक्त्या सहात्मनो ग्रहातिग्रहभावरूपः संसर्ग इति पूर्वोक्तं स्मार्यते । अनयोः को ग्रहः, को वा अतिग्रहः, इति त्वनियतो व्यवहारः । क्वचिन्मृत्युः—बलम्, ग्रह उक्तः, आत्मा अतिग्रहः । क्वचित्तु आत्मा ग्रहः, मृत्युस्तु अतिग्रह इति । उभयमविनाकृतं भवतीति तु सारः । अग्रे पद्यद्वयमस्यैव विवरणं स्पष्टार्थम् ।

[2] क्वचित्तु पुरुषपदेनात्मपदेन च रस एव श्रुतिषु व्यवहृतः । सोऽयं पुरुषात्मनो रस-प्रधानत्वादेतयोर्नामिनी नामप्रयोजकान् धर्मान् वा शुद्धे रस आरोप्य समुपपाद्यो व्यवहारः पुरुषा विभिन्नाः, आत्मानोऽपि भिन्ना वक्ष्यन्ते । रसस्त्वभिन्न एक एवेति मुख्यः प्रयोगस्तत्र न संभवति शब्दयोरनयोः । बलेन उपहिते रसे नैतच्छब्दप्रयोगः, अपि तु बलविशिष्टे एव । विद्यमानं सद् गृहीतं सद् व्यावर्तकं विशेषणमुच्यते । यत्र बलं विशेषणम्—अर्थात् स्वरूपे गृहीतम्—तद्विशिष्टं रसबलोभयरूपं मुख्यतया पुरुषपदव्यवहार्यम् । यत्र तु बलमुपाधिः, अर्थात् केवलं परिचयं ददाति, स्वरूपे तु न गृह्यते । यथा कर्णशष्कुल्यवच्छिन्नं नमः श्रोत्र-मित्यत्र कर्णशष्कुली उपाधिरेव—न श्रोत्रस्वरूपे प्रविष्टा । तथैव यत्र बलं स्वरूपे न गृह्यते, तत्र रसे पुरुषपदप्रयोगो मुख्यया वृत्त्या नास्तीति भावः ।

[3] इदानीं पुरुषनिरूपणमारभते । बलविशिष्टस्य रसस्यैतदेव प्रथमं रूपमिति तन्नि-रूपणमादौ समुचितमेव । पृथक् स्थितयो रसबलयोः परस्परं धर्मधर्मिभावो नास्ति । धर्मा-न्तरं च किञ्चिन्नैव संनिहितमिति रसबले धर्मशब्देनैवारम्भ उक्ते । यदा तु बलं रसेन सह धर्मरूपेण संबध्यते, तदा बलेन धर्मेण रसो धर्मी भवति । सोऽयं धर्मी बलविशिष्टो रसः पुरुष आख्यायते । भावः पदार्थः सत्पदवाच्यः । नामरूपकर्माणि सत्तेत्युक्तं प्राक् । इदानीन्तु तानि नोत्पन्नानीति तत् सर्वजनकं बलमेव सत्तापदवाच्यम् । तया सत्तया सत् धर्मी रसः । यदा तु जगति दृश्यमानेष्वर्थेषु बलमेव प्रधानमिति तदेव धर्मितया विवक्ष्यते, तदा रसोऽपि सत्ताशब्देन व्यवह्रियते । अतएव सत्ता, चेतनानन्दरूपेण ब्रह्मणो व्यापकता वेदान्ते प्रति-पाद्यते । तदेतद् विवक्षाभेद मात्रम् । न त्वत्र कोऽपि तत्त्वविपर्यासः ।

बलेन[१] धर्म्मेण विशिष्टरूपो धर्म्मी रसो यः पुरुषः स उक्तः ।
सम्बन्ध उक्तोऽव्यतिरेकनित्यस्तयोस्ततोऽयं पुरुषोऽस्ति सर्वः ॥१७१॥

[२]पुरु व्यवस्यन् पुरुधा स्यति स्वतस्ततः स उक्तः पुरुषश्च पूरुषः ।
पुरा स रुष्यत्यथ पूर्षु रुष्यते स पूरुषो वा पुरुषस्तदुच्यते ॥१७२॥

धीप्राणभूतस्य पुरे स्थितस्य सर्वस्य सर्वानपि पाप्मनः खे ।
यत्सर्वतोऽस्मादपि पूर्वं औषत् स पूरुषस्तेन मतोऽयमात्मा ॥१७३॥

स व्यक्तभूते, वसति प्रभूते शरीरभूते पुरुषस्ततोऽसौ ।
पुरे निवासाद्दहरादिके वा वसत्ययं ब्रह्मपुरे ततोऽपि ॥१७४॥

स [३]पूरुषः स्यात् त्रिविधस्तदात्मनोः संसर्गिणोर्भेदवशादवस्थया ।
शुद्धं बलं शुद्धरसे समन्वितं यद्रूपमायाति रसोदरे बलात् ॥१७५॥

---

[१] ननु 'पुरुष एवेदं सर्वम्' इत्यादि श्रुतिषु पुरुषस्य सर्वरूपतोक्ता, सा च नित्यत्व एवोपपद्यते । भवता तु पुरुषस्य जन्यत्वमुच्यते, तत्कथं श्रुतिसंमतं स्यादिति शङ्कायामाह— तयो रसबलयोः संबन्धः, अव्यतिरेकनित्यः, नित्यमेवैते संबद्धे एव भवतः, अव्यतिरेकाद् अभिन्नत्वादित्यर्थः । बलविशिष्टो रसश्च पुरुष उच्यते, तस्मात्पुरुषस्य नित्यत्वमेव सिद्धचति, रसस्य, बलस्य, तत्संबन्धस्य च नित्यत्वात् । ततश्च न कोऽपि श्रुति विरोधः ।

[२] अथ पद्यत्रयेण पुरुष शब्दस्य श्रुत्युक्ता एव निरुक्तीर्विवृणोति—पुरु-बहुधा, स्यति- व्यवस्यति इति पुरुष इत्येका व्युत्पत्तिः । षो धातुशरीरे व्यवोपसर्गयोरर्थोऽन्तर्भूतः । व्यवसायः क्रिया । सर्वतः प्रथमं क्रियात्रैव प्रवृत्ता, सा च बहुधेति वक्ष्यते, ततः पुरुषशब्दो निष्पन्नः । छान्दसत्वादादेरचो दीर्घे पूरुष इत्यपि व्यवहारः । अथवा पुरु-बहुधा, स्यति-स्वत एवानेक- रूपतां गच्छति इति पुरुषः । अत्र गतिरेव षो धातोरर्थः । अनेकरूपतया भासनमेव स्वस्य हननमिति वा द्वितीया निरुक्तिः । रुष् हिंसायाम्-दिवादिः, पुरा सर्वतः प्रथमम्, रुष्यति-हिनस्ति रसम्, अमितस्य मिति-करणमेव हिंसा । अथवा पूर्षु पुरेषु रुष्यते बध्यते इति तृतीया चतुर्थी च निरुक्तिः । पूर्पु रुष्यते-इत्यत्र पुर्-रुष इति पूरुषशब्द एव मुख्यः । ह्रस्वेन तु छान्दसेन पुरुष इति भाव्यम् । मनःप्राणवाचः पूर्वोक्ताः परपुरुषस्य कला इति वक्ष्यते । तेषां पाप्मनः बलानि औषत्—अदहत्—रसप्राधान्येन स्वात्मन्यन्तरभावयत्—इति पञ्चमी निरुक्तिः । पुरा—सर्वतः पूर्वः, औषत्—पाप्मनो अदहदित्यर्थः । पुरे शरीरे वसति इति षष्ठी मुख्या व्युत्पत्तिः । वस् धातोः संप्रसारणेन पुरुष शब्दसिद्धिः । अत्रापि द्वैविध्य- माह—पुरे—शरीरभूते व्यक्ते-दृश्ये जगति सर्वत्र वसतीत्येका । पुरे-ब्रह्मपुरे दहरे अल्पे, महति वा बले वसति इति द्वितीया । अन्त्या व्युत्पत्तिर्मुख्या । अत्र पुरे बले वासाद् रस एव पुरुषपदव्यपदेश्यः, बलस्य स्वायत्तीकरणं स्वशरीरतानयनमेव तत्र वासः ।

[३] अव्ययः, अक्षरः, क्षरः इति भेदात् त्रिविधः पुरुषः । श्रुतिषु प्रतिपादितमेव त्रैविध्यं श्रीभगवद्गीतायां सप्ष्टीकृतम् । एताश्च तिस्रो विधाः संसर्गभेदादेव भवन्ति । संसर्गभेदादेव अवस्थाभेदः, तेन संसर्गिणो रसबलयोरपि भेद एव भासते । शुद्धस्य-अविकृतस्य

[१]न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥१७६॥

[२]स उत्तमोऽनुत्तम उच्यते परः सचाव्ययः सोऽपि च शाश्वतो मतः ।
क्षराक्षराभ्यां स परस्ततः परः स उत्तमोऽतीत्य च तौ यतः स्थितः ॥१७७॥

[३]यथाक्षरः शक्तिविभक्तियुक्तिर्भिविभज्यतेऽनेकविध स्वरूपतः ।
तथा विभक्त्या न विभज्यते यतस्ततोऽव्यये नाम स उच्यते परः ॥१७८॥

[४]पराक्षरस्यान्तरनेकधाक्षरो यथोदयं प्राप्य निवर्तते पुनः ।
तथा परेऽस्मिन्नपरो भवन् परो निवर्तते कोऽपि स तेन शाश्वतः ॥१७९॥

[५]अथोत्तमस्यास्य रसे यदा बलं संसृज्य सर्गाय समर्पते पुनः ।
तदा भवत्यक्षरपुरुषः स वै सर्वज्ञ आत्मा स च सर्वशक्तिमान् ॥१८०॥

---

बलस्य, शुद्धे बलान्तरानाश्रये रसे समन्वयः संबन्धः। रसोदरे बलं प्रविष्टमिति रसस्य प्राधान्यं ख्यापितम् । स एव परः पुरुष इति शेषः ।

१ परपुरुषप्रतिपादिकां श्वेताश्वतरश्रुतिमुद्धरति । अयं कार्यभावात् कारणभावाच्च अतीतः। न किमप्युत्पादयति, कस्याप्युत्पादने कारणतां वस्तुतो न गच्छति, न वा केनाप्युत्पाद्यते । केवलं सर्वालम्बनत्वेन—सर्वाधारतया तिष्ठति । अत्र वर्तमाना या परा शक्तिः बलरूपा, सैवास्य स्वाभाविकी—तया सर्वमुत्पाद्यते । ज्ञानबलक्रियारूपेण सा सर्वत्रानुप्रविष्टेति श्रुत्यर्थः। अनया पुरुषस्य अविकृतत्वम्, शक्त्यैव च सर्वजननमाम्नातम् ।

२ अस्य नामानि श्रुतिषु स्मृतिषु च श्रूयमाणान्याह । न उत्तमो यस्मादित्यनुत्तमः ।

३ न व्येति विपरिणमते इत्यव्ययः। अक्षरे विविधाः शक्तयः, ताभिः स विभक्त इव भवति । बहुभिश्च युज्यते । अयन्तु न तथा । तत एवाव्ययः ।

४ अक्षरः एको महान् भवति, स परोऽक्षर इत्युच्यते । तस्मिन् अवान्तरा अनेके अक्षरा उदयन्ते च, तत्रैव महत्यक्षरे विलीयन्ते च । परे अव्यये तु एवमुदयविलयौ न भवतः, तस्मादयं शाश्वतः ।

५ अक्षरपुरुषस्य प्रादुर्भावक्रममाह । मायाबलविशिष्टे मिततया प्रतीयमाने परे अव्यये रसप्रधाने यदा संसर्गसंबन्धेन अन्यद्बलं संबध्नाति तेन च नवीना सृष्टिः प्रादुर्भवति—तदा स अक्षरः पुरुष उच्यते । नन्वेवं तर्हि अव्ययपुरुषस्यैव अक्षरे उपादानकारणत्वं जातम्, पुनश्च अव्ययस्य कार्यकारणत्वयोरभावः कथं पूर्वं व्यवहृत इति चेदेवं तावद्विभाव्यतां सुसूक्ष्मम् । एकस्य बलस्य मायाख्यस्य संसर्गाद् या पराव्ययनाम्नी संस्था प्रादर्भूता, तत्र न कोऽपि विकारो जायते—इति सा स्वतन्त्रैवालम्बनरूपा तिष्ठति, तस्याः कारणत्वं न मन्यते । तदवच्छिन्ने रसे तु बलान्तरसंसर्गात्पुनरभिनवा अक्षरपदवाच्या संस्था प्रादुर्भवति, तत्रापि रसबलयो रेव कारणत्वं भाव्यम्, न तु अव्ययरूपेण प्रादुर्भूतपूर्वायाः संस्थायाः । यथाहि महाकाशे महत एकस्य प्राचीरस्य वेष्टनेन नगरनाम्नी एका संस्था प्रादुर्भाविता । पुनस्तदवान्तरेषु भागेषु नगरावच्छिन्न आकाश एव विभिन्नान् प्राचीरान् प्रकल्प्य तदवान्तर-

[१]यथा सुदीप्तादनलात् स्फुलिङ्गाः सहस्रशो यान्त्युदयं सरूपाः।
तथाक्षरात्सर्वविधा हि भावा भवन्ति तत्रैव तथाऽपियन्ति ॥१८१॥

[२]यश्चाक्षरो यश्च परस्तदेतौ दिव्यावमूर्तौ पुरुषावजौ स्तः।
बाह्यान्तरौ चामनसौ च शुभ्रावप्राणकौ तत्पशुता निषिद्धा ॥१८२॥

[३]मनः सवाक्प्राण इति त्रिधास्य प्राणस्ततोऽवाङ मनाः स उक्तः।
अर्चिर्मयः सूक्ष्मतमोऽक्षरोऽयं तत्स्था हि लोका अपि लोकिनश्च ॥१८३॥

---

भागेऽपि च भित्त्यादिकं प्रकल्प्य रथ्याप्रतोल्यो गृहाश्च कल्प्यन्ते। तत्र नगररूपा या संस्था पूर्वं क्लृप्ता तत्र न कापि विकृतिर्जायते, न वा तस्या रथ्या प्रतोल्यादिकं प्रति कारणत्वं व्यवहर्तुं शक्यते—अपितु कल्पितैर्विभिन्नैरवच्छेदैरावणभूतैर्महाकाशमेव सर्वत्र कारणत्वं याति। नगर नाम्नी संस्था तु आलम्बनभूता स्वतन्त्रैव प्रतिष्ठति, तथैवात्रापि महता बलेन अव्यय-पुरुषः प्रादुर्भावितः, स आलम्बनरूपेण स्वतन्त्र एव तिष्ठति, तदवान्तरे रसे बलान्तर-संसर्गादक्षरक्षराद्या संस्था आविर्भवन्ति, न तत्र नगरस्येव अव्ययस्य कारणत्वम्, अपि तु महाकाशवदेव रसस्यैवेति। यथा तत्रावान्तरप्राचीरभित्यादिकं परिच्छेदाय जायते, तथैवात्रापि बलमेव परिच्छेदकं द्रष्टव्यमिति विचार्याभुभवे निवेश्योऽयमर्थः। अत्रैवाक्षरे ज्ञानक्रिया-शक्त्यादीनां प्रादुर्भाव इति सर्वज्ञः सर्वशक्तिमान्, इत्यादिभिः पदैरयमेव व्यवह्रियते।

१ अस्यैवाक्षरस्य सर्वकारणत्वं श्रुतिषु व्यवहृतमिति द्योतनाय शतपथब्राह्मणचतुर्दश-काण्डोक्तां "यथा सुदीप्तात् पावकाद् (        ) इत्यादि श्रुतिमर्थतोऽनुवदति। अक्षरपुरुषः समष्टिरूपः, तस्माद् व्यष्टिभूता जीवा जड़ाश्च प्रादुर्भवन्ति—इति श्रुत्यर्थः। लोके हि व्यष्टिभूतैस्तन्तवादिभिः समष्टिभूतः पटो जन्यते। इह तु समष्टेरेव व्यष्टिर्जन्येति वैषम्यं सततं भावनीयम्।

२ एवं सर्वजगदुत्पादकोऽप्यक्षरः स्वयमक्षर एव, न मनागपि क्षरति—विनश्यति इति यावत्। अव्ययस्यास्य च साधर्म्याण्यत्रोच्यन्ते। एतानि विशेषणानि श्रुतिषु तत्र तत्रा-क्षरस्य परस्य चोक्तानि स्पष्टार्थान्येव। 'अप्राणो ह्यमनाः शुभ्रः' इति मनः प्राणवाचोऽप्यक्षरे श्रुत्या निषिध्यन्ते। अत्र तु पूर्वं मनः प्राणवाचामात्मत्वमुक्तम्, ताः कथमक्षरे न स्युरिति शङ्कां निराकर्तुमुच्यते तत्पशुता निषिद्धेति। अग्रे द्वितीयेऽधिकारे परधर्माधिकरणे विकाशाधि-करणादौ च मनः प्राणवाचां ज्योतिर्विधृतिप्रतिष्ठारूपेण अव्यये अक्षरे क्षरे पशौ च चतुर्विधा स्थितिराख्यास्यते। तत्र अव्यये अक्षरे क्षरे चैतान्यात्मभूतानि, परतस्तु चतुर्थे स्थाने पशु-भूतानि। तेषु पराक्षरयोर्मनः प्राणवाचां पशुभाव एव श्रुतिषु निषिद्धयते। आत्मभूता मनः प्राणवाचास्तु अव्ययस्य कलाः, ता अक्षरे क्षरे चानुवर्तन्त एव। अस्माभिर्मनः प्राणवाक् शब्दैः पशुभूता एव परिचीयन्ते, या अस्मच्छरीरे वर्तन्ते। तेषामेवात्राक्षरपरयोर्निषेध इति भावः।

३ 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुतेर्द्वितीयमभिप्रायमाह—अक्षरे पुरुषे प्राण एव मनः प्राणवाग्रूपेण त्रिधा स्थितः। तदस्य वाक्प्राणमनांसि स्वरूपभूतान्येव, न तत्र मनोन्तरं प्राणान्तरं वागन्तरं वा पशुरूपं सन्निविष्टम्। ततश्च न मनो यस्मिन् स अमनाः, न प्राणो

[१]तमक्षरं भूतभृतं प्रचक्षते सत्यं च विज्ञानमनन्तमच्युतम् ।
कूटस्थमव्यक्तमपि ध्रुवं विदुः परावरं सेतुमलक्ष्यमीश्वरम् ॥१८४॥

खे[२] निश्चले वायुरिव प्रचारी भूतानि सर्वाणि परेऽक्षरेऽस्मिन् ।
सन्त्यास्थितान्येव सति स्थितानि बिभर्ति भूतानि स भूतभृत् ततः ॥१८५॥

[३]सत्यं च विज्ञानमनन्तमित्यं भेदास्त्रयः सन्ति तदक्षरस्य ।
विस्रंसते तस्य रसो विसर्गे तथापि नैष च्यवते स्वरूपात् ॥१८६॥

[४]कल्पान्तकालेऽखिलभूतसंघस्तदक्षरस्य प्रकृतिं प्रयाति ।
विष्टभ्य च स्वां प्रकृतिं स कल्पोदये पुनस्तानि सृजत्ययत्नः ॥१८७॥

वशात् प्रकृत्या अवशास्तु भूतग्रामा भवन्तीह लयं प्रयान्ति ।
न तानि कर्माणि यदक्षरं तं बध्नन्ति कूटस्थमतो वदन्ति ॥१८८॥

[५]कूटो हि मायामयबन्धयन्त्रं मिथ्याकृता वाप्यथ क्लृप्तराशिः ।
कूटोऽग्रभागः शिखरं च तस्मिन् स्याता स कूटस्थ इति प्रसिद्धाः ॥१८९॥

---

यस्मिन् सो अप्राणः, इति बहुव्रीहिसमासेन तत्र अन्येषामाधेय भूतानां मनः प्राणादिनां श्रुत्या निषेधः कृतः। यथा नैयायिकानां मते सत्तायां न सत्तान्तरमिति सत्ता स्वयमसती, तथात्रापि मनसि नान्यन्मनः, प्राणे च नान्यः प्राण इति श्रुत्यभिप्रायो वेदितव्यः। उत्तरार्द्धं स्पष्टम्। लोकानाम्, तत्रास्थितानां प्राणिनां लोकिनां चायमक्षर एव प्रतिष्ठारूप इति तत्रोक्तम्।

[१] श्रुत्युक्तान्यक्षरस्य नामान्यत्रोक्तानि। अग्रे च तेषां विवरणम्।

[२] निश्चले खे-आकाशे प्रचारी-चलनशीलो वायुरिव, सर्वाणि अस्थितानि-स्वयं परिवर्तनशीलानि भूतानि, परे-महति अक्षरे, सति स्वयमचलति स्थितानि, तस्मात्स भूतभृदित्यन्वयः।

[३] 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्या श्रुतिरक्षरस्यैव त्रैविध्येन जगति व्याप्तिं श्रावयति। सर्वाणि भूतानि अक्षरादेव रसे गृह्णन्ति तथाप्यनन्तत्वान्नैष स्वरूपाच्च्यवते इति भावः।

[४] "सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्।" (भ० गी० ९७) इति श्रीभगवद्गीताश्लोकमर्थतोऽनुवदति। एवमग्रेऽपि गीताया एवाशयानुवादः।

[५] कूटस्थ शब्दं निर्वक्तुं कूटशब्दस्य लोकप्रसिद्धास्त्रयोऽर्था उच्यन्ते। कूटसाक्षी इत्यादौ मिथ्यार्थे कूटशब्दः प्रसिद्धः मायामयं बन्धयन्त्रं कूट शब्दस्यैकोऽर्थः। कूटो राशिः समूहः। क्लृप्तो राशिः कूट इति द्वितीयोऽर्थः। शिखरस्याग्रभागः कूट इति तृतीयः। अयं मायायन्त्रे मायाकल्पितभूतादिसमूहे, सर्वाग्रभागे च तिष्ठतीति कूटस्थ उच्यते।

य [१]एकरूपोऽखिलकालवृत्तिः कूटस्थमेतं च वदन्ति सन्तः।
अव्यक्त उक्तः स हि यः परस्ताद् घनीभवन् व्यक्तिदशामुपैति ॥१९०॥

ये [२]तु क्षरा यानि रजांसि तानि प्रसह्य सर्वाण्यपि संसरन्ति।
अन्तस्थितः संसरताममीषां स निश्चलो न व्यथते ध्रुवस्तत् ॥१९१॥

[३]क्षरं हि विश्वं तदिहावरं ततः परं तु विश्वातिगतं यदुत्तमम्।
यदक्षरं तद्धि परावरं स वै सेतुः परं पारमुपैति तद्गतः ॥१९२॥

[४]ईक्षामहेऽक्षैर्वयमत्र तैस्तैः प्रज्ञानुषक्तैर्न तथा विमुक्तैः।
प्रज्ञा तु विज्ञानभृतैव बोद्ध्री तेनेह लक्ष्यं न तदस्ति लक्ष्यम् ॥१९३॥

[५]न चास्ति भूतं तदिहाक्षरेण यद् भृतं न भूत्वा भवति स्वतन्त्रवत्।
स व्याप्नुवन्नेत्यखिलेष्वलं रसं प्रदाय चेष्टे तदतः स ईश्वरः ॥१९४॥

---

[१] अविचलोऽपि कूटस्य शब्दस्य प्रसिद्धोऽर्थः। सोऽप्यत्र समन्वेतीत्यर्थः। अयमेव क्षररूपतां गतो व्यक्ततां गच्छतीति व्यक्तस्य पूर्वावस्थारूपेणाव्यक्त उच्यते—इत्युत्तरार्द्धे उक्तम्।

[२] अक्षरस्य ध्रुवत्वनिर्वचनं स्पष्टम्। रजांसि—लोकाः।

[३] अक्षर एव परावरः, सेतुश्चोच्यते, तन्निर्वचनं स्पष्टार्थम्। मध्यभागः सेतुरुच्यते। अवरस्य परस्य च मध्येऽयमक्षरः, ततः सेतुः। क्षरा जीवा अक्षरमेवावलम्ब्य परं प्राप्तुमर्हन्तीत्यपि सेतुशब्देन व्यञ्जितं द्रष्टव्यम्।

[४] अक्षरे अलक्ष्यत्वमाह—किञ्चिद्वस्तु कथं लक्ष्यं भवति तत्प्रकार उच्यते। प्रथमं वयं विभिन्नैः, अक्षैः—इन्द्रियैः तत्तद्वस्तूनि ईक्षामहे, ततः प्रज्ञाप्रज्ञानादि शब्दवाच्यं मनः तत्तदर्थकल्पनां कुरुते। इन्द्रियैरानीतानि रूपरसादीनि संयोज्य 'घटोऽयम्' 'पटोऽयम्' इत्यादि स्वरूपकल्पनं मनसः प्रज्ञा-प्रज्ञानपदवाच्यस्य कार्यम्, ततो विज्ञानं बुद्धिः, तस्मिन् पदार्थे स्वकर्तव्यं ग्रहणत्यागौदासीन्यरूपं बोधयति। इयमेव बाह्येष्वर्थेषु लक्ष्यता। इन्द्रियैरर्थग्रहणेऽपि च मनसः सहकारिता, मनोव्यापारे च बुद्धेः। एभिः संभूय बाह्यानामर्थानां लक्ष्यता जायते। एतानि इन्द्रियमनो बुद्धिरूपाणि तु स्वयमलक्ष्याणि। तदा मनसो बुद्धेरपि चान्तरोऽक्षरपुरुषः कथं लक्ष्यः स्यादिति भावः।

[५] अक्षर एवेश्वर उच्यते। तत्रेश्वरशब्दं संगमयते। ईष्टे—समर्थो भवतीति ईश्वरः। यो यं प्रति समर्थः, यस्य नियोजनं कर्तुं शक्नोति, स एव तस्येश्वर उच्यते, यथा स्वामी भृत्यादेः। अयन्तु सर्वस्यापि क्षरस्य भूतजातस्य विनियोजकः, तस्मात्सर्वेश्वरत्वान्निरपेक्षेण ईश्वरशब्देनोच्यते। विनियोजकत्वं चास्य द्विधा सिद्धयतीत्युच्यते—व्यापकत्वाद् रसप्रदत्वाच्चेति। तद्भूतं नास्ति, यद् अक्षरेण भृतम्—धृतम्, न भूत्वा स्वतन्त्रवद् भवति। सर्वम्—अक्षरेणैव धृतं तिष्ठतीति भावः। प्राणरूपेणायं सर्वत्र व्याप्नोति, प्राणेन विना कृतं च न किञ्चिदपि ध्रियते। प्राणस्यैव विधारकत्वात्। निष्प्राणं तु सर्वं प्रतिष्ठातश्च्यवते। इत्थं च सर्वत्र व्याप्नुवन्नयं सर्वस्य ईष्टे—सर्वस्यापि विनियोजक इति ईश्वरः। किं च क्षरेषु भूतादिषु अयमेव रसं ददाति। अव्ययाद्रसोऽक्षरेऽनुवर्तते, अक्षराच्च क्षरे। रस एव च

[1]अथाक्षरस्यास्य रसे यदा बलं संसृज्य सर्गाय समर्थते पुनः ।
ततः क्षरः संभवतीह पूरुषस्त्रयस्त्विमे स्यु पुरुषाः पृथग्विधाः ॥१९५॥

सर्वं[2] तदेतत् परमक्षरं क्षरं क्षरं तु कार्य्यं यदिदं प्रदृश्यते ।
यत्कारणं तन्मतमक्षरं तथा परं न कार्य्यं न च कारणं तथा ॥१९६॥

य [3]उत्तमः सोऽस्त्यशरीरपूरुषोऽक्षरादयः सन्ति शरीरयोगिनः ।
प्रियाप्रिये न स्पृशतोऽशरीरिणं शरीरिणोऽथापहतिर्न चैतयोः ॥१९७॥

[4]ग्रामं हि भौतं क्षरसंज्ञमाहुः कूटस्थमत्राक्षरमाहुरत्यम् ।
अन्यं तटस्थं परमाहुरेतान्यध्यूढरूपाणि भवन्ति नित्यम् ॥१९८॥

[5]क्षराणि सर्वाणि तदक्षरे स्युस्तदक्षरं चापि परे निगूढम् ।
तस्मात्त्रिधा भिन्नमपीदमेकं ब्रह्मैव सर्वं जगदेतदाहुः ॥१९९॥

---

सर्वत्र जीवनमिति जीवप्रदत्वादप्ययमीश्वर इति। ईश्वररूपेणाक्षर एवोपास्यते सर्वैरित्यग्रे स्फुटीभविष्यति ।

[1] क्षरपुरुषस्य प्रादुर्भावमाह—अक्षरपुरुषावच्छिन्ने रसे यदा बलान्तरं चयनरूपेण संसृज्य सृष्टिकरणाय समर्थं भवति, तदा क्षरपुरुष उच्यते। अक्षरप्रादुर्भावे या प्रक्रियास्माभिः पूर्वं व्याख्याता, तद्रीत्या अत्रापि अक्षरस्य क्षरं प्रति नोपादानत्वम्, अपि तु अक्षरसंस्था स्वतन्त्रा। तदवच्छिन्ने रसे बलान्तरसंप्रयोगादियं तृतीया संस्था प्रादुर्भूता। तथा चोपादानकारणत्वं सर्वत्र रसबलयोरेव, न तु एकस्य पुरुषस्य परं प्रत्युपदानत्वमित्याकाशदृष्टान्तेन बोधितमेवेति। तदित्थं त्रय इमे पुरुषाः पृथक् पृथक् प्रादुर्भूता इति ।

[2] यत् किञ्चिद् दृश्यते—ज्ञानविषयी क्रियते, तत्र सर्वत्रापि पुरुषत्रयसत्ताऽवश्‍भाव्या। तत्र यत् कार्यभूतमिन्द्रियादिभिर्गृह्यते, तत्सर्वं क्षरम्। सर्वत्राप्यनुस्यूतं तद्वस्तुपरिचालकं तद्वस्तुजनकं चाक्षरम्। तृतीयमुत्तमाव्ययादिपदवाच्यन्तु केवलमालम्बनम्, न कार्यं न वा कारणमिति। एवं विज्ञायताम्, सर्वस्यापि वस्तुन उपादानकारणं क्षरम्, निमित्तकारणमक्षरम्, कार्यकारणातीतन्तु अव्ययं नाम तत्त्वमिति ।

[3] अव्ययः पुरुषो अशरीरः। कुत्रापि तस्य शरीराभिमानो नास्ति। अक्षरः क्षरं शरीरतया गृह्णाति, क्षरश्च स्वोत्पादितं क्षरान्तरम्—इति द्वावपीमौ सशरीरौ। तत एवाव्यये न सुखदुःखसंस्पर्शः। क्षराक्षरयोस्तु स प्रवर्तते। तदुक्तं श्रुत्या "न ह वा सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा सन्तं न प्रियाप्रिये स्पृशतः" इति। तस्मादव्ययं प्राप्यैव अर्थात् तमात्मतयोपगम्यैव सुखदुःखविनिर्मुक्तो भवति जीवः ।

[4] पुनः स्पष्टीकरोति भूतग्रामः क्षरः। अत्रैव वर्तमानोऽपि स्वरूपादप्रच्युतः कूटस्थः अक्षरः। 'कुर्वन्नपि न लिप्यते' तटस्थरूपेण एकरूप एव स्थितस्तु अव्ययः। इमे त्रयोऽपि परस्परमविनाभूतास्तिष्ठन्ति। क्षरो यद्यपि परिणमते, तथापि तत्रैकस्य क्षरस्य स्थाने द्वितीय आगच्छतीति अविनाभावो अक्षत एव। घटलोष्टमृदादिदृष्टान्तेन पूर्वमिदं प्रत्यपीपदाम ।

[5] यदुपरि दृश्यते सर्ववस्तुषु तत् क्षरतत्त्वरूपम्, तत्रान्तर्निगूढमक्षरतत्त्वम्, तत्राप्यन्तश्च परतत्त्वम्। तस्मात् त्रिधा व्यवस्थितमपीदमेकमेव ब्रह्मतत्त्वम्। अविनाभावरूपमैक्यमस्यामप्यवस्थायां जागर्त्येवेति ।

क्षरा[१]क्षराभ्यां कृतमस्ति यावद्रूपं हि तावज्जगदेतदाहुः ।
यदन्यदस्माज्जगतः पृथक् स्यात्परं तमाहुः पुरुषोत्तमं च ॥२००॥

स[२]ऽव्यक्तभूते वसति प्रभूते शरीरभूते पुरुषः परस्तत् ।
पुर्य्येव वासादयमक्षरोऽपि क्षरोऽपि तस्मात्पुरुषः प्रदिष्टः ॥२०१॥

परः स आख्यायत आदिपूरुषोऽक्षरस्तु योऽस्त्येष पुराणपूरुषः ।
क्षरो य आत्मा स हि यज्ञपूरुषः स एक एव त्रिविधः पृथग्विधः ॥२०२॥

[३]द्विधैव लोके पुरुषः प्रदिष्टः क्षरोऽक्षरो वा स इदं नु सर्वम् ।
ताभ्यां परो यः पुरुषोत्तमोऽसौ न पूरुषः स्यादिति केचिदाहुः ॥२०३॥

[४]परस्य पूर्वं पुरुषस्य धर्म्मद्वयं यदाहामृतमृत्युरूपम् ।
परात्परं तत्र तयोः पृथक्त्वे निर्धर्मकत्वात् पुरुषत्वमिष्टम् ॥२०४॥

[५]क्वचित्प्रकृत्योपहितं नु कर्म्मातीतामृतं यत्पुरुषं वदन्ति ।
तदेतदारोपकृतं यदऽत्रामृतेऽभिदा नोपहिते विशिष्टे ॥२०५॥

---

१ पुरुषोत्तमस्य परस्याव्ययस्य जगदतीतताऽत्रोक्ता ।

२ इदमपि वक्तुं शक्यते—यत् पर एव मुख्यः पुरुषः । अक्षरमस्य पुरम्, तत्र निवासात्स पुरुषः । एवमक्षरस्य क्षरः पुरम्, तन्निवासादक्षरः पुरुषः । क्षरस्यापि तदुत्पादिता क्षरस्यान्यावस्था पुरम्, तत्र तन्निवासात् सोऽपि पुरुष इति । अग्रिमे पद्ये पुरुषाणां नामान्तराणि श्रुतिस्मृतिप्रसिद्धान्युच्यन्ते । स्पष्टार्थं तत् ।

३ केषांचिन्मते क्षराक्षरयोरेव पुरुषत्वम् । परस्तु अविकृतं ब्रह्मेति न पुरुष उच्यते । पुरुषरूपं जगदेव । परस्तु जगदतीत इति न पुरुषपदव्यपदेशमर्हतीति तदाशयः ।

४ अन्ये तु विवेचका यत्र धर्मित्वम्, तस्य पुरुषत्वमाहुः । मूलतत्त्वाभ्यां रसवलाभ्यां धर्मरूपाभ्यां विशिष्टोऽव्ययो धर्मीति तस्यापि पुरुषत्वं युक्तमेव । अतएव भगवद्गीतासु "उत्तमः पुरुषस्त्वन्यः" इति उत्तमस्यापि पुरुषत्वं व्यपदिष्टम् । वैदिकं पुरुषसूक्तं तु अक्षरमेव विवृणोति । अव्ययादपि पूर्वा रसवलयोरसंसृष्टा संस्था तु परात्परशब्देनोच्यते । स निर्धर्मकत्वान्न पुरुषपदव्यपदेश्यः । 'परात्परं पुरुषमुपैति दिव्यम्' इत्यत्र तु जीवाव्ययः पूर्वेण परपदेन निर्दिष्टः, स परं पुरुषमनन्तमीश्वराव्ययमुपैतीति ग्रन्थकृतान्यत्र व्याख्यातम् । प्रत्येकं पुरुषाणां पञ्च कला इति पञ्चदश कलाः संपद्यन्ते, ता अग्रे व्याख्येया अनुपदम् । तत्र षोडशी कला परात्परूपापि संगृह्यत इति षोडशी पुरुष उच्यते—इति व्याख्याने तु बहुत्र ग्रन्थकृता परात्परस्यापि पुरुषत्वं व्यञ्जितमिव । रसवलयोरेकवुद्धया ग्रहणे तत्राश्रयाश्रयिभावोऽपि भावादेवेति तत्रापि धर्मिव्यवहारं कथञ्चिदुपपाद्य तदपि संगमनीयम् ।

५ क्वचित्तु वलाख्यं कर्म पृथग् वुद्धया गृहीत्वा तदुपहिते शुद्धरसे ब्रह्मण्यपि पुरुषपदप्रयोगो दृश्यते । वलं प्रकृतिः, तदुपहितं कर्मातीतममृतमिति पद्यार्थः । उपाधेर्विशेषणस्य च भेदः पूर्वं व्याख्यातः । तत्र वलविशिष्टे रसे युज्यते कथंचित् पुरुषपदम् । वलोपहिते तु तदारोपकृतमेव । भविष्यन्तीं पुरुषरूपामवस्थां पूर्वं विशुद्ध एवारोप्य तथा व्यवहार उपपाद-

[१]विना प्रकृत्या पुरुषो न हि स्यात् तया विशिष्टस्य तु पूरुषस्य ।
यद्यत्प्रकृत्या क्रियतेऽत्र भोग्यं तदर्थजातं पुरुषार्थमाहुः ॥२०६॥

## (१२) गद्यमयं पुरुष[२]प्रपञ्चाधिकरणम् ।

द्विविधा सृष्टिः प्रतिपत्तव्या, सामान्यसृष्टिः पूर्वार्ध्या, विशेषसृष्टिः परार्ध्या चेति । सामान्यसृष्टिव्यतिरेकेण विशेषसृष्टिर्नोपपद्यते, तस्मात् तामेव सर्वभूतसाधारणीमादौ व्याख्याय पश्चात् प्रातिस्विकीः काश्चित् प्रदर्शयिष्यामः ॥

बृंहणवलो रसो ब्रह्म । [३]बृंहमाणं तत् त्रिधा संपद्यते-चित् चेतना चित्यं च । यत्रैताः सर्वा बलानां बलैश्चितयो भवन्ति, तदावपनं चिद्[४] ब्रह्म । यत एताश्चितयो भवन्ति, तदिदं चितिप्रयोजकं चेतना[५] ब्रह्म । अन्यदन्यस्याङ्गं भवद् यदुपचीयते, तच्चित्यं ब्रह्म । रसप्रधाना चित् । समबलरसा चेतना । बलप्रधानं चित्यम् । चिद् ब्रह्म अव्ययम् । चेतना ब्रह्म अक्षरम् । चित्यं ब्रह्म क्षरमित्याहुः । समन्वितं चेदं त्रितयमेकं रूपम् । तथा च क्षरब्रह्माक्षरब्रह्माविनाभूतेऽव्ययब्रह्मणि पुरुष[६] शब्दः । तादृशः [७]सप्तभिः पुरुषैः कृतरूपे तावदेकस्मिन्

---

नीय—इति भावः । यतो हि उपहिते शुद्धरसे भिदा नास्ति । विना भेदं च पुर-पुरुषभावो न घटते इति मुख्यं पुरुषत्वं नोपपद्यते । अग्रे पुराणि भविष्यन्ति, तत्रैव शयिष्यते—इति भाविनीं संस्थां बुद्धिविषयीकृत्य कथंचिदुपपाद्यं तत्र पुरुषत्वम् । अयमेवारोप इत्यत्रोक्तः ।

[१] इमे त्रयः पुरुषात्मानः । अग्रे तु बलान्तरप्रयोगे यदुत्पद्यते, तद् भोग्यजातम्, तच्च पुरुषभोग्यत्वात्पुरुषार्थपदेन व्यह्नियते । सर्वमिदमग्रे स्फुटं स्यात् ।

[२] पूर्वाधिकरणोक्तं मुख्यं पुरुषतत्त्वं स्पष्टीकर्त्तुं तत्रावान्तरान् विषयांश्च बोधयितुं गद्यमयं पुरुषप्रपञ्चाधिकरणमिदमारभ्यते । तत्रापि मूलतत्त्वादेव पुनरुपक्राम्यति संगतिं योजयितुम् ।

[३] बृंहति तच्छीलं बृंहमाणम् । ताच्छील्ये चानश् प्रत्ययः ।

[४] सर्वादिभूतं सर्वाधारं चेत्यर्थः । तत्रैव प्रादुर्भूतानि बलानि क्रमेण चीयन्ते ।

[५] चित् प्रयोजकं सृष्टीच्छाविशिष्टं ब्रह्म । एत एवाव्ययाद्याः त्रयः पुरुषाः पूर्वाधिकरण व्याख्याताः ।

[६] त्रितयं संमिलितं पुरुषशब्देन बहुत्रोच्यते श्रुतिषु । क्वचित्तु 'समुदाये प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायेन प्रत्येकमपि पुरुषशब्देनोच्यते ।

[७] शतपथब्राह्मणस्य षष्ठकाण्डोक्तं पुरुषस्य सप्तधावस्थानं विवृणोति । प्राणमयः पुरुषः सर्वत्र सप्तस्वायतनेषु स्वात्मानं विभज्य प्रतिष्ठितो भवतीत्यर्थः । तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्यां तु वक्ष्यमाणानामव्ययपुरुषकलानां शिरः, पक्षौ, आत्मा, पुच्छमिति पञ्चविभागा आम्नाताः, तेऽव्ययपुरुषकलानामेव विभागाः प्रतिपत्तव्याः । इह तु शिरः पृथक् कृत्य आत्मानं च चतुर्धा विभज्य मध्यभूतस्य देहस्य सप्त भागा दर्शिताः, ते प्राणसामान्यस्य शतपथे व्याख्याताः ।

पुरुषे प्रजापतिशब्दः। तस्यैतस्य चत्वारः पुरुषा आत्मा। द्वौ पक्षौ। पुच्छमेकं प्रतिष्ठा। तेऽमी सप्तापि प्राणाः। अथैषां सप्तानां पुरुषाणां या श्रीः, यो रसः स एतस्य [1]शिरो मनोमयम्।

अयमत्राभिसन्धिः—योयं प्राक् त्रिधातुः पुरुष आख्यातः, स खल्वसंख्यातैरनियतै-[2]रल्पाधिकैः पञ्चजातीयैः क्षरप्राणैः पञ्चभिश्चाक्षरप्राणैः पञ्चधातुना चैकेनाव्ययेन कृतमेव सर्वदा रूपं धत्ते। तत्र बीजचितिः, देवचितिः, भूतचितिः, प्रजा वित्तमिति पञ्च क्षराः। [3]अविद्या, काम, कर्म्म, वीर्य्य, शुक्रैर्बीजचितिः। [4]अग्निवाय्वादित्यचन्द्रसोमै-

---

[1] सप्तानामपि प्राणानां सारभागः पृथग्भूयोपरि गच्छति, स एव श्रीरिति शिर इति चाख्यायत इति व्याख्यातं शतपथब्राह्मणे। अस्मिन् शिरसि मनः प्रधानं भवति।

[2] त्रयाणां पुरुषाणां प्रत्येकं पञ्च पञ्च कला भवन्तीति ग्रन्थान्तरेषु विस्तरेण व्याख्यातम्, तदिह संक्षेपेणोच्यते। तत्राव्ययकलाः कोशभूता इति तत्र भेदो न भवति, अक्षरकलाः, क्षरकलाश्च विभिद्य अल्पमात्रा अधिकमात्राश्च भवन्तीति भावः। तत्र पूर्वं क्षरेणैवोपक्रमते—तत्तद्वस्तुविशकलने तासामेव पूर्वं परिचयो भवतीति। तत्र मुख्याः क्षरकलाः प्राणः, आपः, वाक्, अन्नादः, अन्नमिति शतपथब्राह्मणे षष्ठकाण्डस्यारम्भादेव व्याख्याताः। तत्र प्राणः सर्वविधारकः। 'वलविधारणे प्राणशक्ती' इति ग्रन्थकृता बहुत्र व्याख्यातम्। स एव ऋषिपितृदेवमनुगन्धर्वरूपेण भिन्नतामापद्यते। तस्याधारः प्रथमं त्रयी विद्या भवति, तद्द्वारेण चापामुत्पत्तिरिति शतपथ एव व्याख्यातम्। स्थूलभूतानां प्रथमावस्था वाक्, अन्नादो अग्निः, अन्नं च सोम इति पञ्चैते क्षरपरिणतिभूताः सर्वं जगदुत्पादयन्ति। उक्ताः पञ्च कला अध्यात्मम्, अधिदैवम्, अधिभूतं च भेदेन परिणता भवन्ति। तत्राध्यात्मं यानि नामानि क्षरकलानां भवन्ति, तानीहोच्यन्ते बीजचितिरित्यादिना। बीज-चितिः कारणशरीरमुच्यते, देवचितिः सूक्ष्मशरीरम्, भूतचितिश्च स्थूलशरीरम्। प्रजावित्ते मूल एव व्याख्याते। एताः सर्वाः संभूय मुख्यात्मनः परिकरतां गच्छन्ति। एतत्समुदाय एव च व्यावहारिक आत्मा। वित्तपर्यन्तं व्यावहारिकात्मनो व्याप्तिः। अतएव तमः प्रधानस्य मलिनात्मनो वित्तमपि सात्त्विकानां पतनहेतुं मन्वते धर्मशास्त्राचार्याः। अधिदैवं क्षरकलाश्च स्वयम्भूः, परमेष्ठी, सूर्यः, पृथिवी, चन्द्रः—इति पञ्चमंडलानि। यैः समुदितै-र्ब्रह्माण्डमित्युच्यते। एतानि पञ्चमण्डलानि अनन्तविश्वस्यैकाकी शाखा श्रुतिषु वल्शेत्युक्ता। अधिभूतं चैता एवाकाशादि पञ्चभूतरूपतां गच्छन्ति।

[3] तत्राध्यात्ममुक्तासु कलासु तिसृणां प्रत्येकं पञ्चविधत्वमाख्यायते—अविद्या सर्व-बीजम्—या योगवेदान्तदर्शनयोर्विभिन्नया प्रक्रियया सम्यग् विवृता। तज्जनितमनोविकार-रूपा इच्छा कामः। तया संपाद्यमानाः शरीरविक्रियाः कर्माणि। वीर्यं शुक्रं च ग्रन्थोत्तरार्द्धे व्याख्यास्येते। एभिः समुदितैः कारणशरीरम्, यद्धि प्रलयेऽपि न नश्यति, केवलं ज्ञाननाश्यम्। तद्वियोग एव मुक्तिः।

[4] अग्नीषोमौ देवौ। तत्राग्निस्त्रिधा भिद्यते अग्निवाय्वादित्यरूपेण। पृथिव्यामग्निः, अन्तरिक्षे वायुः, द्युलोके चादित्य इत्यादि निरुक्तादौ स्पष्टम्। सोमोऽपि द्विधा—भास्वर-

दैवचितिः। आकाशवायुतेजोऽम्बुपृथ्वीभिर्भूतचितिः। संतानः प्रजा। परिग्रहो वित्तम्।
[१]अथ ब्रह्मा, विष्णुः, इन्द्रः, अग्निः, सोमः—इति पञ्चाक्षराः। प्रतिष्ठा ब्रह्मा।

---

सोमो दिक्सोमश्च। तत्र भास्वरसोमश्चन्द्रः, दिक्सोमश्चात्र सोमपदेनैवोक्तः, दिक्पदेनापि तत्र तत्रोच्यते। एभिरेव समुदितैः सूक्ष्मशरीरोत्पत्तिः श्रुतिष्वाख्याता—"अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्" (ऐतरेय, १ अ० २ ख०) इत्यादिना। चान्द्रेण सोमेन मनः, दिक्सोमेन श्रोत्रमित्यादि। बुद्धिरप्यादित्यात्। अहंकारो रुद्ररूपाद् वायोरित्याद्यन्यत्र विस्तरेण निरूपितं ग्रन्थकृता।

[१] अक्षर पुरुषस्य पञ्चकला निर्दिश्यन्ते। इह हि जगति सर्वेऽपि पदार्थाः प्रतिक्षण-परिणामिन इति सर्वेऽपि दार्शनिका निरूपयन्ति। यत्किञ्चिदन्यतो गृह्णन्ति—यत् किञ्चिच्च परत्र संक्रामयन्तीति ग्रहणपरित्यागावेव परिवर्तनशब्देनोच्येते। इमावेव महाभाष्यकृता 'स्त्रियाम्' इति पाणिनीये सूत्रे संस्त्यानप्रसवशब्दाभ्यां विवृतौ। यथा दीपस्तैलात् स्नेह-मनुक्षणं गृह्णाति, प्रकाशं च सन्निहितेषु पदार्थेषु संक्रामयति। सोऽयं प्रकाशः सर्वेषु जडेष्वनु-स्यूतस्तत्र दार्ढ्यमापादयति, प्रकाशाभावे भित्त्यादेः शीघ्रं जीर्णतादर्शनात्। चेतनेषु च ज्ञानदीप्तिदाने सहकारी भवति। प्राणिशरीरमपि बाह्यमन्नपानादि गृह्णाति मलादिकं च परत्रोपसंक्रामयति। वृक्षलताद्या अपि जलरसादि गृह्णन्ति, छायाकुसुमफलादि चार्पयन्ति, एषूक्तेषु ग्रहणत्यागादिकं स्पष्टमनुभूयते। वस्तुतस्तु सूक्ष्मदृष्ट्या पर्यालोचने सर्वत्रापि जड़चेतनेष्वियमादानप्रदानप्रक्रिया प्रचलन्ती प्रतिक्षणमनुमीयते। अतएव सूक्ष्मेण महता वा कालेन यथाप्राणं सर्वत्र वृद्धिर्जीर्णता वानुभूयते। आदानबाहुल्ये प्रदानाल्पत्वे वृद्धिः, आदान-स्याल्पत्वे प्रदानबाहुल्ये च क्षयापरपर्याया जरा। वृक्षादिषु प्राणिशरीरेषु च वृद्धिह्रासौ स्फुटमनुभूयेते, तत्र प्राणशक्तेः प्रबलतयोत्कटत्वेन जायमानयोर्वृद्धिह्रासयोः सर्वलोकगम्यत्वात्। वैश्वानरप्राणकारितं हीदं सर्वमिति। जडेषु लोष्टप्रस्तरादिषु तु स्वल्पमात्रया बहुना कालेन संपाद्यमानत्वाद् वृद्धिह्रासयोर्न स्फुटं सर्वेषामनुभवः। अनुमाननिपुणास्तु खनिप्रभृतिषु लोष्टप्रस्तरादीनामपि कालेन वृद्धिं दृष्ट्वा दृढप्रासादपर्वतादीनामपि च महता कालेन जीर्णता-मनुभूय प्रतिक्षणमेव तत्रापि वृद्धिह्रासावनुमिन्वते। यत्रापि हि वर्षशतकेन जीर्णताऽनुभूता पुराणत्वं वा वस्तुनः सर्वैर्ज्ञातम्, तत्रापीयं जीर्णता पुराणता वा किं कस्मिंश्चिन्नियतेऽब्देऽ-कस्मात्प्रादुर्भूता—इति विचार्यमाणे नैवम्, किन्तु प्रत्यब्दमेव जीर्णता पुराणता वा जायतेस्म, अत्यल्पत्वात्तु नानुभूयतेस्म। क्रमेण वृद्धिं गता सानुभूयत इत्येव मतिमतामुत्तरं स्यात्। प्रत्यब्दमपि न कस्मिंश्चिन्नियते मासे, अपि तु प्रतिमासमेव, मासेऽपि प्रतिदिनमेव, दिनेऽपि च प्रतिक्षणमेवेत्येव विचारशीलैर्मन्यते, तदेवं प्रतिक्षणमेव वृद्धिह्रासयोः सिद्धौ प्रत्येकं वस्तु प्रतिक्षणं परतः किञ्चिद् गृह्णाति, किंचिच्च परात्रार्पयति। सतोरप्येवं वृद्धिह्रासयोस्तदेवेदं गृहम्, स एवायं पर्वतः, स एवायं घटः, पट इत्यादि प्रत्यभिज्ञा सर्वत्र प्रवर्तते, सा च प्रत्यभिज्ञा प्रतिष्ठाकृतेति प्रतिष्ठापि सर्वत्रानुवर्तत एवेत्यभ्युपगन्तव्यं स्यात्। तत्र प्रतिष्ठासंपादकः प्राणो ब्रह्मा, परतो ग्रहणमेव यज्ञ उच्यते, तत्संपादकः प्राणो यज्ञमयो विष्णुः। परत्र स्वात्मभूतद्रव्य-संक्रामणं चात्रेन्धनमित्युक्तम्, इद्धस्यैव वह्नेः स्फुलिङ्गादिसंक्रामकत्वात्। तत्संपादकः प्राण इन्द्र इत्युच्यते। इन्धनादेव इन्द्र उच्यते परोक्षविधया। क्वचित्तु ब्राह्मणेषु इदं सर्वं द्रावयति—

यज्ञो विष्णुः। इन्धनमिन्द्रः। तेजनं स्थूलस्य तीक्ष्णीकरणमवयवस्फोटोऽग्निः। स्नेहोऽवयवसंकोचो घनीभावः सोमः। अथानन्दो, विज्ञानम्, मनः प्राणो वागिति पञ्च धातुरव्ययः। पञ्चाप्यते विभागा आमोदप्रमोदानाम्, ज्ञानविज्ञानानाम्, चेतनाशक्तेः, सर्वविधप्राणानाम्, वाचां चाऽवरोधाय पञ्च कोशा भवन्ति। विभज्यैते सर्वेऽस्मिन्नव्यये प्रतितिष्ठन्ति। इत्थं च पञ्च क्षराः, पञ्चाक्षराः, पञ्चाव्ययधातवः—इत्येताः पञ्चदश कलाः स्युः। परात्पर[१]स्तासां षोडशीकला। स इत्थं षोडशकलः पुरुषः (षोडशी)। षोडशकलं वा इदं सर्वम् (कौ० ब्रा० १६।४) इत्याहुः। तेष्विदमव्ययं न कारणं न कार्य्यम्। अथाक्षरं निमित्तकारणम्, क्षरं तु समवायिकारणं परिणतं कार्य्यजातं चेति विभागः॥

क्षरविकाराः सर्वेऽप्यमी अक्षरादेव जायन्ते। ते चाक्षरप्राणा ब्रह्मविष्ण्विन्द्राग्निसोमाख्याभिः प्रतीताः पञ्चजातीया एव भवन्ति। तेषु चायं मध्यमः प्राणः इन्द्रः प्रतिपत्तव्यः। "एकैको वै जनतायामिन्द्रः" (तै० ब्रा० १।४।६) इति श्रुतिसिद्धान्तात्। स

---

परत्र प्रेरयतीति इदन्द्र एव इन्द्र इत्युच्यते परोक्षप्रियतयेत्यप्युक्तम्। त इमे त्रयः प्राणा अक्षरावयवाः सर्वेषां वस्तूनां नाभौ केन्द्रे तिष्ठन्तीति नभ्या इत्युच्यन्ते। अथेन्द्रेण वहिर्निःसारितैः प्राणैः पृष्ठं नाम धरातलं संपद्यते। तत्संपादकावग्नीषोमौ। तयोः स्वरूपं कार्यं च मूल एव स्पष्टीकृतम्। एताभ्यामेव जगत् संपद्यते। इमौ चाग्नीषोमाविन्द्रसहचरौ। प्राणानां वहिः प्रक्षेपकस्येन्द्रस्य स्वयमपि वहिः पृष्ठपर्यन्तं गमनात्, तत्रैव चाग्नीषोमयोः प्रादुर्भावात्। तस्मात् त्रयं संमिलितमिदं रूपं (इन्द्राग्निसोमसमष्टिभूतम्) महेश्वरपदेन पौराणिक्यां परिभाषायामाख्यायते। त्रयाणां समष्टिरूपत्वेन महत्त्वान्महेश्वरः त्रिदेवरूपत्वात् त्रिनयनोऽपि। "वन्दे सूर्यशशाङ्कवह्निनयनम्" इति हि महेश्वरस्तुतिः। तत्र सूर्य इन्द्रप्राणप्रधान इति "यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी" (वृहदा० ८ अ० ४ पा २२ क) इत्यादि श्रुतिपरिशीलनेन स्फुटमेव। शशाङ्कश्चन्द्रः सोम इति प्रसिद्धमेव। वह्निरग्निस्तु स्फुटमेवोक्त इति त्रिनयनत्वेन त्रिरूपता व्यञ्जिता। स्वगतप्राणानामन्यत्रोपसंक्रामणमेव रोदनम्, तद्धेतोरयं रुद्रोऽप्युच्यते। अग्नीषोमौ पशू, तावस्य वशगाविति पशुपतिरित्याद्यनुसन्धेयम्। यद्धि स्वभूतं वहिर्निर्गच्छति, तस्य पूरकत्वेन स्वरूपरक्षकत्वाद् विष्णुः पालक इत्युच्यते, स्वभूतस्य प्रक्षेपकत्वात्तु इन्द्रः संहारकः। अथ प्रतिष्ठैव वस्तुनः सत्त्वम्, तत्संपादकत्वाद् ब्रह्मा जनकः। वस्तुतस्तु एकतः प्रक्षेपणेनापरत्र विभिन्नवस्तुजननात्, परत आदाने परस्योपक्षयाच्च सर्वेऽपीमे जनकाः, पालकाः संहर्तारश्च विवक्षाभेदेन। ततस्त्रयोऽपीश्वरा उच्यन्ते। नभ्यास्त्रय ईश्वराः, पृष्ठ्यौ तु द्वौ जगदिति पञ्चभिरेवाक्षरैस्सर्वं व्याप्तम्। एषां सर्वेषां तत्त्वं शारीरकविमर्शे गीताविज्ञानभाष्यस्याचार्यकाण्डे च ग्रन्थकर्त्रा विस्तरेण व्याख्यातम्। तदेवेह संक्षिप्य प्रदर्शितमेतद् ग्रन्थालापनोपयुक्तम्। अव्ययपुरुषस्य पञ्चकलाश्च पञ्चकोशरूपेण तैत्तिरीयोपनिषदि समाम्नाताः। जगति ये आनन्दाद्या अनुभूयन्ते, तेषामिमे कोशाः निधानस्थानानि। इत एव जगत्यानन्दाद्याः प्रचरन्ति। सर्वनिधानमव्ययः पुरुष इति मूल एव स्फुटम्। अन्यत् सर्वं सरलया भाषया मूले निबद्धमिति न टिप्पणापेक्षम्।

[१] नामविशिष्टरसरूपो यः परात्पर उक्तः, यतोऽनन्तरं पुरुषाणां प्रादुर्भावः, तत्र न सन्ति कला इति स एकरूप एव गण्यते। सर्वविशिष्टनिरूपणे सोऽप्येककलारूपेण गण्यते।

सप्तपुरुषः प्रजापतिरात्मा




५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

५ अव्ययः
५ अक्षराः
५ क्षराः
१ परात्परः

आधार

पुरुषः

षड्विंशे द्वे शते प्राणानां प्रजापतिः

हि सर्वानन्यांस्तान् प्राणानिन्द्रियेणेन्धे। त इद्धाः सप्त नानापुरुषानसृजन्त । तैरेव सप्तभिः पुरुषैः स पूर्वनिरुक्तोऽति[१]ष्ठावा पुरुषो गर्भीभवति । एष खलु पुराणः पुरुषः सप्तस्वेतेषु यज्ञपुरुषेष्ववारपारीणोऽभिव्याप्नोति ।

[२]तत्र यदूर्ध्वं नाभेस्तौ द्वौ, यदवाङ्नाभेस्तौ द्वौ, त इमे चत्वारः पुरुषा आत्मा। यस्य वा शरीरभागस्य सत्त्वे शरीरिणः सत्त्वं न च्यवते सोऽङ्गी पुरुषोऽङ्गपुरुषाणामात्मा । येषां तु विनाशेऽपि वस्तुनः सत्त्वं नापोद्यते, तान्यङ्गानि पक्षपुच्छानीति विद्यात् । अथैतस्मादात्मनः पुनरन्यौ द्वौ पुरुषौ पक्षौ । तावाकुञ्चनप्रसारणाभ्यां विक्रमहेतू भवतः ॥ अथ पुच्छमेकः प्रतिष्ठाप्राणः ॥ यतः खलु शरीरमिदं पृथि[३]व्यनुगृहीतं तदायत्तं दृश्यते स प्रतिष्ठाप्राणः। तदित्थं [४]सप्तभिः पुरुषैः कृतरूपो योऽयमेकः पुरुषः, स चित्यो[५]ऽग्निः॥ स प्रजापतिः।

---

[१] सर्वव्यापकः सर्वं जगदतिक्रम्य स्थितस्त्रिपुरुषसमष्टिरूपः पुरुषोऽतिष्ठावा। तत्रान्तःस्थिताः तद्गर्भभूताः सप्तपुरुषा वक्ष्यमाणाः । ते यज्ञपुरुषा उच्यन्ते, व्यापकस्तु पुराणपुरुषः ।

[२] सप्त पुरुषान् विभजते ।

[३] पृथिवीत्युपलक्षणम् । अस्मादादिशरीरं पृथिवीव्यष्टिभूतं पृथिवीजन्यमिति तस्य प्रतिष्ठा प्राणेन पृथिव्यैव संबन्धो भवतीति दृष्ट्या पृथिवीपदमुपात्तम्। स्वसमष्ट्या स्वजनकेन संबन्धस्थापकः प्राणः पुच्छपदेन व्यपदेश्य इति यावत् ।

[४] इत्थं सप्तधा विभक्तस्य प्राणस्यावस्थानमस्मच्छरीरेऽप्युपलभ्यते। मानुषशरीरे हि चतस्रो गुहाः—शिरोगुहा, उरोगुहा, उदरगुहा, वस्तिगुहा चेति। प्रत्येकं च गुहासु इन्द्रियरूपेण सप्तधा विभक्ताः प्राणा उपलभ्यन्ते । तत्र शिरोगुहा सर्वस्यापि शरीरस्य श्रीरूपा-सारभूता देवानां-द्योतमानानां ज्ञानेन्द्रियाणां स्थानं मूलोक्तरीत्या। तत्रापि प्राणानां सारभूतानां सप्तधावस्थानम्—द्वौ कर्णौ पक्षस्थानीयौ बहिर्निःसृतौ, द्वे चक्षुषी, द्वे नासाविले चेति चत्वार आत्मस्थानीयाः, मुखविलं तु प्रतिष्ठारूपं पुच्छस्थानीयम् । एषां सप्तानां श्रीभूतानामपि श्रीः ब्रह्मरन्ध्रम्, यत्सूर्येण संबद्धम्, यत्रार्यैः सर्वश्रेष्ठत्वद्योतनाय ध्वजरूपा शिखा ध्रियते। सा च न केवलं प्राधान्यख्यापकध्वजरूपैव, अपि तु भावनाजनितस्य कर्मजनितस्य चातिशयस्य बहिर्निःसरणनिवारिका। केशा हि विद्युत्प्रसारणनिवारका इत्याधुनिकेन विज्ञानेनापि साधितमिति न प्रसक्तानुप्रसक्तौ विस्तरभिया पतामः। द्वितीयायामुरोगुहायां हस्तौ बहिर्निःसृतौ पक्षस्थानीयौ, द्वौ फुप्फुसौ द्वौ स्तनौ चेति चतस्रस्तद्गताः शक्तय आत्मस्थानीयाः। हृच्छिद्रन्तु सप्तमं प्रतिष्ठारूपं पुच्छस्थानीयम्। एषां श्रीश्च कण्ठकूपः शिरःस्थानीयः। तृतीयस्यामुदरगुहायां दक्षिणोत्तरयोरन्त्रयोः पक्षस्थानीयता, ते बहिर्निःसरन्ती अपि सौरस्य क्रान्तिवृत्तस्य परावृत्तस्य द्वेधा मोटितत्त्वाद् द्विर्मोटिते । 'नूनं जनाः सूर्येण प्रसूताः' इति भगवती श्रुतिः सूर्यस्यैव जगत्प्राणिजनकतामाह, तदनुसार्येव शरीरसंनिवेशो भवतीत्यन्यत्र विस्तरेणानुसन्धेयम् । तदनु यकृत्, प्लीहा, आमाशयः, पक्वाशय इति चत्वार आत्मस्थानीयाः, तदवयवगताः प्राणशक्तयस्तत्तत्कार्यनिर्वाहिकाः। नाभिश्चास्या गुहायाः पुच्छभूता प्रतिष्ठा। एतेषां श्रीश्च हृद्रन्ध्र एवोरोगुहापुच्छेन सामानाधिकरण्यमाप्ता। अथ चतुर्थ्यां वस्तिगुहायां द्वौ पादौ पक्षस्थानीयौ बहिर्निःसृतौ। मेढ्रगतं छिद्रद्वयम् (मूत्रनिः-

तस्मिन्नेते चीयमानाः सप्त पुरुषाश्चित्यं शरीरं नाम ॥ अथ यैतेषां सप्तानां पुरुषाणां श्रीर्यो रस आसीत्, तमूर्ध्वं समुदौहन्। सोऽयमत्र चितेनिधेयोऽग्निः। तदस्य शिरोऽभवत्। तस्मिन्नेतस्मिन् सर्वे देवाः[१] श्रिताः। अत्र हि सर्वेभ्यो देवेभ्यो जुह्वति।

इत्थं च प्रथमः पुराणपुरुष आधारः। स हि सप्तानामेषामावपनरूपत्वादेकीभावायोपयुज्यते। तं वयो[२]नाधपुरुषं वक्ष्यामः। तत्रैते सप्त पुरुषा वयांसि। सप्ताप्येते चित्योऽग्निरेकः शरीरम् ॥ अथैतस्मिन्नाधीयमानाः सप्त [३]श्रियो निधेयाग्निः पुरुषः। स आहवनीयः। तथा चेत्थं वयो[४]नाधपुरुष (१) वयः पुरुषा (२) हवनीय पुरुषैरेतैं (३)

---

सारकं वीर्यनिःसारकं च) द्वावण्डकोशौ चेति तद्गताः शक्तयोऽत्रात्मस्थानीयाः। गुदा च पुच्छभूता प्रतिष्ठेति। एषां शिरोभागभूता श्रीश्च नाभावेवोदरगुहापुच्छेन सामानाधिकरण्यमाप्ता तिष्ठति। अनयैव दिशा सर्वत्र सप्तानां प्रणानां स्थितिरूह्या विवेचकैः।

५ अग्नीषोमौ जगदुत्पादकौ यावक्षरकलारूपौ व्याख्यातौ, तयोरग्निर्द्विधा भिद्यते—चित्यश्च चिते निधेयश्च। अग्निरयं प्राणस्थानीयः सर्ववस्तुविधारकः परोक्षः (इन्द्रियैरग्राह्यः) सोमस्तु दृश्यावयवरूपो भूततां गतः। तत्र शक्तिभूतस्याग्नेश्चयनेन (ऊर्ध्वाधोभावविन्यासेन) वस्तुस्वरूपं निर्मीयते, तदनुसार्येव सोमस्यापि ऊर्ध्वाधोभावसंनिवेशो भवतीति। इत्थं वस्तुस्वरूपनिर्माणे संलग्नोऽग्निश्चित्य इति वैदिकपरिभाषायामुच्यते। यस्तु 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति न्यायेन वस्तुस्वरूपनिर्माणोत्तरं तद्वस्तुप्राणरूपतया तत्र शक्तिरूपेण प्रविशति, स चितेनिधेय इत्युच्यते। प्रकारान्तरेणापि द्वैविध्यमुच्यत उत्तरत्र। शरीरं प्राणरूपः पुरुषश्चेति। तत्र सप्त ये यज्ञपुरुषा आख्याताः, ते शरीरम्, त्रिपुरुषरूपः पुराणपुरुषस्तु एषामवष्टम्भकः प्राणरूपः। शरीरेऽपि सप्तपुरुषाश्चित्याग्निरूपाः, श्रीरूपः शिरोभागस्तु चितेनिधेय इत्युत्तरत्र स्पष्टीकृतं मूले।

१ शिरो हि देवानां स्थानम्। अत्र यज्ञ्ज्ञानादिकं दीयते-अर्थाद्यदत्रानुप्रविशति, तेन देवा एव पुष्यन्ति।

२ प्रकारान्तरेणापि द्वैविध्यमाह—वयांसि च वयोनाधश्चेति वैदिकी परिभाषा। यत्रानेके समवेत्य तिष्ठन्ति, स वयोनाधः—पञ्जरस्थानीयः, यानि तु तत्र समवयन्ति तानि वयांसि। आवपनम्—आधारो वयोनाधः, समवेतानि आधेयानि वयांसि। उक्ताः सप्तयज्ञपुरुषाः पुराणपुरुषे एकीभवन्ति—इति पुराणपुरुषो वयोनाधः, यज्ञपुरुषास्तु वयांसि।

३ सप्तानां यज्ञपुरुषाणां सारभूता श्रीः शिरोरूपेण योपरि तिष्ठति, यत्र देवा वसन्ति, देवेभ्यश्च यत्र हूयत इत्युक्तम्, सा आहवनीय पदवाच्या, हवनाधारत्वात्।

४ वयोनाधाद्यास्त्रयः शब्दाः, अतिष्ठावाग्न्यादयस्त्रयः शब्दाश्च पर्यायाः। सर्वेषां समवायः प्रजापतिरित्युच्यते। नभ्यः प्रजापतिः, सर्वः प्रजापतिरिति द्विविधः प्रजापतिः प्राग् व्याख्यातः। प्रकारान्तरेणापि प्रजापतिर्द्वेधा श्रुतिषु परिभाष्यते—प्रजाः पृथक्कृत्य तदधिष्ठाता प्रजापतिरेकः, प्रजा अपि स्वरूपेऽन्तर्भाव्य प्रजासहितः पतिः प्रजापतिः सर्वः प्रजापतिरित्यपि श्रौती परिभाषा, यतो हि प्रजा अपि तज्जन्या एव भवन्तीति न पृथग्भूताः, अपि तु तत्स्वरूपप्रविष्टा एवेति। शरीराधिष्ठाता केवलात्मा प्रजापतिः, शरीरविशिष्ट आत्मापि प्रजापतिरिति यावत्। तत्र

रतिष्ठावाग्नि (१) चित्याग्नि (२) निधेयाग्नि (३) भिर्वा कृतरूपे पुरुषे प्रजापतिशब्दो निरूढो द्रष्टव्यः ।।

तमेतं प्रजापतिं सर्वासु भूतसृष्टिषु बीजं विजानीयात् ।। नैतमव्ययं क्षराक्षरसंपन्नं प्रजापतिं विना कदाचिदपि क्वचिदपि काचिदपि भूतसृष्टिः कथमपि संभाव्यते ।।१।। उक्तं च "एष वै प्रजापतिर्य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु-प्रजायन्ते" (शत० ४।२।३।१६) इति ।। (शत० ४।४।८।१) एष ह वै प्रजापतिः सर्वं करोति ।। (शत० १३।२।६।१) ।। इत्यादि ।

स एष प्रजापतिः [१]परात्पर एव तावत् स्याद्, यावदमुष्मिन् त्रयी विद्या ब्रह्म नावि-

---

पृथक् पृथग् गणनायां सप्तपुरुषाः प्रजाः शरीरं वा । त्रिपुरुषात्मक एकपुरुषस्तु प्रजापतिरात्मा । सर्वपुरुषरूपनिरूपणे तु सर्वे संमिलिताः प्रजापतिरिति । अन्येषामुत्पत्स्यमानानां चायं समष्टिभूतः प्रजापतिरेवात्मा भवति ।

एतत्सर्वं स्पष्टं बोधयितुमालेख्यम् (चित्रम्) अत्र निहितम् । अस्मिन्नालेख्ये सप्तयज्ञ-पुरुषाः आत्मा, पक्षौ, पुच्छमिति क्रमेण संनिवेशिताः, मध्ये चत्वार आत्मानः, द्वयोर्भागयोर्द्वौ पक्षौ, अधस्तु प्रतिष्ठारूपं पुच्छम् । एषु यज्ञपुरुषेषु प्रत्येकं स्त्रिपुरुषसमष्टया षोडशीपद-वाच्ययाऽन्तर्गर्भित इति तेषां गणनया ११२ पुरुषा वयांसि । तेषां नामानि पृथक् प्रकोष्ठेषु पार्श्वे निवेशितानि । वयोभेदेन वायोनाधा अपि भिद्यन्त इति तत्राप्येवं सप्तधा गणनया ११२ पुरुषा इति २२४ पुरुषाणां संख्या संपन्ना । वयसां श्रीः, वयोनाधानां श्रीश्चेति द्वयोः संमेलने २२६ पुरुषसंख्या निर्दिष्टा । यद्यपि द्वे श्रियौ अपि षोडशभिः कृतावयवे तथापि तयोरालेख्ये संनिवेशो न कृत इति तद्गणनापि न कृता । एवं चित्रं निभालनीयम् ।

[१] पूर्वं प्रलयावस्थायां प्रसुप्ते बले एक एवाद्वितीयो रसो ब्रह्मपदवाच्यः । जागरिते तु बले बलविशिष्टो रसः परात्पर इति श्रुतिषूच्यते, यं वेदान्तदर्शने विशिष्टं ब्रह्मेति नाम्ना व्यपदिशन्ति । तदनुक्रमेण पुरुषत्रयप्रादुर्भावः, ततश्च सप्तयज्ञपुरुषा आविर्भवन्ति—इति निरूपितम् । अथ परात्परो या बलविशिष्टो रस उक्तः, तस्मात्कथं पुरुषप्रादुर्भावः, को वा परात्परापेक्षया पुरुषे विशेषः, येन पृथङ्नाम तत्राधीयत इति ग्रन्थान्तरेषु विस्तरेण व्याख्यातं संक्षेपेणेहापि वक्तुमुपक्रमते । तस्यायं भावः—बलमाविर्भूतं स्वयं परिच्छिन्नत्वाद्रसमपि विभुं परिच्छिन्न दर्शयति, तत एव मितिसाधनत्वात्तद्बलं मायेत्युच्यते—इति निरूपितं प्राक् । एव परिच्छिन्नेष्वनन्तषु पुरुषनाम्नाभिधास्यमानेषु तत्त्वेषु प्रादुर्भूतेषु एकैकं परिच्छिन्न तत्त्वम-परमात्मसात्कर्तुमुत्तिष्ठत—यतो ह्यपरिच्छिन्न परिच्छदगतमपरिच्छिन्नमिव स्वस्वरूपमवाप्तु चेष्टत—इत्यस्ति प्राकृतो नियमः । यथा हि महतः सरसः पृथक् कृत्य निरुद्ध जल सतु भित्त्वा स्वधनेनैव संमिलितु धावति । यथा चास्मच्छरीरे निरुद्धः सौरः प्राणो ब्रह्मरन्ध्रान्निष्क्रम्य सूर्यं गच्छत्यनिशमिति मूले वक्ष्यते । यथा वाऽन्तःकरणपरिच्छिन्नोऽस्मदादि जीवः स्वभावे-नोपाधि निरस्य भूमरूपेण सम्पत्तु मुक्तिमभिवाञ्छतीत्यादि । अयमेव नियमोऽशनायापदन बृहदारण्यकादिषु परिभाषित इति विस्तरेण निरूपयिष्यते ग्रन्थोत्तरार्द्धे । इत एव स्वाभावि-कान्नियमात् परिच्छदं गत तत्त्वं व्यापनेन भिन्न सर्वमात्मनि निवेश्य विभुतामेव गन्तुमुत्तिष्ठते ।

भवेत्। विद्याब्रह्मव्यतिरेके तस्य दिग्देशकालानवच्छिन्नेन परात्परेणानन्यत्वात् पार्थक्येनो-

तदस्योत्थानमुक्थपदेन श्रुतिषु परिभाष्यते—उत्थमेवोक्थमिति। प्रदेशव्यापनरूपं चरणं चार्क-पदेनाभिहितं श्रुतिषु "सोऽर्चन्नचरत्" "अर्चतो वै मे कमभूदिति तदेवार्कस्यार्कत्वम्" (बृहदा० १ अ० २ ब्रा०) इत्यादिना। अथ यदपरं तत्त्वमात्मसात्करोति, सा अशितिः। उत्तरार्द्धे सर्वमिदं विध्रियते मूल एव। इम एव उक्थार्काशितयो वैज्ञानिका वेदा उच्यन्ते। एभिर्वे-दैरेव पुरुषस्वरूपसंपत्तिर्भवति, अयमेव च परात्परापेक्षया पुरुषे विशेषे वेदप्रादुर्भावो नाम। इमे एवापौरुषेया वेदाः, पुरुषप्रादुर्भावादपि पूर्वं प्रादुर्भूतत्वात्। इम एव च ब्रह्मणो निःश्वासभूताः, स्वभावादेव ब्रह्मणः प्रादुर्भूतत्वात्। अव्ययपुरुषस्य च या पञ्चमी कला-वागित्याख्याता सर्वकलापेक्षया स्थूला, तामाश्रित्यैव वेदानामेषां स्फुटः प्रादुर्भावः, पूर्वं तु अव्यक्तैव स्थितिरिति वाग्विवृता एव वेदा उच्यन्ते। वाग्रूपेणैषामेकता, तेन वाग्रूप एक एव वेदः, उक्थादिरूपेण तु त्रयो भेदाः। तत्र उक्थम् ऋग्वेदः, अर्को यजुर्वेदः, अशितिस्तु सामवेद इति। एते ब्रह्मनिःश्वसितानि वेदाः। अत्रार्कोऽग्निपदेन अशितिस्तु व्रतपदेन श्रुतिषु बहुधा व्यवह्रियते। इमे वेदाः सर्वत्र व्याप्ताः। एतेषां च त्रिरूपता ग्रन्थकृतान्यत्र निरूपिता—रसवेदाः१ वितानवेदाः२ छन्दो वेदाः३ इति। एते सूर्यमण्डले स्फुटं प्रादुर्भ-वन्तीति तत्रागत्य गायत्रीमातृका वेदा उच्यन्ते। विद धातुर्हि ज्ञानार्थः। यद्यपि शाब्दज्ञान-जनका एव वेदा ग्रन्थविशेषा इत्येव लोके प्रसिद्धिः परं वैदिक परिभाषायां यैर्वस्तुनः प्रत्यक्षं ज्ञानं जन्यते, तेऽपि वेदा एव। यद्धि पिण्डितं वस्तु एकत्र प्रदेशे तिष्ठति, तच्चक्षुषो दूरस्थतया नास्माभिर्द्रष्टुं शक्यते। यत्तु चक्षुष एव बहिर्निर्गमनं प्राचीनैः कैश्चन विद्वद्भिः कल्प्यते, तन्न समञ्जसं भवति, शरीरस्य भोगसाधनत्वेन शरीराद्बहिरिन्द्रियाणां ज्ञानजनकताया असंभ-वादिति विस्तरेणान्यत्र विवेचितं ग्रन्थकृद्भिरस्माभिश्च 'महर्षिकुलवैभव' नामके ग्रन्थे तद्व्या-ख्यायां च। प्रकाशकिरणा एव तत्तद्वस्तुस्पृशोऽस्मन्नेत्रयोरागत्य तद्वस्तुज्ञानं जनयन्तीत्याधु-निकानां वैज्ञानिकानां मतमपि न सम्यगुपपद्यत इत्यपि विवेचितमन्यत्र। तस्मात्तत्तद्वस्तु-केन्द्रगताः प्राणा यावच्छक्ति दूरदेशपर्यन्तमभितः प्रकाशकिरणैः सह प्रसरन्ति, तैरेव च चक्षुःसंबद्धैस्तत्तद्वस्तुज्ञानमुदेतीत्येव वैदिकविज्ञानसिद्धान्तः। एते च प्राणा अग्निप्रभवा अग्निरूपा इत्यग्निपदेन श्रुतिषूच्यन्ते। अयमग्निर्न भौतिकः, अपित्वक्षरपुरुषकलारूपः। यावती तत्तद्वस्तु प्राणानां व्याप्तिः, तावत्प्रदेशान्तर्गतैरेव जनैस्तद्वस्तु द्रष्टुं शक्यते, न ततो बहिः। प्राणानां च न्यूनाधिक्यतारतम्येन यावच्छक्तिप्रदेशावगाहो भवतीति सूची सन्निहितैरेव दृश्यते, पर्वतादि त्वतिदूरस्थैरपि। तत्र तत्तद्वस्तुपिण्डात्मिका मूर्तिः ऋक्पदेनोच्यते, ऋग्रूपाः प्राणा एव तत्तन्मूर्तिं निर्मिमत इति यावत्। तत्प्राणानामन्तिमं मण्डलं सामपदेन, मध्ये व्याप्ताः प्राणाश्च यजुः पदेनेति वैदिकी परिभाषा। तदेतत्—

ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः, सर्वा गतिर्याजुषी हैव शश्वत्।
सर्वं तेजः सामरूपं ह शश्वत् सर्वं हेदं ब्रह्मणा हैव सृष्टम्।
(तै० ब्रा० ३।१२।९।१–२)

इति तैत्तिरीयश्रुतै समाम्नातम्। सूर्यमधिकृत्य च—

"यदेतन्मण्डलं तपति तन्महोक्थम्, ता ऋचः, स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते, तन्महाव्रतम्, तानि सामानि, स साम्नां लोकः। अथ य एष एतस्मिन्मण्डले पुरुषः, सोऽग्निः।

पपत्तिर्नास्ति। स्वभावतश्चायं सर्वतः पूर्वं ब्रह्मैवात्मनि संसृजति—त्रयीं विद्याम् ॥

स हि यजूंषि, स यजुषां लोकः। सैषा त्रय्येव विद्या तपति।" (शत० १०।५।२।१,२) इति शतपथब्राह्मणे प्रपञ्चितम्। इमे विततनरूपत्वाद् वितानवेदाः। उक्थादिरूपेण ये मूलभूताः ब्रह्मनिःश्वसितवेदा अनुपदमेव व्याख्याताः, तेऽपि अत्र शतपथब्राह्मणे महोक्थमहाव्रताग्निशब्दैः संकीर्तिताः। सूर्य एव वेदा इमे स्फुटी भवन्तीत्युक्तं प्राक्, तस्मात् सूर्यमेवाधारीकृत्य ब्राह्मणेन ते बोधिताः, अनेनैव दृष्टान्तेन सर्वत्रैषां व्याप्तिरनुसन्धेया। सूर्यादिव सर्वेषु वस्तुषु व्याप्नुवन्तीति। अन्येषां प्राणान्तमुक्थपदेन व्यवहारोऽस्माभिः कृतः, सूर्यस्य तु तदुक्थं सर्वतो बृहदिति महोक्थपदेन तस्य ब्राह्मणे व्यवहारः। अशिति (अशन) पदेन व्रतपदेन च यत् सामास्माभिर्व्याख्यातम्, तस्य महाव्रतशब्देनोक्तब्राह्मणे व्यवहारः। अन्यत्र व्रतम्, सूर्ये तु महत्त्वान्महाव्रतमिति। अर्कस्य तु अग्निपदेन व्यवहारः कृतः। व्याप्ताः प्राणा अग्निप्रभवा इत्यनुपदमेवोक्तत्वात्। अत्र च ऋक्सामे आयतने वयोनाधरूपे मुख्यं तत्त्वं तु तत्र व्याप्तं वयोरूपं यजुरेवेति स एव ब्राह्मणे पुरुषपदेनोक्तः। यत्, जूः इति पदद्वययोगेन परोक्षविधया यजुः पदं शतपथब्राह्मणे व्याकृतम्, यदिति चलनशीलो वायुः, जूरिति च स्थितिशील आकाशः। इमावेव सर्वस्य जनकाविति तत्र स्फुटम्।

अन्यत्र तु बहुत्र ब्राह्मणेषु उक्थार्काशीति पदैरेव व्यवहारः। अथ "ऋच्यध्यूढं साम" इति श्रुत्युक्तदिशा साम ऋचा विना कृतं न भवतीति मूर्तिरूपा ऋक्प्राणा अपि सामप्राणैः सह अन्तिममण्डलपर्यन्तं व्याप्नुवन्ति। तत्र चायं क्रमः, मूर्तेः केन्द्रविन्दुः स्थिर इति स न प्रसरति, तत्प्रसरणे मूर्तिविलोपप्रसङ्गात्। केन्द्रेण बद्धमेव सर्वं तिष्ठतीति केन्द्रचलने न वस्तुस्वरूपस्थितिः, तस्य हि प्रजापतिरूपता प्राङ्निरूपितेति। केन्द्रविन्दोरुभयपार्श्वगतं च विन्दुद्वयं सूचीमुखरूपेण विरुद्धदिशि तिर्यक् प्रसरद् द्वितीयविन्दावेकीभवति—इति मुख्यमूर्तेरभितो यावत्यो मूर्तय उत्पद्यन्ते—ता मूलापेक्षया विन्दुद्वयपरिमाणन्यूना भवन्ति। एवमेव तासां मूर्तीनामपि केन्द्रविन्दुर्न प्रसरति, पार्श्वविन्दू चाग्र एकीभवत इति तृतीयबिन्दौ मूलापेक्षया विन्दुचतुष्टयह्रासः। अनेनैव क्रमेणाग्रे ह्रास इति विप्रकर्षाद् वस्तुस्वरूपं लघुभूतमस्माभिः प्रतीयते।

दूराद्वस्तु पर्वतवृक्षादि कुतो लघु प्रतीयत इत्यस्य हेतुं वैज्ञानिका आधुनिका न सम्यग् विवरीतुं शक्नुवन्ति, वैदिकेन तु विज्ञानेनोक्तरीत्या सर्वमिदं विज्ञायते। त इमे वस्तूनामल्पत्वप्रदर्शकाः छन्दोवेदा इत्युच्यन्ते। अनेकत्र तु शतपथादिब्राह्मणेषु पृथिव्यन्तरिक्षद्युलोकानामेव क्रमेण ऋग्यजुःसामत्वमुक्तम्, तत् पृथिव्या वितानवेदाभिप्रायेण बोध्यम्। पार्थिवोऽग्निप्राणः पृथिवीकेन्द्रान्निर्गत्य सौररश्मिमण्डलपर्यन्तं गच्छति। अत एव पृथिव्याः साम रथन्तरमित्युच्यते—यतः स्थानात् सूर्यस्य रश्मिमण्डलं प्रसर्तुमारभते—स एव सूर्यरथ उच्यत इति स्फुटं पुराणादिषु। सूर्यमण्डलं स्वतः कृष्णम्, तद्रश्मीनां सर्वत्र व्याप्ते सोमे आघातात् प्रज्वलिता रश्मयः प्रसरन्तीति "आकृष्णेन रजसा वर्तमानो·········हिरण्ययेन सविता रथेन" इत्यादौ प्रसिद्धे सौरमन्त्रे स्फुटमाम्नातम्। तद्रथपर्यन्तमेव पृथिवीप्राणानां गमनात् पृथिव्याः साममण्डलं रथं—सूर्यरथं तरतीति—तदुल्लङ्घ्य गच्छति—इति रथन्तरमुच्यते। सूर्यमण्डलस्य तु साम महदिति तद् बृहत्सामेत्युच्यते। तस्मात् पृथिवीसंबन्धेन

सैवास्मै[१] प्रतिष्ठा भवति। तस्मादेवाहुर्विद्वांसो महर्षयः—"ब्रह्मास्य[२] सर्वस्य प्रथमजम्। ब्रह्मास्य सर्वस्य प्रतिष्ठेति॥" (शत० ६।१।१।८,१०)

ब्रह्मणा त्रय्या विद्ययाक्तः स प्रजापतिरेकैको यज्ञो[३] भवति। "प्रजापतिर्वा एष वितायते यद् यज्ञः॥"

---

पृथिवीमण्डलमेव ऋक्, सूर्यमण्डलसविधे तदीयं साम। उक्तविवस्वद्रथपर्यन्तमेव पृथिवीमण्डलं दृश्यतेऽतिसूक्ष्मम्, ततः परं तु न दृश्यते। मध्येऽन्तरिक्षे तु व्याप्ताः पृथिवीप्राणा यजूंपि, तत्संबन्धादन्तरिक्षमेव यजुरित्युक्तम्। गतिस्थितिशीलाः प्राणा एव यजुः पदेन समाम्नाता इति प्रागुक्तम्। एषामेव परिणतिः प्राणरूपौ वाय्वाकाशावित्यपि उक्तमेव। अद्‌भुतमिदं सादृश्यम्—यदाधुनिका वैज्ञानिका अपि गतिस्थितिशीलम् 'इलैक्ट्रोन्', 'प्रोट्रोन' नामकं तत्त्वद्वयमेव जगन्मूलमभ्युपगतवन्तः। शतपथादिब्राह्मणेष्वपि च 'यत्' 'जूः' पदाभिधेयं तादृशमेव तत्त्वद्वयं जगन्मूलतयोक्तम्। परमिदं पाश्चात्त्यवैज्ञानिकैराविष्कृतं द्वयंभूतरूपम्। तज्जनकेषु प्राणेषु तेषामपि च जनकेष्वक्षरादिषु तु वेदव्याख्यातेषु नाद्यावधि वैज्ञानिकानां दृष्टिर्गतेत्यास्तामप्रकृतविस्तरः। इमे त्रय आग्नेया वेदाः। सामस्य तु चतुर्थोऽथर्ववेदो भृग्वाङ्गिरस इति स नेह प्रपञ्चितोऽतिविस्तरभयादिति।

तदित्थं वैज्ञानिकवेदतत्त्वमेतद्ग्रन्थबोधनाय संक्षेपेण विवृतम्। विस्तरस्तु विद्यावाचस्पतीनां ग्रन्थान्तरेषु द्रष्टव्यः। इह तु उक्थादिप्राणभूतमूलवेदप्रतिपादनमेव प्रकृतम्, तेषां पुरुषस्वरूपाविर्भावकत्वात्।

[१] उक्ता वैज्ञानिका वेदा एव ब्रह्मणा प्रथममाविर्भाविताः, अत्रैव च सर्वतः पूर्वं मूलभूतं ब्रह्म प्रतिष्ठितमिति वेदा एव प्रतिष्ठा उच्यन्ते।

[२] अत्र ब्रह्मपदं वेदबोधकं द्रष्टव्यम्। ब्रह्मविद्या वेदशब्दाः पर्यायत्वेन वैदिकेषु प्रसिद्ध्यन्ति, "त्रयं ब्रह्मसनातनम्" मनुः, "सैषा त्रयी विद्या तपति" "त्रयो वेदा" इत्यादि समानार्थव्यवहारदर्शनात्।

[३] अथैवं यज्ञस्यापि परिभाषा ग्रन्थान्तरेषु विवृता संक्षेपेण प्रदर्श्यते विबोधाय। मनुष्यैः संपाद्यमाना ये यज्ञा ब्राह्मणग्रन्थेषु सपरिकरं विवृताः, तेषां लक्षणं मीमांसायां कृतम्—"द्रव्यदेवतात्यागा यागः" इति। देवतोद्देश्येन द्रव्यत्यागो याग इति तदर्थः। परमिमे यज्ञाः प्राकृतं यज्ञमाधारीकृत्य विधीयन्ते, तस्य प्राकृतस्य यज्ञस्य संकेतस्तत्तत्कर्मोपपत्तिप्रदर्शनाय ब्राह्मणग्रन्थेषु क्रियते, तं संकेतमर्थवादपदेनाभिधायोपेक्षन्ते मीमांसकाः। कर्मकाले हि तेषां संकेतानां नोपयोगः, विधिमनुसृत्य कर्मकरणेनैव कृतार्थाः कर्मपरायणा जना इत्येवोपेक्षायां हेतुः। यज्ञस्य मुख्यं विज्ञानं तु तेष्वेवार्थवादेषु निहितम्। प्रकृत्या हि प्रतिक्षणं यज्ञः संपाद्यते, तेनैव जगदुत्पाद्यते तेनैव च ध्रियते, यज्ञो यदि न स्यात्, जगदिदं तदैव विनश्येत्। अभिनवमपि च वस्तु यज्ञेनैवोत्पाद्यते प्रायेण। तदुक्तं भगवद्गीतासु—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्। इत्यादि।

बहुविधाश्च यज्ञा भाविता गीतासु विवृताः। आस्ताम्, वैज्ञानिकयज्ञप्रक्रिया प्रस्तुता।

(तै० ब्रा १।४।६) इति तित्तिरिश्रुतेः ॥ "एव वै प्रजापतिर्य एव यज्ञस्तायते" (शत० ४।४।८।१) ॥ इति वाजसनेयश्रुतेश्च ।

बहुष्वपि सत्सु यज्ञेषु शरीरे तावदिह दश यज्ञा विशिष्य प्रवर्तन्ते । द्वौ चयनयज्ञौ, द्वौ हवनयज्ञौ, द्वौ विराड्यज्ञौ, द्वौ वषट्कारयज्ञौ, द्वौ अन्नपरिग्रहयज्ञौ चेति । येन कर्मणा

---

तत्र संसारदशायामग्नौ सोमाहुतिः, तेन सोमस्याग्निरूपता प्राप्तिश्च यज्ञ इति बोध-सौकर्याय पूर्वमनुसन्धेयम् । सूर्यमण्डलस्थे आदित्याग्नौ परमेष्ठिमण्डलादनन्तः सोम आहूयते प्रकृत्या, स एव च सौरप्रकाशरूपेण परिणतो जगति व्याप्नुवन् जगज्जीवयति जनयति च । एवमेव पार्थिवेऽग्नौ हुता प्रकृत्या ब्राह्मणादिभिश्च हुताः सोमा अपि सूर्यमण्डले गच्छन्तीति सूर्यमण्डलस्थः प्रजापतिर्मुख्यो यज्ञः । तदनु पृथिवीमण्डलस्थः प्रजापतिरपि यज्ञः । प्रजापतिश्च नभ्यः पूर्णश्चेति द्विविधो व्याख्यातपूर्वः । तत्र नभ्यप्रजापतेर्यज्ञ उत्तिष्ठते, सर्व-प्रजापतौ तु संतिष्ठते. सर्वः प्रजापतिर्यज्ञेनैव ध्रियत इत्युभावपि यज्ञरूपौ । एवं सर्वेष्वपि वस्तुषु एकैकप्रजापतिस्थितिर्मूले व्याख्याता, ते सर्वेऽपि यज्ञमयाः, सर्वत्रैव प्राणानां गत्यागत्योः सद्भा-वात् । यतो हि न किञ्चिन्निष्क्राम्यति, न वा तत्परिपूरणाय तत्र प्रविशति, न तद्वस्तु ध्रियते । प्राणिशरीरेषु वृक्षादिषु दीपादिष्विदं स्फुटमनुभूयते, प्रस्तरादिष्वपि च जीर्णतां दृष्ट्वानुमीयत इति व्याख्यातपूर्वम् । पार्थिवेऽग्नौ बीजरूपस्य जलस्य च सोमस्याहुत्या अङ्कुराद्युत्पत्तिः । जलादेव यज्ञप्रक्रियया फेनः, मृत्स्ना, सिकता, शर्करा, अश्मा, अयः, हिरण्यम्—इति क्रमेणोत्पत्तिः शतपथब्राह्मणादिषु व्याख्याता, ग्रन्थकृता चान्यत्र बहुत्र विवृता । इतोऽपि विस्तरेण यज्ञव्याख्यायां क्रियमाणायाम्—प्राणः, ऊर्क्, अन्नम्—एषामन्योन्यस्वरूपपरिवृत्तिर्यज्ञ इति भाव्यम । अन्नं हुतमूर्ग्रूपेण परिणतं प्राणरूपतां याति, प्राणश्चैवमन्नरूपेण परिणमती-त्ययं यज्ञः सततं प्रवर्तते—तेनैव जगदुत्पत्तिः स्थितिश्च । त्रिधा हि संयोगजा सृष्टिर्जायते, युद्धधर्मेण, मैथुनधर्मेण, यज्ञेन च । यत्र द्वे अपि तत्त्वे स्वरूपात्प्रच्युते तत्त्वान्तरमुत्पादयतः, यथा कोलाः, शोरापदवाच्यं च द्रव्यं संभूय विस्फोटनद्रव्यम् (बारूद) उत्पादयतः, यथा वा अग्निजले धूममुत्पादयतः, स युद्धधर्मः । यत्र च द्वावपि जीवन्तावेव सर्वांशेन तृतीयमुत्पादयतः, स मैथुनधर्मः, यथा प्राणिभ्यः प्राण्यन्तरोत्पत्तिः, यथा वा सूर्यातप—पार्थिवरसाभ्यां वृक्षाद्युत्पत्तिः, तत्र पुष्पफलाद्युत्पत्तिश्च । यत्र तु एकमपरस्याङ्गभावमुपगम्य तद्रूपं भवति, तत्त्वान्तरं सृजति वा, स यज्ञः । यथा वायुर्जले प्रविष्टो जलाङ्गभावमुपगम्य बुद्बुदफेनादि सृजतीत्युक्तान्युदा-हरणानि । तत्त्वदृष्ट्या तु युद्धे मैथुने चापि यज्ञोऽनुस्यूत एव । वस्तुतस्तु अग्नीषोमादि-सृष्टिरपि यज्ञेनैवेति सर्गारम्भे उक्थार्काशितयो या व्याख्याताः, ता एव यज्ञः । अशितिरपि अर्कगृहीता उक्थभावमेव गच्छति, उक्थश्चाप्यर्करूपेण परिणतमशितिरूपतां गच्छतीति । तदित्थं वेदा एव यज्ञः, यज्ञ एव च वेदा इत्यनयोरैक्यरूप्यमेव तत्र तत्र श्रुतिषु व्यवहृतम् । तदिदं यज्ञस्वरूपं बुद्धौ संस्थाप्याग्रे मूलग्रन्थः पर्यालोच्यो यत्र नाना विधा यज्ञा विवृताः, परिभाषाज्ञाने स ग्रन्थः सुबोधः स्यादिति परिभाषा विवृता । अग्रे न विस्तरो विशेषयज्ञानां क्रियते ।

धातवः [१]शारीरा इहात्मनि प्रचीयन्ते, स एकश्चितियज्ञः। येन कर्म्मणा अग्निवाय्वादयो देवा [२]वाक्प्राणादिरूपैरिहात्मनि प्रचीयन्ते सोऽन्यश्चितियज्ञः।

सूर्यरसः प्राणः। पृथ्वीरसोऽपानः। प्राणोऽपाने अपानः प्राणेऽनवरतमन्योन्यस्मिन् पर्य्यायेण हूयेते। स एको होमः। तेनायं वैश्वानरोऽग्निरुदेति। अथ व्याने दैवः प्राण आहूयते। तेन प्रश्वासोच्छ्वासौ भवतः॥ श्रूयते च शतपथश्रुतौ—"अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति। स वै दैवः प्राणो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यतीति"। (१४।३ प्र० ३ ब्रा० २९) सोऽयं द्वितीयो होमः।

सोमं तावदेतम् अग्नावेव योनौ रेतोभूतं सिञ्चति। अग्निर्वै योनिर्यज्ञस्य। स ततः प्रजायते। तद्दश वा आहुतीः संपादयेद्, याभ्यो वषट् क्रियते। अयं वै यज्ञो योऽयं पवते। सोऽयम् एक इवैव पवते, सोऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः स एव क्लृप्तैः प्राणैरग्नेर्योनेरधिजायते। सैषा [३]दशाक्षरा विराट् सैषा संपत्। स यज्ञः। (शत० ११।१।२।२-३) इति, "अयं वै प्राणो योयं पवते'''योऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः। (शत० ५।२।४।१०)॥ सवित्रा[२] प्रसवित्रा, (१) सरस्वत्या वाचा (२) त्वष्ट्रा रूपैः (३) पूष्णा पशुभिः (४) इन्द्रेणास्मे (५) बृहस्पतिना ब्रह्मणा, (६) वरुणेनौजसा, अग्निना तेजसा (९) सोमेन राज्ञा, विष्णुनैव दशम्या देवतया (१०) प्रसूतः प्रसर्पामि। (यजुः सं०) (शत० ५।४।४।२)॥ अथैतस्मिन्नात्मन्यपरे दश धर्मा अविनाभावेन युज्यन्ते, तेनाप्ययं विराड् यज्ञः। स यथा [५]"छन्दोभिः सवनैः पृष्ठैर्ऋतुभिर्देवतागणैः॥ ऋग्भिश्च सामभिः प्राणैर्लोकैः स्तोमैं विराड् भवेत्॥६॥

अथ वेदः सत्यं वाक्। सा वाग् वितायमाना वष[६]ट्कारः। 'स एकविंशः स्तोमस्त्रयस्त्रिंशस्तोमो वा यज्ञः॥ तथा च श्रूयते—तद् यत् तत्सत्यं त्रयी सा विद्या। यज्ञं

---

[१] रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि आत्मनोऽङ्गभावं गच्छन्ति।

[२] अग्निर्वाग्रूपतां वायुश्च प्राणरूपतां गच्छतीति प्रागुक्तम्। तेन देवेभ्यः सूक्ष्मशरीरोत्पत्तिः सिद्धा।

[३] पूर्वं प्रतिज्ञातं द्विविधं विराड्यज्ञं विवृणोति। दशाक्षरं विराट् छन्दो वेदे प्रसिद्धम्। तदेवाधारीकृत्य यत्र कुत्रापि दशानां समुदायो भवति, तत्र विराट् पदेन व्यवहारः क्रियत इति वैदिकी परिभाषा।

[४] विराडङ्गभूतं श्रुत्युक्तं देवानामावेशं मन्त्रप्रामाण्येन स्फुटीकरोति।

[५] एतैः पदार्थैर्यज्ञस्वरूपं पूर्णं भवति। त एतेऽन्यत्र ग्रन्थेषु व्याख्याता नेह विस्तरभिया प्रपञ्च्यन्ते।

[६] प्रतिज्ञातपूर्वं चतुर्थं वषट्कारयज्ञद्वयमाह—अत्र वैज्ञानिकप्रक्रियया स्तोमस्वरूपबोधनमप्यावश्यकमिति तदपि संक्षेपेण विव्रियते। केन्द्रान्निष्क्रम्य बहिर्व्याप्नुवतां प्राणानां यानि ऋक्सामयजुर्मण्डलानि प्राग्व्याख्यातानि, तेषु केन्द्रमारभ्यान्तिममण्डलपर्यन्तं त्रयस्त्रिंशद् विभागाः कल्प्यन्ते। तत्र त्रयो भागा मूर्तिरूपे पिण्ड एवान्तर्गताः। ततः परं तु षण्णां षण्णां भागानां समूहरूप एकैकः स्तोमः। स्तोमो नाम संघात इति सुप्रसिद्धं संस्कृतभाषायाम्।

वै कृत्वा तद्देवाः सत्यं तन्वते ॥ (९।५।१।१८) अथापरो वषट्कारो येनायं जैवः प्राणोऽहरहः सूर्य्यमुपैति अहरहश्चास्मिन्नात्मनि सौरः प्राणोऽन्वावर्तते ॥ श्रूयते च "अहरहर्वा एष यज्ञस्तायते । अहरहः संतिष्ठते । अहरहरेनं स्वर्गस्य लोकस्य गत्यै युङ्क्ते । अहरहरनेन [1]स्वर्गं लोकं गच्छति" । (९।४।४।१५) इति ।

[2]अथ यदयं पुरुषोऽन्नं बुभुक्षते, अथाऽन्नं भुङ्क्ते सोऽयमत्रैकोऽन्नाहुतियज्ञः । अथ यदयमहर्निशं स्वत एव सप्तविधान्नानि भुञ्जानो जीवनं धत्ते ॥ प्रतिक्षणं किञ्चिदवश्यं जानाति, कर्म कुरुते, शब्दं शृणोति, वायुना युज्यते, तेजसा युज्यते, जलं पिबति, अन्नं भुङ्क्ते,

---

मन्त्रसंघाता एव स्तोमशब्देन कर्मकाण्डे प्रसिद्धाः, इह तु तन्मूलभूता वैज्ञानिकी प्रक्रिया व्याक्रियते । तत्रोक्तमूर्तिपिण्डाङ्गभागत्रयादनन्तरं षण्णां योजने नव भवन्ति, स त्रिवृत् स्तोम इत्याख्यायते—त्रिवृत्पदेन त्रिगुणितास्त्रयो नवैवोच्यन्त इति । तदनन्तरं षड्योजने पञ्चदशः स्तोमः, तदनन्तरं षड्योगे एकविंशः स्तोमः, ततः सप्तविंशः, ततश्च त्रयस्त्रिंशः इति पञ्च स्तोमाः । त्रयस्त्रिंशस्यार्द्धभागे सप्तदशः स्तोम इति संभूय षट् स्तोमा आख्यायन्ते । एषु एकविंशस्तोमपर्यन्तमग्नेर्व्याप्तिः, ततः परं तु सोमस्य । अग्निव्याप्तिपर्यन्तं तत्संघर्षपराहतः सोमः स्वस्वरूपेण स्थातुं न शक्नोति, सोऽग्निरूपतामेव गच्छति । अग्निव्याप्तेः परतस्तु सोमस्य स्वतन्त्रा स्थितिः । यद्यप्यग्नीषोमौ निरन्तरं सहचारिणावेव, एकेन विना अपरो न तिष्ठति, तथापि प्राधान्याप्राधान्यकृतोऽयं व्यवहारः । इमानेव षडग्नीषोमात्मकान् स्तोमानाप्याययितुं यज्ञे आहुतयोऽर्प्यन्ते, तत एव तत्र 'वौषट्' इत्युच्चार्यते । 'वौक् षट्' इति पदद्वयं परोक्षीकरणाय ककाररहितं वौषडिति प्रयुज्यते । वाक् शब्दे आकारोत्तरमकारस्य उकारस्य च योगेन निष्पन्नमौकारं संयोज्य 'वौक्' इति निष्पद्यते । अकारो मनसः प्रतीकम्, उकारश्च प्राणस्य । तेन मनःप्राणगर्भिता वाक् षट्सु स्थानेषु व्याप्ता—इति 'वौषट्' पदेन ध्वन्यते । एतेषां मनःप्राणवाचां वैज्ञानिकं रूपं व्याख्यातं पूर्वम् । स्तोमानामवयवाः प्रत्येकमहर्गणा इति श्रुतिषु परिभाष्यन्ते । त्रयस्त्रिंशात् स्तोमात्परमप्यस्ति वाचो व्याप्तिरष्टाचत्वारिंशदहःपर्यन्तम्, परं तत्राग्नीषोमयोर्व्याप्तिर्नास्तीति तत्र यज्ञसंबन्धोऽत्यल्पः । अयं स्तोमविषयः श्रुतिष्वतिगम्भीरः, ग्रन्थकृता च बहुत्र विस्तरेण व्याख्यातः । तस्य संकेतमात्रमिह परिज्ञानाय प्रदर्शितमिति ।

[1] स्वर्गलोकपदेन द्युलोकपदेन च सूर्यमण्डलमेवोच्यत इति भाव्यम् ।

[2] षष्ठे स्थान उक्तपूर्वं द्विविधमन्नपरिग्रहयज्ञमाह ।

[3] सप्तविधान्यन्नानि बृहदारण्यकोपनिषदस्तृतीयेऽध्याये पञ्चमे ब्राह्मणे व्याख्यातानि—

"यत् सप्तान्नानि मेधया तपसाजनयत्पिता

एकमस्य साधारणं द्वे देवानभाजयत्, त्रीण्यात्मने कुरुत । पशुभ्य एकं प्रायच्छत्" इत्यादि । वाक्, प्राणः, मनः, अन्नम् (व्रीह्यादि), पयः (जलम्), हुतम्, प्रहुतम्—इति सप्तान्नानि तत्र व्याख्यातानि । तत्र मनः पदेन ज्ञानम्, प्राणपदेन प्राणसाध्यत्वात् कर्म, वाक्पदेन शब्दम्, हुतप्रहुतशब्दाभ्यां हवनादिसाधनं तेजः, वायुं च विवक्षित्वा अन्नजले च स्वरूपेणैव संयोज्य प्रत्येकं प्राणिनां सप्तान्नानीति मूले व्याख्यातम् । एतैर्विना जीवनं न तिष्ठतीति । अन्नं जलं

सोऽयमस्मिन्नपरोऽन्नाहुतियज्ञः ॥ तदित्थमयं पुरुषो यज्ञः । [१]सप्त पुरुषाः आश्रयाः । सप्त पुरुषाः श्रियः । ते चतुर्दश । [२]यस्त्वत्र पुराणः पुरुषः स पञ्चदशः । अथ यस्तत्र वेदैः क्रियमाणो यज्ञ[३]पुरुषः स षोडशः । तदित्थं षोडशकलः प्रजापतिः । षोडशकलं वा इदं सर्वम् (कौ० ब्रा० १६।४) इत्याहुः ॥

स एष यज्ञ [४]एवात्मा । तथा च श्रूयते—"सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यद् यज्ञः ।" इति । अधियज्ञोहमेवात्र"—इति गीतावाक्यस्याप्यत्रैव तात्पर्य्यम् । आत्मेत्युच्यमानोऽर्थस्त्रय्यां विद्यायां प्रतिष्ठाब्रह्मणि प्रतिष्ठि[५]तस्तत्परिच्छेदात् पृथक्त्वेन प्रतिपन्नो वेदैः प्रतायमानो यज्ञस्वरूपः स एकः प्रजापतिर्वेदितव्यः ।

सोऽयमात्मा क्षराक्षरप्राणतारतम्यान्नानाविधो भवति ॥ अणोरणीयांश्च महतो महीयांश्च । तदुक्तम्—

अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ॥ तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति । आत्मन्युपसंक्रान्तस्य मृत्यु [६]प्रपञ्चस्यात्मनोन्मुग्धभेदस्यानात्मत्वनिर्धारणादात्मनो विशुद्धत्वप्रतिपत्तिः अयं मृत्योरत्ययः । एतदात्माणुत्वमहत्वनिबन्धनमात्रातारतम्येन समुच्चीयमानानां न्यूनाधिकाव्भागानां[७] क्षराणामेवेहात्मन्यालम्बितत्वादेतानि सत्त्वजातानि

---

च जीवनाधारतया प्रसिद्धमेव । तेजः पदवाच्यः प्रकाशोऽपि जीवनायावश्यकः । अत एवान्धकारे विकलता जायते । वायुग्रहणं त्वावश्यकं सर्वेऽपि मन्यन्ते । शब्दग्रहणमप्यावश्यकं प्राणिनाम् । निःशब्दे स्थलेऽपि वैकल्यं जायते । ज्ञानं क्रिया च जीवनस्वरूपमेव, ताभ्यां विना जीवनमेव किमिति । श्रुतेराशयस्तु तेजोवायुभ्यां शरीरस्थदेवानामाप्यायनम्, अन्नजलाभ्यां भूतात्मकपशुभागस्य; ज्ञानेन कर्मणा वाचा शब्देन च व्यावहारिकस्यात्मन इत्युन्नेयः ।

[१] आत्मपक्षपुच्छरूपेण व्याख्यातपूर्वाः सप्तपुरुषाः । श्रियश्चापि तत्रोक्ताः ।

[२] यस्याक्षरपुरुषस्यैते विस्तारभूताः, सोऽक्षरकलारूप इन्द्रः पुराणपुरुषः ।

[३] पूर्वं यः प्रजापतिर्व्याख्यातः, तं यज्ञमपि च चतुर्दशसु संयोज्य षोडशी प्रजापतिः संपद्यत इत्यर्थः ।

[४] यज्ञ एव सर्वव्यवहारपरिचालकः सर्वपदार्थस्थितिजनको व्यावहारिक आत्मेत्यर्थः । अयमपीश्वररूप एवेति गीताप्रामाण्येन बोधितम् । यज्ञरूपो यज्ञस्याधिपतिश्चाहमेवेति गीतातात्पर्यम् ।

[५] प्रतिष्ठाप्राणपरिच्छेदादात्मापि परिच्छिन्न इव भासत इत्यर्थः ।

[६] बलमेव मृत्युरिति पूर्वोक्तं स्मर्तव्यम् ।

[७] "वेत्थं यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति छान्दोग्यश्रुतावपामेव शरीरजनकत्वमाम्नातम् । शारीरकसूत्रभाष्ययोश्च तृतीयाध्यायस्य प्रथमे पादे तदेतद् विवृतम् । चन्द्रलोकादवरोहणं जीवानामवृरूपेण तत्र तत्रानुप्रवेशस्तत्र निर्णीतः । ये जीवाश्चन्द्रमसं न गच्छन्ति, "जायस्व म्रियस्व इति तृतीयस्थाने उपनिषद्युक्ता अत्रैव

तत्र तत्राणीयांसि च भवन्ति, महीयांसि च। तथा चायमात्मैवान्तर्निहितस्तस्य तस्य भूतजातस्य शरीरादिस्वरूपजनयित्रीणामपां [१]माता भवति ॥ आत्ममितिपरिमितशरीरत्वात् सर्वेषामेवां भूतजन्तूनाम् ॥

[२]अथेहात्मनि चत्वारः प्राजापत्याः प्रतिभूतपिण्डं [३]प्रजापतिसंबन्धादुपजायन्ते ॥ अग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्य इति (शत० ११।१।६)। अतोऽप्याहुः—चतुष्टयं वा इदं सर्वमिति ता वा एताः [४]प्रजापतेरधिदेवता असृज्यन्त (शत० ११।१।६)। ते चैते यद्यप्यन्यतोऽन्यतः संसृज्यन्ते, तथाप्येषां तत्तत् प्रजापतेर्भक्तित्वमुपसंपद्यमानानां [५]प्रातिस्विकतया प्राजापत्यत्वमास्थीयते वाजसनेयश्रुतौ (शत० ११।१।६) ॥ तत्रायं परमेष्ठी प्राजापत्य एता आपोऽ[६]ऽभवन्। आपो वा इदं सर्वमभवन्। ता आपः परमेष्ठी प्रजा[७]पतिं पितरमयाजयत्। स (स्वयम्भूः) प्रजापतिः प्राणोऽभवत्। "प्राणो वा इदं सर्वम्"। अयं वै प्राणो योयं पवते, स एवैष प्रजापतिः, प्रतिपत्तव्यः। यद्वै किञ्च प्राणि स प्रजापतिरिति श्रूयते। स पुनरिन्द्र[८]मयाजयत्। स इन्द्रो वागभवत्। वाग् वा इदं सर्वम्। तस्मादाहुः "इन्द्रो

---

कीटपतङ्गादिरूपेण भूयो भूयो जायन्ते म्रियन्ते च, तद्विपयेऽपि न तृतीयं तथोपलब्धेः" इति (३।१।१८) सूत्रभाष्ये श्रीशङ्कराचार्यैरुक्तम् "अन्येपान्तु विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते" इति। तस्मात्प्राणिनां देहारम्भः सर्वत्राद्भ्य एवेति श्रुतिसूत्रसिद्धान्तः। स एवात्र वैज्ञनिक्या प्रक्रियया विवृतः जडपिण्डानामपि मूलत आरम्भका आप एवेति श्रुतिस्मृतिपुराणादिपु सृष्टिप्रक्रियायां स्फुटमेव।

१ प्रमाता च, मातृरूपतया जनकश्च। मायाबलेनात्ममितिः, तदनुसारिण्येव च शरीरमितिरिति भावः।

२ उक्ते शरीरविशिष्टे व्यावहारिके आत्मनि।

३ प्रजापतिसंबन्धादेषां देवानामपि तत्र संबन्धोऽनिवार्यतया भवति, तत एव ते प्राजापत्या उच्यन्ते।

४ क्षरपुरुषकलाभूतानां देवानां सर्वत्र प्रदेशेषु व्याप्तिः। अत एव व्याप्तानामात्मना संबन्ध इत्यन्यतः संबन्ध उच्यते। क्षरपुरुषस्य प्रथमकलायाः प्राणस्य परिणतिभूता एव देवाः, पितरः, ऋषयः, मनवः, गन्धर्वा इति।

५ प्रत्यात्मं पृथक् पृथक् संबद्धतयेत्यर्थः।

६ परमेष्ठिमण्डल एव अपामुत्पत्तिः, अम्मयं च तन्मण्डलमित्युक्तं मण्डलनिरूपणे।

७ अपां प्रजापतिशरीरे प्रवेश एव यज्ञः। तेन वायोः प्राणाख्यस्योत्पत्तिरिति। पूर्वोक्ता यज्ञप्रक्रियात्र स्मर्तव्या।

८ वायोरिन्द्रस्य चान्योन्यसंबन्धाद्यज्ञाद् वागुत्पत्तिरिति भावः। अत एव वाग् ऐन्द्रीत्युच्यते। इन्द्रश्च वाचो व्याकरणकर्ता श्रूयते। इन्द्र एवायं ज्ञानाधिष्ठाता, तेन वाग् व्याक्रियते—अर्थसंबन्धेन पदवाक्यरूपतया व्यवस्थाप्यते।

वागिति" ॥ तस्मादाहुः कौषीतकश्रुतौ "नेन्द्राद् ऋते पवते धाम किञ्चन" इति । "वाग् वा इन्द्रः । न ह्यृते [१]वाचः पवते धाम किञ्चन" (कौ० ब्रा० २।७) इति ॥

स इन्द्रोऽग्नीषो[२]माववयाजयत् । तयोरन्नाद एवान्यतरोऽभवद्, अन्नमन्यतरः । अन्नादोऽग्निः । अन्नं सोमः । अन्नादश्च वा इदं सर्वमन्नं च ॥ ता वा एताः पञ्च देवताः कामप्रेण दर्शपौर्ण[३]मासयज्ञेनायजन्त । दर्शपौर्णमासयज्ञेनैव चैते . चत्वारः प्राजापत्याः प्रजापतिश्चायमन्योन्यसंहिताः प्राणिशरीरे क्रमादापः प्राणः वाग् अन्नादः अन्नमिति पञ्चभिः भावैः परिणम्यमानाः प्रतितिष्ठन्तीति विद्यात् ॥

तेष्वेतेषु चतुर्षु प्राजापत्येषु सर्वतः पूर्वमिहापामात्मनि संसर्गो भवति । तत्रायं मातरिश्वा हेतुः । एष हि पारमेष्ठ्य[४]समुद्राद्वुत्पद्यमानो [५]भृगुप्राणविशेषो मातरिश्वा नाम वायुः सर्वामिमां त्रिलोकीमभिव्याप्नोति । आपो हि तस्य मातरिश्वनो योनिः । आतश्च नैता अपो व्यतिरिच्यायं मातरिश्वा रूपं धत्ते । सोऽ[६]पां मातरि तत्रात्मनि श्वयतीति कृत्वैवाऽयमस्मिन् वायौ तत्कर्म्मनिबन्धनो मातरिश्वशब्दः प्रवर्त्तते । तदेतदस्य व्युत्पत्तिनिमित्तं च भवति प्रवृत्तिनिमित्तं च ॥

[७]चतुर्थं नाम लोकमेतं पारमेष्ठ्यं समुद्रमभिव्याप्नुवन्नयं मातरिश्वा वायुस्तत्र समुद्रे प्रतिष्ठितमात्मानं प्रजापतिं नाम प्राणमभितः परिगृह्णाति । सोऽयं प्रजापतिः प्राणः कनीयान् वा स्यान्महीयान् वा, तत्परिमाणेनैवायं मातरिश्वा तत्रात्मन्यपो निषिञ्चति । तथा चाह भगवान् वेदपुरुषः ।

"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेढि स उ रेढि मातरम्" (ऋ० १०।११४।४)।

---

[१] व्यापिकेयं वागिति व्याख्यातपूर्वम् । ज्ञानस्य च वाचश्च व्याप्तिरनया श्रुत्याम्नायते ।

[२] अक्षरपुरुषकलारूपौ यावग्नीषोमौ—ताभ्यां यज्ञात् क्षरपुरुषकलारूपयोरन्नादान्नयोरुत्पत्तिरिहोक्ता ।

[३] दर्शपौर्णमासरहस्यं यज्ञमधुसूदने द्रष्टव्यम् । नेहातिविस्तरभयात् प्रपञ्चयितुं शक्यम् ।

[४] पारमेष्ठ्यमण्डलमापोमयम्, स एव समुद्रः, तत्रैव च वायोरुत्पत्तिः । सोमः, आपः, वायुरित्येक एवार्थोऽवस्थाभेदेन त्रिधा व्यवह्रियत इति । सूक्ष्मावस्था सोमः, सोऽप्यप्पदेनोच्यते, ततः स्थूलतां गतो वायुः, ततोऽपि स्थूलश्च जलपदवाच्या आपः ।

[५] 'ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः' इति भगवता मनुना ऋषिप्राणानामेव देवप्राणजनकत्वमुक्तम् । तदनुसार्येव भृगुनामकर्षिप्राणानां मातरिश्वाख्यवायुप्राणजनकत्वमिहोच्यते । भृग्वादिरहस्यं महर्षिकुलवैभवे द्रष्टव्यम् ।

[६] मातरिश्वशब्दव्युत्पत्तिरिहोच्यते । अपां मातरि परमेष्ठिमण्डले श्वयति—गच्छति च वर्द्धते चेत्यर्थः ।

[७] पृथिवी, चन्द्रः, सूर्यः, परमेष्ठीति मण्डलक्रमे चतुर्थः परमेष्ठी भवति ।

[१]पक्षपुच्छात्मसंपन्नत्वात् प्रजापतिमेवैतं सुपर्णशब्देनाह। प्रजापतीनामानन्त्येऽप्यत्र महतो[२] महीयांसमपेक्ष्याह—एक इति। प्रत्येकाभिप्रायेण वा व्याचष्टे—एक इति। तं माता रेढीत्यपामात्मनाऽन्योन्यसंसृष्टिमाचष्टे॥ आपो हि मातरः सर्वसृष्टीनाम्॥ आप्यस्तु वक्ष्यमाणः प्राणः पुत्रः॥ "वाग्[३] वै माता प्राणः पुत्र"—इत्यैतरेयारण्यकश्रुतिस्तु न विरुध्यते। [४]अपां वाग्लोकादुत्पन्नतया वाक्त्वेन व्यवहर्तुं सुशकत्वात्॥

अपि चान्यथा व्याख्यायते। मातरिश्वा वायुरेवायं सुपर्णः प्रतिपत्तव्यः। [५]तमात्मा हि माताऽनुगृह्णाति। स चात्मानमन्वासज्जते॥

सोऽपां भूतशरीरजनयित्रीणां परिच्छेदके तस्मिन्नात्मनि श्वयमानोऽयं मातरिश्वा वायुर्यद्यन्यतो नापो लभते, तर्हि स्वसंपरिष्वक्ता एव काश्चिदपस्तत्रात्मनि[६] संसृजति। अथ शुक्रशोणितादिभ्यो द्वारान्तरेणापां लाभे तु ता एवापोऽयमात्मन्याधत्ते॥ सर्वथास्मिन्नात्मनि योनौ भूतप्रपञ्चोत्पत्तिवीजानामपां रेतसां निषेकेऽयं मातरिश्वैव[७] निषेक्ता द्रष्टव्यः॥ तदुक्तम्—

> अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्।
> तद्धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति॥ (यजुः सं०४०अ०)

इति॥ त्रिभिः पादैरुपदर्शितमिदमात्मनो लक्षणमात्म[८]प्रकरणेऽन्यत्र सुविशदं

---

[१] मन्त्रस्य व्याख्यानम्। पक्षपुच्छादिकं व्याख्यातम्।

[२] एको व्यापको महतो महीयान् प्रजापतिः, तत्रानुप्रविष्टाश्चान्ये प्रजापतय इति स एक एवोक्तः। अथवा प्रतिवस्तु एकैकः प्रजापतिरित्यभिप्रायेणैक उक्तः।

[३] ऐतरेयश्रुतौ वाचो मातृत्वमुक्तम्—इह त्वपां मातृत्वमुच्यत इति विरोधमाशंक्य समाधत्ते।

[४] प्राणः, आपः, वाक्, अन्नादः, अन्नम् इति क्षरपुरुषकलानामन्योन्यसंसृष्टतया परस्परं व्यवहारसाङ्कर्यादित्यर्थः।

[५] आत्मनो मातृत्वमनुपदमेवोक्तम्।

[६] जड़पदार्थेषु अन्यतोऽपां लाभो वहुत्र नास्ति, चेतनेषु तु शुक्ररूपा अपः पुरुषशरीराङ्गभूता उपलभ्य एता एवात्मना लोकान्तरादागतेन संसृजतीत्यर्थः। लोकान्तरादागतैरात्मभिः सहापि चन्द्रमण्डलस्यापां संसर्गो भवति। सर्वेषां परस्परयोगेन शरीरोत्पत्तिः। "रेतः सिग्योगाथ" (अ० ३ पा० १ सू० २६) 'योनेः शरीरम्' (३।१।२७) इति वेदान्तसूत्रयोः स्पष्टमिदम्।

[७] प्राणरूपेण शरीरेषु स्थितो वायुरेव अङ्गादङ्गाच्छुक्रमाकृष्य स्त्रीयोनौ निषिञ्चतीति स्फुटं शरीरतत्त्वविदाम्। तेनैव दृष्टान्तेन सृष्टयादावपि रेतोरूपाणामपां निषेक्ता वायुरेव द्रष्टव्य इति श्रुतिराह।

[८] अन्यत्र 'उपनिषद्धृदयादौ' व्याख्यातो मन्त्रः। तस्य व्याख्यानस्यात्र सारः प्रदर्श्यते। 'अनेजद्' 'मनसो जवीय', 'तिष्ठद्', 'धावतोऽन्यानत्येति' इत्यादि पदैर्विरुद्धा धर्माः प्रदर्शिताः।

निरूपितं द्रष्टव्यम् ॥ इह तु केवलमात्मन्यस्मिन् योनौ सृष्ट्यौपयिकरेतोनिषेकरूपोऽयमपां संसर्गो मातरिश्वना[1] वायुना क्रियमाणो निरुच्यते ॥

तत्र योऽयमात्मा योनिः आपो रेतः, ताभ्यामात्मन्यपां ग्रन्थिः प्रजातिः, सा सृष्टिः ॥ सैषा तत्रात्मनि प्रथमा सृष्टिः सृष्टीनां[2] मैथुनीनाम् । नाङ्गुचः पूर्वं योनिजा सृष्टिरासीत् ।

---

तैरीश्वरस्य विरुद्धधर्माश्रयत्वं व्यक्ती क्रियते, सर्वव्यापके परमात्मनि न केषांचिदपि धर्माणां विरोधः, तस्य सर्वत्रर्माश्रयत्वात् । व्यापकश्चेश्वर इति धावन्तोऽपि देवा यत्र यान्ति तत्रैवेश्वरं पश्यन्ति, स पूर्वमेव तत्र गतो भवति, सर्वगत्वात् । तस्मिंश्च मातरिश्वासूत्रात्मरूपो वायुः, अपः—कर्माणि सृष्ट्यौपयिकानि दधाति, तैरेव तस्य सृष्टिकर्तृत्वं भवतीति प्राचीनानां भाष्यकृतां व्याख्या । अनेन ग्रन्थकृता तु वैज्ञानिकीं दृष्टिमवलम्ब्यैवं व्याख्यायते मन्त्रः अव्ययपुरुषः प्रागस्माभिः पञ्चकलो निरुक्तः, तस्य आनन्दो विज्ञानम्—मन ति तिस्रः कला मुक्तिसाक्षिण्यो विद्यारूपाः, मनः, प्राणो वागिति तिस्रस्तु सृष्टिसाक्षिण्यः कर्मरूपाः, एवं विद्याकर्ममयो रसबलसमष्टिरूपः सर्वजगदाधारः सर्वोत्पादकोऽव्ययपुरुष एवात्र मन्त्रेण निर्दिष्टः । तस्य विद्यारूपाः कला अविचलाः, स्थिराः । कर्मरूपाः कलास्तु गतिरूपा अतितूर्णगामिन्य इति तस्योभयरूपस्याचलनमतिवेगवत्त्वं चोभयमप्युपपद्यते, तदेव लक्ष्यीकृत्य श्रुत्या 'अनेजद्' 'मनसो जवीयः' 'तिष्ठद्' 'धावतोऽन्यान् अत्येति' इत्युभयमप्याम्नातम् । स एवायं व्यापक ईश्वरः । यद्यप्यसङ्गेऽव्ययपुरुषे रेतोरूपाणामपां संसर्गो नोपपद्यते, तथापि पूर्वप्रतिपादिता वेदा यदा तस्मात्प्रादुर्भवन्ति, तदा ऋक्सामावच्छिन्ने यजुर्वेदे रेतोरूपाणामपां संसर्गो भवति, इमा आपोऽथर्ववेदरूपाः सुब्रह्मपदेन वेदत्रयस्य स्वेदरूपा गोपथब्राह्मणे निरूपिताः । यजुर्वेदोऽयं कर्ममयस्याव्ययपुरुषस्य प्रथमा विकासभूमिरिति अव्ययरूपतयैव तं मत्वा श्रुतौ अव्ययपुरुषे एवापां सम्बन्ध आम्नातः । यजुः पदमपि—यद्—जूः इति गतिस्थितिबोधक पदद्वयसंबन्धेन शतपथब्राह्मणे (१० का० ३ प्र० ५ ब्रा० १, २ क०) व्याख्यातम् । तेन गतिस्थित्यात्मक एव यजुर्वेद इति सिद्धयति । वाय्वाकाशयोः समष्टिर्यजुरिति तत्र ब्राह्मण उक्तमित्यादि निरूपितं प्राग् वेदप्रकरणे । इदानीन्तना वैज्ञानिका अपि 'इलैक्ट्रोन' प्रोट्रोन' नाम्ना गतिस्थितिशीले तत्त्वे एव जगदुपानतयोपगच्छन्ति इत्याद्यप्युक्तं प्राक् ।

[1] मातरि श्वयत इति मातरिश्वेति व्युत्पत्तिः प्राङ्मूले सूचिता । मातृपदेन तत्रात्मा गृहीतः । अन्यत्र तु ग्रन्थकृता मातृपदेन पृथिव्यपि व्याख्याता । पृथिवीपदेनात्र सर्वे घनीभूताः पिण्डाः स्वयम्भ्वाद्याः पृथिव्यन्ता गृह्यन्ते । सर्वेषां घनीभूतपिण्डानां पृथिवीशब्देन परिभाषणात् । तेषु पिण्डेषु व्याप्नुवन्, तान् परिवृण्वन् पिण्डरूपसमर्पकः पिण्डरक्षकश्च वायुर्मातरिश्वेत्युच्यते । भृगुरूपोऽयम् । अस्य च जनक आत्मैवेति आत्मात्र मातृपदेन गृहीतः । उभयथापि शक्यते व्याख्यातुम्, वेदमन्त्राणां महार्थगर्भितत्वादिति भावः ।

[2] संयोगजाः सृष्टयो मैथुन्यः सृष्टय उच्यन्ते । तथाविधासु सृष्टिषु आप एव प्रथमा । अतएव "अप एव ससर्जादौ" इति भगवता मनुना प्रथमाध्याये उक्तम् । पुराणेष्वपि च बहुत्र अपां प्रथमा सृष्टिराख्यायते । तददिं प्राथम्यं मैथुनीषु सृष्टिषु भाव्यमिति तात्पर्यम् ।

[१] अभ्या विद्याया ब्रह्मणः प्रजापतिर्ब्रह्मणि प्रतिष्ठाब्रह्मतयोपपन्नत्वात् प्रतिष्ठातः प्रागप्रतिष्ठिते प्रजापतौ सृष्टिव्यवहारायोगात्। अप्स्वेवैतास्वात्मसंसृष्टासूत्तराः सर्वाः सृष्टयो भवन्तीति सुनिभृतं विद्यात्॥ ये [२]तु (१) नाभानेदिष्ठो (२) वालखिल्या (३) वृषाकपि (४) रेवयामरुदित्येते चत्वारः सहचराः प्राणाः क्रमेण (१) रेतसे (२) प्राणाय (३) आत्मने (४) प्रतिष्ठायै चोपयुक्ताः श्रूयन्ते ते चेतनगर्भसंसृष्टिविषया वैशेषिकाः प्रतिपत्तव्याः। मातरिश्वा स्वयं प्राणवायुश्चेतनाचेतनसाधारणः सर्वसृष्टिविषयः सर्वविकारोपादानभूतानामपामालम्बनकर्म्मण्यात्मनि—संश्लेषणायोपयुज्यते। "आपो[३] ह वा इदमग्रे सलिलमेवास" (शत० ११।१।६) ता[४] आपो मातरिश्वनाऽनेनात्मनिहिताः प्रजापतिना परिच्छिद्यमानाश्छन्दसा

---

[१] अद्भ्यः पूर्वं तु ब्रह्मणो यानि तत्त्वानि प्रादुर्भवन्ति—यथा "अव्ययाक्षरक्षरेति पुरुषत्रयी, वेदत्रयी, ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्" इत्यादिना भगवता मनुना प्रथमाध्याय उक्तं वेदमयं स्वयम्भूमण्डलम्, सुब्रह्मेत्युक्तोऽथर्ववेदः—भृग्वङ्गिरः प्रभृतय ऋषयः—ते प्रजापतिर्ब्रह्मणः प्रतिष्ठारूपा ब्रह्मरूपतयैव गण्यन्ते। त्रयी हि पूर्वं प्रजापतेः प्रतिष्ठा भवति, अप्रतिष्ठितेन जापतिना न सर्ग उत्पादयितुं शक्यत इति प्रजापतिरूपस्य ब्रह्मणः स्वरूपे एवान्तर्भाव्यते। न ते पदार्थाः सृष्टतया गण्यन्ते। वाय्वाकाशयोरपि सूक्ष्मावस्था तत्रैवान्तर्भवतीत्युक्तं प्राक्। तेजोऽप्यङ्गिरस ऋपे रूपमिति तेजसोऽपि सूक्ष्मावस्था वेदस्वरूप एवान्तर्भवति। तस्मादपामेव सृष्टौ प्राथम्यमाख्यायते बहुत्र श्रुतिस्मृतिषु। "अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमश्मनो लौहमुत्थितम्। तेषा सर्वत्रगं तेजः स्वासु योनिषु शाम्यति" इति महाभारते चाग्नेरपि जनकत्वमप्सु आख्यायते। एवं विषेपु सर्वत्र सूक्ष्माभ्योऽद्भ्यः स्थूलस्याग्नेः पञ्चीकृतस्योत्पत्तिरित्यादि रीत्या समाधेयम्। भौतिकाकाशवाय्वाद्यभिप्रायेण तु तैत्तिरीयश्रुतावाकाशादीनां सृष्टिरद्भ्यो भूतरूपेभ्यः पूर्वमाम्नाता। स्थूलानामपामभिप्रायेणैव च भाष्यकृद्भिराकाशवाय्वादिपूर्विका तेजोऽवन्नानां सृष्टिर्व्याख्यातेति वैज्ञानिकप्रक्रियया सर्वं समाधातुं सुशकम्। एवं च मातरिश्वा वायुः, अपः—सूक्ष्माः, तस्मिन् यजूरूपतामाप्तेऽव्ययपुरुषे दधाति—सर्गोत्पादनार्थं योजयति। मुख्येऽव्ययपुरुषे वा दधाति—उत्पाद्य स्थापयति, अव्ययस्य सर्वालम्बनत्वादिति मन्त्रार्थोऽवसेयः।

[२] एते नाभानेदिष्ठाद्याः प्राणविशेषाः पुराणेषु प्रसिद्धाः, एषां स्वरूपं विस्तरभिया सर्वसृष्टिस्वनुपयुक्ततया च नात्र व्याख्यायते। विद्यावाचस्पतीनां ग्रन्थान्तरेभ्य एव प्रतिपत्तव्यो जिज्ञासुभिः।

[३] सूक्ष्माणामपां सर्वसृष्ट्युत्पादकत्वे श्रुतिं प्रमाणयति।

[४] ननु यथा आकाशवाय्वादीनां ब्रह्मरूपत्वमुक्तम्, तथा अपामप्यस्त्येव, सर्वस्यापि ब्रह्मरूपत्वात्। ततश्च 'तेन सृष्टाः आपस्तु सृष्टाः—इत्युक्तेः कोऽभिप्राय इति शङ्कां निरसितुमाह—छन्दोनाम मात्रावन्ध इति "माच्छन्दः, प्रमाच्छन्दः, प्रतिमाच्छन्दः" इत्यादि यजुर्मन्त्रप्रामाण्येन छन्दः समीक्षायां छन्दो निरुक्तिप्रकरणे ग्रन्थकृता व्याख्यातम्। ततश्च ये पदार्थाः पृथक् छन्दसा परिगृहीताः—अर्थात् पृथक् स्वमर्यादायां प्रतिष्ठिता भवन्ति—ते ब्रह्मणोऽङ्गतया ब्रह्मरूपत्वेन ख्याप्यमाना अपि पृथगेव सृष्टा गण्यन्ते। तेषां केवलं ब्रह्मभक्तित्वम्—अर्थाद् ब्रह्मणो भागत्वम्-अङ्गत्वं गण्यते। तद्रीत्या आपः, अद्भ्यो जायमानाऽ-

परिगृहीताः पृथग् भूत्वा तस्यात्मनोऽङ्गत्वेनोपपद्यन्ते। अत एवैताभ्योऽद्भ्यो जायमाना सृष्टिस्तदात्मभक्तित्वेनाख्यायते। सृष्ट्युपादानभूतातानामपां तदात्मभक्तित्वेनोपपन्नत्वाद् इत्यवधेयम्। सोऽयमेतावानुपक्रमः सर्वभूतसृष्टिसाधारणः प्रतिपत्तव्यः॥

अपां संसर्गाच्चायं प्रजापतिराप्यः प्राणो[१] भवति। प्राणस्वरूपोपपत्त्यर्थं चासामपामेवास्मिन् शरीरे भूयांसो भागा उपलभ्यन्ते। अद्भिरेवायमाप्यः प्राण आप्याय्यते। यावदस्य [२]निसर्गादुत्क्रान्तमङ्गं विश्लिष्टं भवति, तावदेवास्य पुनरद्भिरुपसंचिताभिरुपसंपादितमाहितं भवति॥ तेनायमात्मा प्रदीपार्चिरिव नोच्छिद्यते। "अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्।" इति हि भगवानुद्दालकः[३] पश्यति (छान्दो० उप०)॥ स यदि शरीरी नापो लभते, तर्हि तस्यायमाप्यः प्राणः कनीयानिव भूत्वा विषीदति। आतश्च प्रजापतिरात्मा शरीरादुत्सीदति, सोऽद्भ्य उपपन्नोयमान्तरीक्ष्यः[४] खल्वाप्यः प्राणः सर्वशरीरव्यापी व्यान इति नाम्ना निर्दिश्यते॥ "स एष इह प्रविष्ट आलोमभ्य आनखाग्रेभ्यः॥ यथा क्षुरः क्षुरधानेऽवहितः स्याद्, विश्वंभरो वा विश्वम्भरकुलाये। प्राणन्नेव स प्राणो नाम भवति। वदन्[५] वाक्। पश्यंश्चक्षुः। शृण्वन् श्रोत्रम्। मन्वानो मनः। तान्यस्यैतानि कर्मनामान्येव। स योऽत एकैकमुपास्ते न स वेद। अकृत्स्नो ह्येषोऽत एकैकेन भवति। [६]आत्मेत्येवोपासीत् अत्रऽह्येते सर्वे एकी भवन्ति। तदेतत्पदनीयमस्य[७] सर्वस्य, यदयमात्मा। अनेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देत्।"—(शत० १४।३।२।१८)॥ सोऽयं मुख्यः

---

परा सृष्टिश्च ब्रह्मभक्तिरूपाः। इतः पूर्वन्तु पूर्वोक्तरीत्या अप्रतिष्ठितत्वान्न पृथङ्मर्यादाबन्ध इति ते ब्रह्मरूपा एवाम्नायन्ते, न सृष्टाः इति। सृष्टानां तु तादात्म्यरूपा भक्तिः। व्यवहारदशायां भेदात्, परमार्थतस्तु अभेदात्तादात्म्यमुच्यत इति।

[१] मूलभूतः प्राणोऽव्ययकलारूपत्वेन मनःप्राणवाक्षु प्रतिपादितपूर्वः, यस्य विकासोऽक्षरपुरुषः। अथार्वाग्दशायां क्षरपुरुषकलासु यः प्रथमः प्राण उक्तः—सोऽपि आग्नेय, सौम्याप्यादिभेदेनानेकधा भवति। तेषु आप्यप्राणोत्पत्तिरिहोच्यते। अयं क्षरकलारूपः प्राणोऽपि जड़चेतनेषु सर्वत्र व्याप्तः। 'बलविधारणे प्राणशक्ती' इति ग्रन्थकृता सामान्येन व्याख्यातः। इह तु तस्य शरीरप्रतिष्ठितस्य विवरणं क्रियते।

[२] प्रकृत्या या क्षीणता बहिर्गमनप्रयुक्ता जायते, सा अद्भिरेव पूर्यत इत्यर्थः।

[३] उद्दालकश्वेतकेतुसंवादे छान्दोग्योपनिषदि।

[४] मूलतोऽयमाप्यः प्राणोऽन्तरिक्षव्याप्तेन मातरिश्वना जनित इति व्याख्यातम्, तत एवान्तरीक्ष्यः। अयं च शारीरेषु पञ्चसु प्राणभेदेषु व्यानरूपेण प्रतिष्ठितः।

[५] विभिन्नानीन्द्रियाण्यस्यैव प्राणस्य रूपाणि, अयमेव सर्वेन्द्रियाधिष्ठाता सर्वेन्द्रियरूपेण प्रतिष्ठितः, स्वरूपेण सर्वेन्द्रियसहकारी।

[६] प्राण एव व्यावहारिक आत्मा, स आत्मरूपेणैव उपास्य इत्यात्मरूपोपासनाविधानाय एकैकरूपोपासनानिन्दा।

[७] पदनीयम्—पदेन गन्तव्यम्—प्राप्यम्।

प्राणः प्रादेशमात्रः[१] प्रादेशमात्रो भूत्वा सर्वां शरीरयष्टिमभिसंपद्यते। तत्रैतस्यात्मन आनाभेराकण्ठाद् द्वयोः प्रादेशयो[२]रुपांशुसवनमिति संज्ञा क्रियते॥ तस्मिन्नस्मिन्नुपांशुसवनग्रहे प्राणापानौ नामैतौ उपांश्वन्तर्य्यामग्रहौ संभवतः "प्राणापानौ वा इन्द्राग्नी"—(मैत्रा० ब्रा० १।५।६)

इति मैत्रेयी[३] श्रुत्या ताविमौ प्राणापानौ द्यावापृथिव्यो रसौ विजानीयात्। तयोश्च प्राणापानयोः संख्योमाह भगवान् वार्कलिः॥ "अमादन्यत्र परिवर्तमानस्तिष्ठंन्नासीनो यदि वा स्वपन्नपि॥ अहोरात्राभ्यां पुरुषः समेन कतिकृत्वः प्राणिति चापनिति॥१॥ शतं शतानि (१००००) पुरुषः समेनाष्टौ शतां (८००) यन्मितं तद्वदन्ति॥ अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चापनिति" इति॥ (शत० १२।१।१०।८)। तत्र अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति। (१४।३।३।२९) इति श्रूयते। तत्राद्भ्य इति चतुर्थलोकादित्यर्थः। "अस्ति वै चतुर्थो लोक आपः"—इति श्रुतेः॥ [४]पृथिवीचन्द्रमसं व्यावर्तयितुमद्भ्य इत्याह। [५]अम्भः—संज्ञानामपां व्यावृत्तये चन्द्रमसं इत्याह। तथा चोभयपदविशेषितोऽयं ब्राह्मणस्पत्यः सौम्यःप्राण इह वैश्वानराग्नौ हूयमानो द्रष्टव्यः। तत्रापि सौम्यः खलु पितृप्राणश्च भवति, दैवः प्राणश्चेति कृत्वा प्रकृते पितृप्राणत्वशङ्कानिवृत्त्यर्थं दैवः प्राण इत्याह। सोऽयं दैवः प्राणोऽपानं प्राणं च पर्य्यायेणाभ्याहन्ति, अन्योऽन्यं च पर्य्यायेणाभिभ-

---

[१] एकैकं प्रादेशमतिक्रम्यास्मच्छरीरे प्राणस्यायतनानि—गुदे, योनिस्थाने, नाभौ, हृदये, कण्ठे, तालुस्थाने च। अत्रैवागमशास्त्रे मूलाधारादीनि षट् चक्राण्याख्यायन्ते। प्रादेशो दशाङ्गुलः। "अत्यतिष्ठद्दशाङ्गुलम्" इति पुरुषसूक्तमन्त्रे अक्षरपुरुषस्य प्राणरूपेण दशाङ्गुलमतिक्रम्य स्थितिराम्नाता। सर्वत्र शरीरे व्याप्तिबोधनाय 'प्रादेशमात्र' शब्दस्य वीप्सायां द्विरुक्तिः कृता मूले।

[२] दर्शपौर्णमासयज्ञे इयं संज्ञा। यज्ञस्य तत्तद्विधानोपपत्तये अध्यात्ममधिदैवतं च यज्ञक्रियासंबन्धः श्रुत्या तत्र तत्र बोध्यत इति ध्येयम्।

[३] व्यान आप्य इत्युक्तं प्राक्। प्राणापानौ तु इन्द्राग्निरूपौ मैत्रेय्युपनिषद्युक्ताविति, तेन दिवः पृथिव्याश्च तौ रसाविति सिद्धयति। इन्द्रो हि दिवोऽधिष्ठाता, अग्निश्च पृथिव्या इति।

[४] उच्छ्वासः प्राणः, निःश्वासस्तु अपानः। तयोरहोरात्रे संख्या श्रुतिप्रामाण्येनोच्यते। १०८०० उच्छ्वासाः, एतावन्त एव च निःश्वासाः—प्रकृत्या पुरुषस्य भवन्ति। इमावेव आगमशास्त्रे 'अजपाजप' नाम्ना व्यवह्रियेते। अनेनैवाधारेण मालायामष्टोत्तरशतं मणिका निवेश्यन्त इत्यपि स्मर्तव्यम्। संभूय उच्छ्वासनिःश्वाससंख्या २१६०० भवति।

[५] द्वौ चन्द्रमसौ व्याख्यायेते श्रुतिषु—एकः पृथिवीसन्निधाने, अपरश्च परमेष्ठिमण्डलरूपश्चतुर्थो जनलोकनाम्ना ख्यातः। तत्रेह विशेषणद्वयेन परमेष्ठिरूप एव चन्द्रो गृह्यत इति भावः।

[६] आपोऽप्यनेकविधाः, सर्वमूलभूतान्यम्भांसि। तानि नेह गृह्यन्ते, अपि तु सोम इह गृह्यते। तस्य निधानं ब्रह्मणस्पतिमण्डलमिति भावः।

वति। प्राणोऽयं दैवो रसो हृद्यपानेनाभ्याहन्यमाने। दिवमभि[१]प्रत्यावर्तते। प्राणमेवैतं प्रत्यावर्तितरूपं सन्तमुदानशब्देनाहुः। तावेतौ प्राणोदानौ दिव्यरसस्य मित्रावरुणौ विद्यात्। संभवो मित्रः। अपसरणं वरुणः॥ एवमन्यस्मिन् पर्य्यायेऽनेन प्राणेनाभ्याहन्यमानोऽयमपानः पृथ्वीमभि प्रत्यावर्तते। तत्र पृथ्व्या उपेत्य शरीरे संचरन्तमेतं समानशब्देनाहुः। प्रत्यावर्तितरूपं त्वेतमपानशब्देनैवाहुः। तावेतौ पृथ्वीरसस्य मित्रावरुणौ भवतः। समानो मित्रः। अपानो वरुणः। तदित्थं प्राणोदानौ समानापानौ च व्यानेन सह संभूय पञ्च प्राणा भवन्ति। तत्र प्राणापानाभ्यामेव जीवनयात्रां मन्यन्ते लोकाः। वस्तुतस्तु—"न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" (कठो० ५ व० ५) यद्येष व्यानो न स्यान्नैतौ तर्हि प्राणापानौ शरीरे[२] स्थानं लभेयाताम्। व्यानावलम्बितावेवैतौ प्राणापानौ जीवनं निर्वाहयतः। सोऽयं व्यानः प्रजापतिः परमेष्ठिन्यप्स्वालम्बमानः प्रतितिष्ठतीति विद्यात्।

## (१३) निर्विका[३]राधिकरणम्

[४]पुष्पस्य वस्त्रस्य च संनिकर्षे गन्धान्तरस्यानुदयोऽस्ति वस्त्रे।
निर्गन्धता लिङ्गमथाग्नियोगाद् गन्धोदयो वस्त्रविकारतः स्यात्॥२०७॥

---

[१] प्राणस्योर्ध्वगतौ हेतुरुच्यते। यो यस्यांशः स तत्रैव गच्छतीति नियमः, प्राणश्चायं दिवोंऽश उक्त इति तदभिमुखमुपर्येव धावतीति भावः।

[२] पूर्वं व्यानः प्रतिष्ठितः, तत एव प्राणापानौ शरीरे प्रविशत इत्यर्थः। तस्माद् व्यानो मुख्यः। स च परमेष्ठिमण्डलादागत इति परमेष्ठिमण्डलेनास्माकं मुख्यः सम्बन्ध इति दर्शितम्।

[३] एवं पुरुषत्रयनिरूपणे कृते शङ्केयं समुदेति—यदक्षरक्षरादिरूपतां गते रसे स्फुटमेव विकृतिः सिद्ध्यति, असङ्गत्वनिर्गुणत्वादि धर्माणामक्षरक्षराद्यवस्थायामदर्शनात्, तत्तद्योगेन यज्ञादिना च नव नव प्रादुर्भावस्योक्तत्वात्। ततश्च रसपद वाच्यस्य ब्रह्मणो निर्विकारता श्रुतिशास्त्रेष्वस्मिन् ग्रन्थे च प्राक् कथमुक्ता। तादृश शङ्कापनोदनायाधिकरणमिदमारभ्यते। सत्ता ज्ञानान्दा ये रसस्वरूपाणि सर्वत्र व्यापका धर्माः प्रतीयन्ते, ते एकरूपा एव सर्वास्वस्थासु प्रतीयन्ते, बलजन्ययोर्नामरूपयोः कर्मणश्च स्पष्टं बलपरिणामस्यास्ति परिवर्तनम्, तस्माद् बलमेव परिवर्तते, रसस्तु निर्विकार एवेति प्रकरणार्थः। सर्वम् अस्तीति सर्वास्वस्थासु प्रतीयते, तस्मात् सत्ता नित्या निर्विकारा च। यदस्ति तज्ज्ञायते, तस्माज्ज्ञानमपि व्यापकं नित्यं निर्विकारं च। ननु बहुतरं न ज्ञायतेऽपि, ततश्च ज्ञानस्य विभुत्वं कथमिति चेत्, केनचित्तु तज्ज्ञायत एवेति ज्ञानविषयता तु निर्बाधा। वृत्त्यात्मके पृथक् पृथक् पुरुषस्य ज्ञाने एवायं ज्ञाताज्ञातविकल्पः। एकं मुख्यं ज्ञानन्तु रसरूपं सर्वत्र व्याप्तमेवेति—सत्ताताऽनतिरिक्तं हि तत्। एवं सत्ताज्ञानयोरुभयोरपि प्रियत्वादनन्दस्यापि व्याप्तिः संक्षेपेण पूर्वमुक्ता। विस्तरेण तु संशयतदुच्छेदवादे ग्रन्थकृता विवृता। ततश्च रसस्य निर्विकारत्वमेवेति दृष्टान्तैरत्र विव्रियते।

[४] पृथिव्यां गन्धः सर्वत्रास्तीति विवृण्वता भगवता कणादेन "पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम्" इति सूत्रं पूर्वपक्षरूपेणोक्तम्। यदि

रसे तु यत्रोदयते बलस्य प्रणोदनादन्यबलं प्रसुप्तम् ।
न तत्र दृश्येत रसे विकारस्ततस्तमाहुः किल निर्विकारम् ॥२०८॥

[१]मृदस्ति तूलं पुनरस्ति सूत्रं ततोऽस्ति वस्त्रं च पुनस्तनुत्रम् ।
ततोऽस्ति कन्था पुनरग्नियोगात् क्षारं ततस्तत् पुनरस्ति सा मृत् ॥२०९॥

इत्थं यदेकं भवतीह नानारूपं तमेवात्र विकारमाहुः ।
तद्रूपकर्मादिविशेषबीजं बलं यदस्तीति रसः स एकः ॥२१०॥

अथाङ्गुलीकम्पन एव तत्र प्रकम्पनं नाम विकारमाहुः ।
[२]कम्पो बलं तत्क्षितिरङ्गुलीयं धत्ते बलं निर्विकृतिः स्वरूपात् ॥२११॥

ये ये विकाराः प्रथितास्तदित्थं बलस्य रूपाणि मतानि तानि ।
विलीयते यत्र बलं ततोऽन्यच्चोद्भाव्यते यत्र स निर्विकारः ॥२१२॥

क्वचिद्विमोक्षः क्वचिदस्ति बन्धः क्वचिद्विकारः क्रमते विशेषात् ।
सर्गानुसर्ग[३] प्रतिसर्गभेदात् क्वचिद्विसर्गः प्रलयः क्वचित्स्यात् ॥२१३॥

---

वस्त्रेऽपि गन्धः स्यात्, तर्हि वस्त्रगन्धस्य पुष्पगन्धस्य च योगे विलक्षणं गन्धान्तरं प्रादुर्भवेत् यथा पुष्पद्वयस्य संमर्दे योगे गन्धान्तरं भवतीति । न तथा दृश्यते—किन्तु यादृशेन पुष्पगन्धेन योगः क्रियते, तादृश एव गन्धो वस्त्रे लभ्यते, तस्माद्वस्त्रे गन्धाभावः सिद्धयतीति पूर्वपक्षः सूत्रेणोक्तः । यदि वस्त्रे गन्धो न स्यात्, तर्हि तस्याग्नियोगेन दाहे क्रियमाणे कथं गन्धः स्फुटमुपलभ्येत । नह्यग्नेः स गन्धः, भिन्न भिन्नवस्तुदाहे विभिन्नस्य गन्धस्यानुभवादिति तर्कं मनसिकृत्य 'व्यवस्थितः पृथिव्यां गन्धः' इत्युत्तरसूत्रम् । अनुत्कटत्वात्तु पुष्पगन्धो वस्त्रगन्धमभिभवतीति पूर्वपक्षस्योत्तरम् । एवमग्निसंयोगाद् वस्त्रे पूर्वमनुपलब्धस्य गन्धस्योपलब्धिरूपो विकारो दृष्टः । रसे तु एकस्य बलस्य पूर्वं प्रसुप्तस्य बलान्तरप्रणोदनेन जागरणेऽपि । अर्थादवस्थान्तरोदयेऽपि सत्तादिषु तद्रूपेषु विकारो न दृश्यते एव इति रसस्य निर्विकारतैव सिद्धयतीति ।

[१] विभिन्नेषु विकारेषु रसरूपायाः सत्ताया व्यापकत्वमुच्यते । अस्ति अस्तीति प्रत्ययात् सत्ता मृदादिषु सर्वेषु व्याप्ता । सा च सत्ता एकैवेति मृदादीनां विभिन्नत्वेऽपि तनुत्रमेकमेवोच्यते । कारणसत्तैव कार्येऽनुवर्तते, न तु कार्ये पृथक् सत्ता । तत एवाद्वैतं सिद्धयति, एककारणप्रभवत्वाज्जगत इति । बलकृता एव विकारभेदाः । रसस्तु सत्तारूपः सर्वथा अविकृत एवेति ।

[२] कम्प एव विकृतिरूपः । स यदि बुद्धया पृथक् क्रियेत, तर्हि अङ्गुल्यां न कोऽपि विकारः । एवमेव बलस्य बुद्धया पृथक्कृत्य ग्रहणे रसे न कोऽपि विकार इति भाव्यम् । कम्पस्य बलस्य क्षितिराश्रयोऽङ्गुलिरिति अन्वेतव्यम् । अङ्गुलिर्बलं धत्ते । स्वयं तु बलात् पृथग् गृहीता सा निर्विकारैवेति ।

[३] यथासंख्यं न विवक्षितम् । प्रतिसर्गे—प्रलये बलस्य विमोक्षः, सर्गे बन्धः, अनुसर्गे तु विकार इत्यन्वेतव्यम् । बन्धादयो व्याख्यातपूर्वाः । सर्ग एव विसर्गपदेनाप्युक्तः । अनुसर्गः सृष्ट्योः संमेलनेन वस्त्वन्तरसर्गः तत्रैव विकारः प्रतीयते । स बले एव, न तु रसे कोऽपि विकारः ।

इत्थं रसे कर्म्मवशाद्विकारो दृष्टोऽपि नास्त्येव रसे विकारः ।
[१]अकर्म्मणो लक्षणमस्ति कर्म्म तद्विक्रियालक्षितविक्रियोऽसौ ॥२१४॥

[२]योगो विभूतिर्यदि वास्तु बन्धो वत्तित्वमेवास्तु तथापि मृत्युः ।
रसेऽमृते स्यादुपसृष्टमुक्तोऽमृतं तु पूर्णं विभवत्यमुष्मिन् ॥२१५॥

[३]योषावृषाभ्यां तदिरानिराभ्यां यो बुद्बुदे फेनमृदात्मकोऽभूत् ।
परस्परासङ्गवशाद्विसर्गः संकर्मणां कर्मसु सङ्ग इष्टः ॥२१६॥

[४]यथा पुनः श्यामलपीतसङ्गतो विलक्षणं रूपमुदेति हारितम् ।
द्वयोर्विकारेण तथामृते पुनर्न मृत्युसङ्गेन विकार ईक्ष्यते ॥२१७॥

[५]दूर्वाप्रतः प्रातरनेकदिक्क्रमात् दृष्टोऽम्बुविन्दू रविरश्मिसंगतः ।
रक्तः स दृश्येत हरित्तथाऽन्यथा तथाऽमृतं मृत्युवशात् पृथग्विधम् ॥२१८॥

यथा जलेऽस्मिन् विमले सितोपला बलेन रूपेण विकुर्वते स्वयम् ।
जलं विकुर्वन्ति च तेन तज्जलं न वस्तुतो विक्रियते तथाऽमृतम् ॥२१९॥

विशुद्ध[६]शुक्लस्य पटस्य रञ्जनाद् यथा हरिद्रोहितरूपता मता ।
स रङ्गसङ्गस्य तु भङ्गतः शुचिस्तथाऽवृतेऽस्मिन्नमृतेप्यसङ्गतः ॥२२०॥

[७]पृथक्स्थिता या न कदापि नश्यति प्रकाशते सा दिवसे न चन्द्रिका ।
यथाऽभिभूता तपनप्रकाशतस्तथाऽमृतं स्यात् तमसोऽतिशायने ॥२२१॥

---

[१] अकर्मणो रसस्य लक्षणं-परिचायकम्, कर्म-बलम् । बलमेवास्माभिर्दृश्यते रसस्तु निगूढः । तत एव बलस्य धर्मान् विकारान् वयं रसे प्रतीम इति भावः ।

[२] योगादयः संसर्गभेदाः पूर्वमुक्ताः । सर्वत्रैव मृत्युः-बलमेव रसेन संसृज्यते रसस्य तु बलेन विभूतिरेव संबन्धः, विभूतिसंबन्धे च न विकृतिरिति विभूतिलक्षणेनोक्तेन भाव्यम् ।

[३] ननु एकस्यैव अवस्थान्तरेषु भवतु निर्विकारता, यथा कार्पासतूलसूत्रपटाद्यवस्थासु । यत्र तु द्वयोर्योगात् तृतीयं वस्त्वन्तरमुत्पद्यते—तत्र तु प्रत्यभिज्ञाया अप्यभावे कथं निर्विकारता संभाव्यत इति शङ्काया उत्तरमाह—इरा-उदकम्, अनिरा-तद्भिन्नो वायुः । योषा वृषा शब्दौ स्त्रीपुरुषवाचकौ । स्त्रीपुरुषरूपेण द्वयोः संबन्धे बुद्बुद एव फेनमृद्रूपतां गच्छति । सोऽयं संसर्गरूपः सर्गोऽपि कर्मणामेव परस्पराधानात् । सत्तारूपो रसस्तु तत्रापि निर्विकार एवेति ।

[४] विकारस्य परिभाषामाह—यत्र स्वरूपच्युतिः, तत्रैव विकारः शक्यते वक्तुम् । यथा हरितदशायां श्यामलस्य पीतस्य च स्वरूपच्युतिः । एवं रसस्य स्वरूपच्युतिः कुत्रापि न भवतीति स निर्विकार एव ।

[५] भेदेन प्रतीतावपि निर्विकारत्वे दृष्टान्त उच्यते ।

[६] असङ्गता दृष्टान्त उच्यते । लोहितादिरूपतां गमितोऽपि पटो वस्तुतः शुक्ल एव । तत एव क्षारक्षालनेन लोहितादिरूपेष्वपनीतेषु पुनः श्वेत एव दृश्यते । तथैव बलेषु प्रलीनेषु रसः स्वरूपेणैवावतिष्ठत इति । सोऽसङ्ग एव मन्तव्यः ।

[७] आवरणेन सतोऽप्यप्रतीतौ दृष्टान्तः ।

यतः[1] स्वभावादमृतं निरञ्जनं ततस्तदासञ्जनमृत्युसङ्गतः ।
न सज्जते न व्यथते न लिप्यते तदावृतं केवलमीक्ष्यतेऽन्यथा ॥२२२॥

## (१४) ब्रह्म[2]दर्शनाधिकरणम्

ब्रह्मास्ति तत्प्रत्ययसाक्षिकं रसप्रदं च पात्रं च विवर्ति लम्भनम् ।
आलम्बनं चायतनं तथा मतं तद् ब्रह्म [3]कर्मण्युपयोगि सप्तधा ॥२२३॥

ब्रह्मेत्यदः[4] प्रत्ययसाक्षिकं बलैः प्रतीयते द्रव्यवदुल्वणैर्गुणैः ।
भटद्रुमक्षेत्रजलार्चिरुच्चयैः सेनावनग्रामसरःप्रदीपवत् ॥२२४॥

ब्रह्मेति [5]विभ्वायतनं हि कर्मणां यथान्तरिक्षं मरुतामुदीरितम् ।

---

[1] निर्विकारताप्रतिपादनस्योपसंहारः

[2] अथ जगति ब्रह्मणः प्रतीतिः केन केन प्रकारेण जायते, कैर्हेतुभिर्ब्रह्म अवश्यं स्वीकरणीयं भवतीत्युपपाद्यते ।

[3] कर्मणि कर्मभूते दृश्ये जगति सप्तभिः प्रकारैः ब्रह्मण उपयोगः प्रतीयत इत्यर्थः । ते सप्ताग्रे प्रकारा उपपाद्यन्ते, क्रमस्तु नात्र रक्षितः । अत्र पद्ये येन क्रमेण सप्त प्रकारा उक्ताः, तद् व्युत्क्रमेणाग्रे प्रतिपादिताः ।

[4] प्रत्ययः ज्ञानम्, साक्षी-ज्ञापको यस्य, तत्प्रत्ययसाक्षिकम् । अनेकेषु य एकत्व प्रत्ययः, स निरालम्बनो न भवितुं शक्नोतीति तदनुगतमेकं बोधयति । यत्किञ्चिदस्माभिर्दृश्यते, तत्सर्वं बलसमुदायरूपम्, घटपटादयः सर्वेऽपि विभिन्नानां बलानां समुदायाः, विभिन्नानां तत्राव-यवानां नामानि, विभिन्नानि रूपाणि, विभिन्नाश्च क्रियास्तत्र समवेताः । यथा पट एकत्र निहितो भूमेराच्छादकश्च, तत्र निधीयमानस्य हस्तस्य प्रतिघातकश्च, प्रकाशरश्मीनां निवारकश्च, स्वरश्मिक्षेपेण सर्वेषां नेत्रेषु ज्ञानजनकश्चेत्यादि । तथापि या तत्रैकत्वप्रतीतिः, सा तदनुगतमेकं बोधयति, तच्चाव्ययरूपं ब्रह्मैव, अव्ययपुरुषस्य मायया विभिन्नतां गतस्य एकत्र यावती व्याप्तिः, तावत्येव सर्वत्रैकत्वं प्रतीयत इत्यर्थः । तत्र दृष्टान्तानाह—यथा उल्वणैः-स्पष्टैः प्रकटैर्गुणैः, विभिन्नं तदाश्रयभतमेकं द्रव्यं प्रतीयते, यथा वा भटादिषु 'एकेयं सेना,' 'एकमिदं वनम्' इत्याद्या एकत्वप्रतीतिः । एकज्ञानविषयतयैव एकत्वं तत्र परे व्यवहरन्ति, ज्ञानं चाव्ययस्य पुरुषस्य कला, ब्रह्मरूपमेवेति ब्रह्मप्रतीतिरेवैकत्वप्रतीतिस्तद्रीत्यापि ।

[5] अथ जगदधिष्ठानरूपतया सर्वत्र ब्रह्मदर्शनं मुख्यम् । बलपरिणतिभूता क्रियैव जगति सर्वत्र विजृम्भते । निराश्रयस्य च बलस्य तत्परिणतेः क्रियायाश्च कथमपि स्यातुमश-क्यतया तदाधारस्य ब्रह्मणः स्वीकर्तुमावश्यकत्वात्, स चायमाधाराधेयभावः प्रकारभेदेन षोढा विभज्यात्र दर्श्यते-आयतनम्, आलम्भनम्, आलम्बनम्, पात्रम्, विवर्ति, रसप्रदमिति शब्दैः । तत्र सत्यप्याधाराधेयभावे यत्राधारे नाधेयस्पर्शोऽपि, तदायतनम्—यथा मरुतामायतनमाकाशो न मनागपि वायुना स्पृश्यते, तस्मादाकाश आयतनमाधारः । यथोक्तं भगवद्गीतासु "यथा-काशगतो नित्यं वायुः सर्वत्रगो महान् । एवं सर्वाणि भूतानि मत्स्थानीत्युपधारय" इति ।

[1]ब्रह्मेति चालम्भनमुच्यते यथोर्म्मिचित्रबिम्बे जलकुडचदर्पणम् ॥२२५॥
[2]ब्रह्मेति चालम्बनमस्ति कर्मणां जलस्य बिन्दू रजसां मृदां यथा ।
[3]ब्रह्मेति पात्रं हि यथाम्बुनः पटस्तिलास्तु तैलस्य घृतस्य वा पयः ॥२२६॥
[4]केचित्पुनर्ब्रह्म विवर्तनं विदुः स्वप्ने हि विज्ञानगता यथाखिलाः ।
रथा रथी सारथिरश्वकाः पथस्तथा ननु ब्रह्मणि कर्म्मणां कलाः ॥२२७॥
रस[5] प्रदं ब्रह्म तु कर्मणि ध्रुवं निरात्मकं कर्म्म बलं न दृश्यते ।
आत्मा स सत्तारसमादधाति यः पुष्पस्य गन्धो लवणं यथाप्सु वा ॥२२८॥

---

[1] यत्र तु अस्त्याधारे आधेयस्पर्शमानम्, तथाप्याधारः स्वतन्त्र एव, आधेयापगमेऽपि नाधारस्वरूपे कापि हानिः, किमपि वैलक्षण्यं वा तदुच्यत आलम्भनम्, आङ्पूर्वस्य लभतेः स्पर्शार्थे प्रसिद्धत्वात् । अत्र दृष्टान्ताः—ऊर्मीणां जलम्, चित्राणां कुडयम्, प्रतिबिम्बस्य दर्पणम्—इति ऊर्मिचित्रबिम्बे इति समाहारद्वन्द्वः, बिम्बशब्दः प्रतिबिम्बबोधकः । जल-कुडचदर्पणमित्यपि समाहारद्वन्द्वः । समाहारेऽपि यथासंख्यं विवक्षावशात् ।

[2] यत्र तु संश्लेषो जायते—तेन च आधारस्वरूपे वैलक्षण्यमपि प्रतीयते, तदालम्बनम् । सति संश्लेप एवालम्बनशब्दप्रसिद्धेः । तत्र दृष्टान्तः, यथा जलबिन्दौ रजसां घनीभूतानां मृदां वा निपाते जलं तदालम्बनं भवति, अत्र संश्लेषः, जले वैलक्षण्यं च प्रतीयते, आधारतया जलस्य प्रतीतिस्तु स्पष्टा । एवं कर्मणां जगदुत्पादकानां बलानां कर्मभूतानां जगतां वा आधारत्वेन ब्रह्म द्रष्टव्यम् ।

[3] यत्राधारे आधेयं निलीनं तिष्ठति, पृथक् प्रतीतं न भवतीति, तत्पात्रमुच्यते, पात्रे हि स्थितं वस्तु आच्छादितं भवतीति । अत्र दृष्टान्ताः—आर्द्रः पटो यथा जलाधारः, तिलाः तैलाधारा, दुग्धं घृताधार इत्युक्ताः । एवं जगदाधारतया ब्रह्म द्रष्टव्यम् ।

[4] यथा शुक्तिका तत्र भ्रमरूपेण भासमानस्य रजतस्याधिष्ठानम्, तथा ब्रह्म जगदधिष्ठानमिति शाङ्करवेदान्तिनो विवर्ति ब्रह्म मन्यन्ते । तत्र स्वप्नदृष्टान्त उच्यते—यथा स्वप्ने भासमानानां रथादीनां विज्ञानमेवाधिष्ठानरूप आधारः, विज्ञान नाम्ना ख्याताया बुद्धेरेव तत्तद्रूपेण परिणम्य भासमानत्वात्, तथा ब्रह्म जगदधिष्ठानमिति । "न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" इति श्रुतिरर्थतोऽत्रानूदिता । अकारान्तोऽपि पथशब्दोऽस्ति स एवात्र पद्ये उपात्तः ।

[5] अथ रसप्रदत्वं विव्रियते—अत्र विपरीत आधाराधेयभावः । रसो बलेऽनुप्रविष्टस्तत्र सत्तां दधातीति बलमाधारः, रस आधेयः । रसो ब्रह्म बले स्वरूपं सत्तारसं ददाति, तेनैव बलं सत्तावत् । बलस्य पृथक् सत्ता नास्तीत्युक्तं प्राक् । उत्पन्नप्रध्वस्तं बलं यच्चिरम-नुवर्तमानं दृश्यते, तद्रससत्तयैवेति । जगत्यपि प्रकृतिनियमेन विनश्यन्तः पदार्था यत्तथाभूता एव प्रत्यभिज्ञायन्ते, सौयं रसस्यैव महिमा, सत्तारूपेण रस एव तत्रानुवर्तत इति । बृहदारण्य-कोपनिषत्सु याज्ञवल्क्यशास्त्रार्थे याज्ञवल्क्यप्रश्नः सर्वानृषीन् प्रति—"यद् वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः । मर्त्यः स्विन् मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति" (बृह०अ० ३, ब्रा०९) । अथ तूष्णींभूतेषु ऋषिषु स्वयमेव तस्योत्तरम् "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्" इति ।

ब्रह्मेत्यदः[१] प्रत्ययसाक्षिकं भवेदालम्बनं चायतनं च वृत्तिनः ।
पात्रं तु योगाद्रसदं तु बन्धनाद् विभूतितः स्यात्तु विवर्त्त लम्भनम् ॥२२९॥

तदित्थमेतानि[२] मतानि चामृते विशिष्य ये ब्रह्मविदो विदुः पृथक् ।
सर्वाणि तानीह यथार्थवत्तु ते पश्यन्ति पश्यामि हि सर्वथापि तत् ॥२३०॥

गतिः[३] स भर्त्ता प्रभुरेष साक्षी सुहृन्निवासः शरणं निधानम् ।
स्थानं च बीजं प्रभवो लयश्च ब्रह्मैतदेषां जगतां निरुक्तम् ॥२३१॥

---

तेन मृत्युना छिन्नस्य पुनरुद्भवो ब्रह्मणैवेति स्पष्टम् । "या च जगति तत्तत्पदार्थे शक्तिः, सा ब्रह्मणैवाहिता । तत्राधाने दृष्टान्तः—यथा जले पुष्पं स्वीयं गन्धमादधाति, तेन जलं सुरभि भवति, यथा वा लवणाहितेन रसेन तल्लवणरसयुतं प्रतीयते, तथा रससत्तयैव जगत्सत्तावदिति । भगवद्गीतायामपि "रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः" इत्यादिना स्वस्याधेयता भगवतोक्ता ।

[१] केन केन सम्बन्धेन किं रूपता भवतीत्यत्र व्याकृतम् । संबन्धाश्चेमे पूर्वं व्याख्याताः ।

[२] एताः सप्त विधा विभिन्नैर्दार्शनिकैराचार्यैश्च पृथक् पृथगभ्युपगत्य व्याख्याता इत्याह । तत्र विवर्तवादः श्री शङ्कराचार्याणां प्रसिद्ध एव । योगदर्शनमायतनवादच्छटामनुसरति—'अपरामृष्टः पुरुषविशेष ईश्वर' इति निरूपणात् । आलम्भनरूपं प्रतिबिम्बवादं साङ्ख्यदर्शनमनुहरतीव । "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः" इति जगतः प्रतिबिम्बरूपेण प्रतिफलनं पुरुषे तेन स्वीकृतमिति । प्रकृतिजीवयोः शरीरभूतयोर्ब्रह्मव्याप्तिं वदन्तो ब्रह्मणः सर्वशक्तितामुपगच्छन्तो विशिष्टाद्वैतवादिनो द्वैतवादिनश्च रसप्रदतायां पक्षपातिनो विलोक्यन्ते । सत्तास्वरूपं ब्रह्मण इव व्याचक्षाणा ईश्वरस्य सर्वत्र व्याप्तिं वदन्तश्च नैयायिका अपि तदनुकूला इव । अन्तर्निलीनं जगद्ब्रह्म बहिः प्रकटयतीति पौराणिकानामागमिकानां श्री वल्लभाचार्याणां च सिद्धान्त इति ते पात्रत्ववादे निविशन्ति । औपाधिकं भेदं स्वतश्चाभेदं व्याचक्षाणा द्वैताद्वैतवादिनः श्री भास्कराचार्या आलम्बनवादमभ्युपगच्छन्तीव । यद्यप्येषां सर्वेषामेव निरूपणप्रक्रियायामनेकेष्वंशेषु एतत्प्रक्रियापेक्षया भेदोऽपि लभ्यते, परं संक्षेपतः संकेतविधया इमाः प्रक्रियास्तत्र तत्रानुवृत्ता विचारेण प्रतीयेरन्नेव । ग्रन्थकारस्तु सर्वा अपि प्रक्रिया ब्रह्मणि संभवन्ति इति "सर्वधर्मोपपत्तेश्च" इति वेदान्तसूत्रमनुसृत्यैव वदति । मतिभेदेन निरूपणप्रक्रियासु भेदो भवति । जगदधिष्ठानत्वं तु सर्वत्रापि समानमिति । दुरूहे विषये च प्रक्रियाभेदो दुर्निवार इति यथाविचारं सर्वथा ब्रह्म द्रष्टव्यमिति तदाशयः ।

[३] अथ भगवद्गीतोक्तान् जगतो ब्रह्मणा सह द्वादश संबन्धान् विवृणोति । भगवद्गीतायां हि—

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् । (अ० ९।१८)

इत्युक्तम् । अहमिति जगत इति च पूर्वश्लोकादनुवर्तते । तेन जगतो अहं गतिर्भर्तेत्याद्यर्थः । इम एव संबन्धाश्छन्दोऽनुरोधेन किञ्चिद्विपर्यस्येहोक्ताः । ते च पद्यैर्व्याख्याताः ।

बन्धस्य पर्य्यायविपर्य्यये वा प्रबन्धनोद्बन्धनयोः क्रमे वा ।
मोकेऽपि वोदर्कमुपैति बद्धो यं भावमस्याहुरिमां गतिं[१] ज्ञाः ॥२३२॥ (१)

[२]सर्वं यदादानविसर्गशीलं विसृज्य गृह्णाति न चेत् स्वशक्त्या ।
क्षीणं तदात्माभिमुखं यदि स्यात्तदात्मनः संभ्रियते रसेन ॥२३३॥

समृद्धिसम्पन्नतमोऽथवा यः सर्वात्मिना क्षीणतमोऽथवा यः ।
स्वां स्वां स्थितिं प्रत्यभिसंनिविष्टस्वान्तः स शान्तो भ्रियते रसेन ॥२३४॥

[३]रसः परः सन् स बिभर्ति चाक्षरं क्षरं बिभर्तीह तथैव चाक्षरम् ।
न त्वेष भूतैर्भ्रियते विभर्त्यसौ भर्ता ततो भूतभृदुच्यते च सः ॥२३५॥ (२)

[४]स्वरूपसंसृष्टवलेन भूयसाऽप्याक्रम्यमाणो न रसो विजीयते ।
सदा रसस्यैव बले समुच्चिते प्रभुत्वमात्मा हि ततोऽभिजायते ॥२३६॥

शान्ते रसे क्षुब्धबलोदयो बलाद् भूत्वैव शान्तिं विनिहन्तुमीहते ।
उत्थाय चोत्थाय पतत् स्वयं पुनर्विलीयते शान्तरसो न जीयते ॥२३७॥

बलानि[५] कुर्वन्ति यथा यथा जगत् स्वभावतः सा प्रकृतिर्निरुच्यते ।
विज्ञानमस्मिन् पुरुषः कलास्ततो धर्म्मस्ततो व्यक्तिरियं विशिष्यते ॥२३८॥

[६]सा व्यक्ति सम्पत्कुरुते समा जगत् प्रकर्षमस्मात्प्रकृतिर्विभिद्यते ।
तत्पौरुषं यत् प्रकृतिः क्रमादियं समुन्नतिं लोकहिताय नीयते ॥२३९॥ (३)

---

[१] गम्यतेऽस्मिन्निति गतिः। बन्धे सति जगत्। मध्ये मध्ये बन्धविपर्यये, मोके बन्धमोक्षेऽपि च ब्रह्मण्येव जगल्लीयत इति ब्रह्म जगतो गतिः-गन्तव्यस्थानमिति यावत्।

[२] भर्ता पोषणकर्ता। स एष सम्बन्धस्त्रिभिः पद्यैर्व्याख्यायते। पूर्वं रसप्रदपद-व्याख्यानेऽस्माभिरेतद् व्याख्यातम्। आदानविसर्गौ सर्वत्र प्रवर्त्तेते, विसर्गबाहुल्ये क्षीणं यदात्माभिमुखं भवति, तदात्मा तं पुष्णाति। यथा श्रान्तः क्षीणशक्तिः पुरुषो व्यापारं परित्यज्य विश्राम्यन्नात्माभिमुखो भवतीति कियत्या कालकलया स पुनः परिपोषमाप्नोति।

[३] परः—अव्ययः, अक्षरं बिभर्ति, रसेन पोषयति। अक्षरं कर्तृक्षरं बिभर्तीत्यादि सुगमा योजना।

[४] प्रभुत्वं समर्थता—अपराजितता, तच्चतुर्भिः पद्यैर्व्याख्यायते। रसो विजयीभव-न्नात्मरूपेण तिष्ठति सुगममन्यत्।

[५] मुख्ये व्यापके रसे प्रादुर्भूतं बलं परिच्छेदं भासयतीत्युक्तं प्राक्। सा माया—सैव प्रकृतिः। ततः परिच्छेदे कलाः—अंशा जायन्ते। कलाभ्य एव धर्माः—गुणा उत्पद्यन्ते। कलाः, धर्माश्च अप्रधानतां गच्छन्ति, व्यक्तिः—पुरुषस्तु प्रधानमिति स एव प्रभुरित्यर्थः।

[६] प्रकर्षं करोतीति प्रकृतिरिति निर्वचनम्। प्र शब्दः प्रकर्षार्थः। प्रकर्षश्च संपदुच्यते—इति प्रकृतिः संपद्रूपा। व्यक्तेः पुरुषस्य सा संपत्। प्रकर्षरूपं जगदेव। प्रकृतिः समा सर्वान् प्रत्येकरूपा। प्रकर्षे तु अस्ति तारतम्यम्। सोऽयं प्रकृतेः समाया भेदः पुरुषसंबन्धा-देवेति प्रकृतेः समुन्नेता पुरुषः प्रभुरुच्यत इति भावः। साक्षित्वं सुहृत्त्वं चाग्रे स्फुटम्।

क्षरोऽक्षरश्चैव परश्च कर्म्मात्मानो हि संहृत्य सदा त्रयोऽपि ।
कर्माणि कुर्वन्ति फलस्य भोक्ता त्वेकः क्षरोऽन्यस्त्वफलोऽत्र [१]साक्षी ॥२४०॥ (४)

बलप्रसर्गे हि बलप्रसर्गोऽनुकूलवत्स्यात् प्रतिकूलवत्स्यात् ।
अथाप्युदासीनवदेव वा स्याद् रसस्तु सर्वस्य [२]सदानुकूलः ॥२४१॥ (५)

यः कर्म्म [३]सन्तानकृतात्ममूर्तिर्भावः स हि श्राम्यति कर्म कुर्वन् ।
तद्विश्रमायैव निवासभूतो यत्रैव विश्राममुपैति गत्वा ॥२४२॥

[४]नवोदितो जीर्णदशां क्रमाद् गतः शून्यत्वमेत् तत्र बलं रसोत्थितम् ।
श्रान्त्वोपरन्तुं निपतत् क्रमाद्रसे शेतेऽन्ततस्तेन निवास उच्यते ॥२४३॥

[५]स्वप्नान्तबुद्धान्तपरिभ्रमेण श्रान्तोऽयमात्मा पुनरेति शान्तिम् ।
निरस्तपाप्माभयमाप्तकामं स्वकं निवासं न हि यत्र शोकः ॥२४४॥ (६)

जीवो[६] यदा शोकभयादिदुःखैराक्रम्यते तच्छरणं स याति ।
आत्मानमेवैष स पृच्छतीयं कथंतरेयं किमिह प्रकुर्य्याम् ॥२४५॥

सत्यः स विज्ञानमयस्तदात्मा प्रकाशयेच्चेत्तरणेऽभ्युपायम् ।
ध्रुवं स विज्ञानबलानुसाराद्रक्षामुपेयात् स भयात् पृथक् स्यात् ॥२४६॥ (७)

[७]क्षरं हि सर्वं व्ययमानमेतत् कथं प्रदृश्येत समस्तवीतम् ।
यद्यव्ययं नैव रसप्रदं स्यात् तस्मादिदं ब्रह्मपरं निधानम् ॥२४७॥ (८)

[८]स्थानं प्रतिष्ठा न रसात्तदन्यत् रसप्रतिष्ठं बलमस्ति भाति ।
बलं स्वभावप्रचलं स्थिरत्वं यत्रैति तत्स्थानमयं रसोऽस्ति ॥२४८॥

---

[१] साक्षी अक्षरोऽव्ययश्च क्षरं प्रतीश्वरौ, तत ईश्वरस्य साक्षित्वम् ।

[२] अनुकूलत्वात्—सुहृत्त्वम् ।

[३] निवासरूपता त्रिभिः पद्यैर्व्याख्यायते । तत्र मनुजादिशरीरस्य भूतनिर्मितस्य निवासत्वं प्रथमेनाह—कर्म कुर्वन् श्रान्तः यत्र गत्वा विश्राममुपैति, स निवासभूतो विश्रमाय भवतीत्यन्वयः । कर्म परित्यज्य शान्तिमिच्छन्ति शारीरा धातवः । शान्तिरेव ब्रह्मरूपमित्यर्थः ।

[४] सृष्ट्यादावधिदैवतं निवासत्वं व्याख्यायते—सुप्तं बलं रसे प्रथममुदयमाप्यपरिवर्तनशीलत्वाज्जीर्णं भूत्वा रस एव निपतत्तत्रैवान्ततः शेते, अतो रसरूपं ब्रह्मैव निवासः । जललहरीदृष्टान्ततोऽत्रानुसन्धेयः ।

[५] अध्यात्मं निवासत्वबोधन्तयोपनिषच्छ्रुतिमर्थतोऽनुवदति । आत्मा व्यावहारिकः—क्षररूपः । तस्य स्वकं स्थानं निरस्तपाप्म, अभयम्, आप्तकामं चाव्ययपुरुषरूपम् सुषुप्तौ तत्रैवायं लीयत इति भावः । सुगममन्यत् ।

[६] शरणरूपताव्याख्यानपद्यद्वयं सुगमम् ।

[७] निधानत्वं च व्याख्यायते—निधानं निधिः, यतो गृहीत्वा जीवनोपयोगः साध्यते । प्रकृत्या क्षीयमाणः क्षरपुरुषोऽव्ययाद्रसमादायैव जीवति, तस्मादव्ययपुरुषो निधिभूत इत्यर्थः ।

[८] स्थानत्वव्याख्यानपद्यं स्पष्टार्थम् ।

[१]रसेन युक्तं बलमेकरूपं भूत्वा विकुर्वद् भवतीह नाना ।
बले विकृत्य विकृतं विशिष्टं बीजं भवत्यव्ययमुत्तरस्य ॥२४९॥

[२]परं मनस्तत्र न चेदुपेयात् प्रज्ञस्वरूपं न भवेत्तदानीम् ।
मनोबलग्रन्थिविशिष्टसर्गे प्रज्ञे रसः संभवतीह बीजम् ॥२५०॥

रसे यदव्यक्तबलं प्रसुप्तं रसात् तदुद्भूय रसप्रतीकम्[३] ;
प्रलीयते तत्र रसे पुनस्तत् तस्माद्रसोऽसौ प्रभवो लयश्च ॥२५१॥

---

[१] बीजत्वमुच्यते—यथा बीजं क्रमेण प्रवृद्धं नानाशाखत्वमुपयाति, तथा उत्थितमेकरूपं बलं नानात्वमुपेत्य रसमपि विभिन्नशाखत्वं नयति-तत एवाक्षरक्षरादि प्रादुर्भावः । तस्मादव्यय ईश्वररूपो बीजमित्यर्थः ।

[२] अथ बीजरूपतामध्यात्मं व्याचष्टे—याः पुरुषनिरूपणे प्रागधिदैवं पञ्चकला व्याख्याताः, तासां साररूपेण मनुष्यादिशरीरेषु पञ्च व्यावहारिका आत्मानः प्रादुर्भवन्ति । स्वयम्भूमण्डलादीनां ये रसाः शरीरे प्रविष्टाः, तत्र प्रतिफलितं चैतन्यमात्मपदेन व्यवह्रियते—मुख्यात्मनः चैतन्यस्य प्रतिबिम्बरूपत्वात्, एत एव व्यावहारिका आत्मानः शरीरपरिचालकाः, मुख्यात्मा तु निर्विकारो निष्क्रिय इति । तत्र स्वयम्भूमण्डलस्य रसो अव्यक्तं सूत्रं वा अभिधीयते, तत्र प्रतिबिम्बितं चैतन्यं च शान्तात्मा, सूत्रात्मा वाख्यायते । परमेष्ठिमण्डलस्य रसो महान् । महत्तत्त्वं वा, तत्र प्रतिफलितं चैतन्यं महान् आत्मा । यो 'बुद्धेरात्मा महान् परः' इति कठोपनिषदि स्पष्टमुक्तः । सूर्यमण्डलरसो बुद्धिः, तदवच्छिन्नं चैतन्यं विज्ञानात्मा । चन्द्रमण्डलरसो मनः, तदवच्छिन्नं चैतन्यं च प्रज्ञानात्मा, प्रज्ञ इति च व्यपदिश्यते । अयमेव मुख्यतयेन्द्रियाणां शरीरस्य च परिचालकः । पृथिवीरसश्च शरीरम्, इन्द्रियाणि च । तत्र प्रतिफलितं चैतन्यं प्राणात्मा इति शारीर आत्मा इति चाख्यायते । एषामवान्तरैर्भेदै-रष्टादश आत्मानो ग्रन्थान्तरेषु निरूपिताः । इमे चात्मानः किञ्चित्प्रकारभेदेन तैत्तिरीयो-पनिषद्यप्याख्याताः । तत्र प्रज्ञात्मनि उदाहरणरूपेण अव्ययस्य बीजरूपता अस्मिन् पद्ये दर्शिता । अस्मिन् मनोरूपे प्रज्ञे चान्द्ररसे यदि परं मनः—अव्ययकलारूपं श्वोवसीयस् नाम्ना श्रुतिषु ख्यातं नोपेयात्, तर्हि प्रज्ञानात्मस्वरूपमेव न संघटितं स्यात्, चैतन्येनैवात्मस्वरूपनिष्पत्तेः । तस्माद् बलग्रन्थिविशिष्टं क्षररूपं यन्मनः, तेन करणीयायां सृष्टौ अव्ययादागतो रस एव बीजं भवतीत्यर्थः । एवमन्येष्वप्यात्मसु द्रष्टव्यम् । बलसंबन्धमात्रेण परिच्छेदे अव्यय-पुरुषप्रादुर्भावः, बलप्रचये (चितौ) अक्षरपुरुषस्य बलग्रन्थौ च सत्यां क्षरस्येत्यपि स्मर्तव्यम् ।

[३] प्रभवत्वं प्रलयत्वं चैकेनैव पद्येन स्फुटैः पदैर्व्याख्यातम् । 'ब्रह्मविनय' नाम्नि ग्रन्थे तु 'गतिर्भर्ता' इत्यादि भगवद्गीतापद्य उक्ताः सम्बन्धाः अक्षरपुरुषस्य क्षरपुरुषस्य च अव्ययपुरुषेण सह व्याख्याताः । अव्ययपुरुषोऽक्षरस्य गतिः, भर्ता इत्यादि । अस्मिन् गीतापद्ये च गतिः, प्रलय इत्यनयोः निवासः, शरणम्, स्थानम्, निधानम्—इत्येतेषु पदेषु, भर्ता, प्रभुः—इत्यनयोः, प्रभवः, बीजम्—इत्यनयोश्चाभासमाना पुनरुक्तिः अव्ययकलानां पृथक् पृथक् संबन्धैः समाहिता । अव्ययपुरुषो हि मनोरूपकलावच्छेदेन अक्षरस्य प्रभवः, प्रलयः स्थानं साक्षी च । वाक्प्राण-योरपि प्रभवो लयश्च मन एवेति तदाधारेण प्रादुर्भूतयोरक्षरक्षरयोरपि तदेव प्रभवः प्रलयश्च ।

## (१५) आत्माधिकरणम्

[१]सत्तारसं यः प्रददाति कर्म्मणे सवुच्यते कर्म्म यदन्वयादिह ।
आत्मा स भूमा रस एव कर्म्मणो रसावतारोऽपि रसप्रदस्तथा ॥२५२॥

[२]सुप्तेयमव्यक्ततयास्ति शक्तिर्यस्मिश्च यस्मिन् समुदेति काले ।
व्यक्ता अतस्ते विविधाश्च भावाः स्युर्यस्य भोगाय स उक्त आत्मा ॥२५३॥

[३]क्ष्मा ज्मा यथा ग्मा क्षमतेर्जमेर्गमेस्तथा तमेस्त्मा भवतीह काङ्क्षया ।
यतोऽशनायात्र ततः स इच्छतीह व्याप्य चात्मेति मतस्ततः स हि ॥२५४॥

---

तदाधारेणैवाक्षरस्तिष्ठतीति तदेव स्थानम् । ज्ञानरूपत्वाच्च तदेव साक्षी । वागवच्छेदेन बीजं निधानं च । बीजपदेन परिणामिकारणमुच्यते—वागेव च क्षरपुरुषरूपतामासाद्य भवति परिणामिनी । तत्र चाक्षरक्षरादिकार्याणां सत्कार्यवादपद्धत्या पूर्वमेव स्थितिरिति सैव निधानम् । विज्ञानावच्छेदेनाव्ययः शरणं सुहृच्च । यथात्र मूले व्याख्यातम् । प्राणावच्छेदेन निवासः, प्रभुः, भर्ता च । प्राणे एव सर्वं तिष्ठति, स एव च सर्वं पुष्णाति । स एव सर्वं विनियुङ्क्त इति प्रभुः । आनन्दावच्छेदेन तु सर्वेषां गतिः । सर्वे क्षराक्षराद्या आनन्दं प्राप्यैव संतिष्ठन्त इति । अव्यय एव ब्रह्म, क्षराक्षरौ तु जगदिति जगतो ब्रह्मणा त एव संबन्धा निरुक्ता इति वाङ्मात्रेण भेदो न तु वस्तुनि । इहापि च पुनरुक्तय आभासमाना एवमेत्र समाधेया इति ।

[१] आत्मनिरूपणे प्रक्रान्ते प्रथममात्मशब्दार्थमाह—यत्सत्तया योऽन्यः सत्तावान् भवति, तस्यान्यस्य स सत्ताप्रद आत्मा उच्यते । बलस्य न स्वतन्त्रा सत्ता, अपि तु रस एव स्वरूपभूतां सत्ताम्—अर्थात् सत्तारूपं रसं तत्रार्पयति । तस्माद्बलसंघातस्य कर्मणो रस एवात्मा उच्यते । रससमन्वयादेव कर्मापरपर्यायं बलं सत्तावत् अस्तीति उच्यते । स रसो भूमा व्यापकः । बले प्रविष्टो रसो रसावतारोऽप्युच्यते—बलेऽवतरतीति हेतो रस एव तत्र प्रविशति न तु स्वातिरिक्तं रसं कञ्चिद् ददाति, तथाप्युपचाराद् रसप्रदत्वमपि व्यवह्रियते ।

[२] द्वितीयमात्मशब्दार्थमाह । विकारेष्वप्यविकृत आत्मा । अथ च भोक्ता आत्मा उच्यते । शक्तिर्बलापरपर्याया पूर्वं सुप्ता, ततः समुदिता । उदितया तु तया विविधा भावा उत्पाद्यन्ते, एवं शक्तेर्विभिन्नरूपत्वेऽपि रस एकरूपः, अथापि शक्तिविकारास्तत्रोपचर्यन्ते—इति साक्षिरूपतया स भोक्ता, तस्मादपि रस आत्मा ।

[३] अथात्मशब्दनिरुक्तिं वदन्नात्मशब्दस्य स्वाभिमतं तृतीयमर्थमाह—तमु काङ्क्षायाम्—इति धातोरौणादिके अन् प्रत्यये उपधालोपे च त्मा शब्दो निष्पद्यते । तत्र व्याप्त्यर्थकस्य आङ उपसर्गस्य योगे आत्मन् शब्दः । इयं प्रक्रियान्यत्रापि दृश्यत इत्याह—क्षमतेः क्षम धातोः क्ष्मा शब्दः, जमेः जम धातोश्च ज्मा शब्दः, गमेः गम धातोश्च ग्मा शब्दः—एते श्रुतिषु सुप्रसिद्धाः शब्दाः, तथैव तमु धातोः 'त्मा' शब्द इति भावः । आङ्पसर्गेण सह तम धातोरर्थसमन्वयेन य आकाङ्क्षमाणः परिच्छिन्नतां विहाय विभुत्वमेवेच्छन्—अशनायाबलेन अर्चन् चरति, अर्थात् इच्छन् व्याप्नोति, स आत्मा उच्यत इति पद्यार्थः । इदं सर्वमस्माभिः पुरुषप्रपञ्चाधिकरणे व्याख्यातम् । यद्यपि पुरुषसंस्थायामेवेयं प्रक्रिया भवति, तथापि अशनायाधारो रस एवेति शुद्धे रसेऽप्यात्मशब्दः प्रयुज्यते ।

[१]अतः स आत्मेति वदन्ति केचित् तच्छब्दमूलं न विदन्ति तेऽलम् ।
स पाणिनिः पश्यति शाब्दिकस्तं त्मानं यदा ह्युद्धृतपूर्वभागम् ॥२५५॥

[२]त्रिधाऽस्य लोके व्यवहार इष्यते स सर्वनामा सनिरूपकश्च सः ।
संज्ञाऽथ वा सर्वविधे प्रयोगके न प्रत्यगर्थत्वमयं जहाति हि ॥२५६॥

[३]रसोऽयमात्मा बलमस्य शक्तिः शक्त्या विहीनो न रसः क्वचित्त्रात् ।
अव्यक्तरूपेण रसे बलं तत् प्रवाहनित्यं न कदापि नास्ति ॥२५७॥

विशेषरूपेण तु तद्बलं भवद्व्यक्तं रसे कुत्रचिदस्ति नास्ति ।
[४]सहैव सर्वं बलमेकहेलया विलीयते नोदयते न दृश्यते ॥२५८॥

यदेव किञ्चित् क्वचिदस्ति वस्तु सा सर्वत्र शक्तिः परिदृश्यते ध्रुवम् ।
पृथक् पृथक्छक्तिरियं विभाव्यते [५]यस्मिन् स आत्मा स रसोऽनुभूयते ॥२५९॥

[६]आत्मा द्विधोक्तः प्रथमस्त्वखण्डः कर्म्मात्मसंज्ञस्त्वपरश्च तत्र ।
शुद्धो रसः स्यात्तदखण्ड आत्माऽमृतोऽभयः शुद्धबलन्तु शक्तिः ॥२६०॥

---

[१] बहव आचार्या अत् धातोरात्मशब्दं निर्ब्रुवन्ति, तन्नोचितमित्याह। पाणिनिना हि "मन्त्रेष्वाङ्यादेरात्मनः" (अष्टा० ६।४।१४१) इति सूत्रेण आङि—टा प्रत्यये आत्म शब्दस्यादिभागस्य लोपो विहितः, तेन 'त्मना' इति सिद्धयति। तावता भगवता पाणिनिना 'आत्मन्' शब्दे आकारस्यादिभागत्वं पृथक् स्वीकृतमिति तस्य मदुक्तैव व्युत्पत्तिरभिमतेति भावः। अत् धातोरात्मशब्दे निष्पादिते तु आकारस्यादिभागत्वं न संभवेत्। श्रुतावपि 'त्मना' इति दर्शनात्तत्राप्याङः पृथक्त्वं व्यज्यत इति ।

[२] आत्मशब्दस्य त्रिधा व्यवहारः, सर्वनामतया—अर्थात् सर्वत्रैवात्मा व्याप्त इति मृदात्मकः, प्रस्तरात्मकः—इत्यादि सर्वत्रैवात्मशब्दः प्रयुज्यते, द्वितीयः सनिरूपकः—अर्थात् कस्यात्मेति जिज्ञासा यत्र भवति। तृतीयश्च संज्ञारूप आत्मशब्दः, यथा आत्मेति नवसु द्रव्येष्वेको गण्यते न्याये। परं सर्वत्रैव प्रत्यगर्थत्वम्—स्वाभिमुखार्थबोधकत्वम्—अर्थादान्तरत्वं न जहाति ।

[३] मुख्य आत्मशब्दो रस एव प्रयुज्यत इत्युच्यते। आत्मा एकरूपो नित्यः, बलं तु प्रवाहनित्यमिति ।

[४] व्यक्तिरूपेण बलमुदेति विलीयते च। बलसामान्याभावस्तु कदापि कुत्रापि न भवतीत्यर्थः ।

[५] शक्तिः सर्वत्र पृथग्रूपा। यस्मिंस्तु सा शक्तिः, स शक्त्याश्रय आलोच्यत इत्यर्थः ।

[६] सनिरूपक आत्मा य उक्तः, स व्याख्यायते। शुद्धो रसः सदैवात्मपदवाच्यः। बलविशिष्टस्तु यद्वस्तु अग्रे उत्पादयति, तस्यात्मत्वेनोच्यते। स सखण्डः न कूटस्थनित्यः। स कर्मविशिष्टत्वात् कर्मात्मेत्युच्यते ।

[१]ततोऽतिरिक्ता इह चात्मशब्दाः, ये केऽपि कर्मात्मतया त इष्टाः।
स्वरूपतः कर्म्मवतां न तेषामात्मत्वमाप्तं व्यतिरिच्य कर्म्म ॥२६१॥

[२]परस्परान्वाहितरूपनानाकर्म्माणि चैकं क्वचिदिष्ट आत्मा।
शुद्धस्त्वभोक्ता च तथैव भोक्तेत्येवं त्रिधात्मा तदखण्डभिन्नः ॥२६२॥

[३]परो य आत्मा पुरुषः स शुद्धः शुद्धे रसे शुद्धबलप्रयोगात्।
बलैः कृतात्मापि न तत्र शक्तिस्तद्भोग्यमर्थं क्षरमादधाति ॥२६३॥

[४]यश्चाक्षरोऽयं पुरुषः स आत्मा स ईश्वरः सर्वनियोजकोऽपि।
नाश्नाति तत्कर्म्मफलानि यद्वन्न लिप्यतेऽर्कः किल बाह्यदोषैः ॥२६४॥

[५]क्षरस्तु भोक्ता किल कर्म्मभिस्तैः सम्पद्यमानः प्रतितिष्ठतीह।
कर्म्माणि नित्यं कुरुतेऽथ तेषां फलानि भुङ्क्ते सदसन्ति नित्यम् ॥२६५॥

[६]आत्मा रथी तत्र रथः शरीरं प्रज्ञस्तु सूतोऽथ षडस्य प्रज्ञाः।
स्युः प्रग्रहा इन्द्रिय वृत्तयोऽश्वा अर्थेन्द्रियार्था षडिमे प्रदेशाः ॥२६६॥

---

१ रसातिरिक्ते यत्र कुत्रचिदात्मशब्दः प्रयुज्यते, स कर्मात्मा कर्मविशिष्ट आत्मेत्येव ज्ञातव्यम्। सनिरूपक एव तत्रात्मशब्दो भवति, कस्यात्मेति। तत्रापि बलविशिष्टे बलं बुद्धौ पृथक्कृत्यैव बलावच्छिन्ने रसे आत्मशब्दः प्रयुक्तो द्रष्टव्यः। कर्मरूपं बलमात्मस्वरूपे प्रविष्टं नास्तीति।

२ क्वचित्तु यत्रैकस्मिन् कर्मणि कर्मान्तराणां चितिः, तत्र आश्रयभूतं कर्माप्यात्मशब्देनोच्यते। परस्परं समन्वितरूपाणि—कर्माणि, एकस्तु सर्वाश्रयस्तत्रात्मोच्यते। तत्र कर्मसु प्रविष्टोऽपि शुद्धो रसः सर्वथैव अभोक्ता भवति, न तत्र बलं कदापि प्रविशति। कर्मरूप आत्मा तु क्वचिदभोक्ता, क्वचिच्च भोक्ता भवतीति कर्मात्मसु अपि त्रिविधत्वं भाव्यम्।

३ पर आत्मा योऽव्ययपुरुष उक्तः, तत्स्वरूपे रसबले उभे अपि शुद्धे। बलविशिष्टोऽपि सोऽक्षरस्य क्षरस्य चात्मा, परं न स भोक्ता भवति। तत्र बलरूपा प्रकृतिर्भोग्यमर्थं नार्पयति, तस्याविकारित्वात्। बलानि तत्स्वरूपे प्रविष्टानि—इति सोऽपि कर्मात्मैव, परं न भोक्ता।

४ अक्षरोऽपि न भोक्तेत्युच्यते, सर्वनियोजकः स ईश्वर उच्यते। परं कर्मफलानि न भुङ्क्ते, न विकारमापद्यत इत्यर्थः। तत्र सूर्यो दृष्टान्ततयोक्तः।

५ तृतीयः क्षरपुरुष एव भोक्ता भवति। कर्मभिर्विभिन्नरूपतां गच्छतीत्यर्थः। क्षर एव जीवात्मतया व्यवह्रियते।

६ "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति कठश्रुतिमर्थतः पठति। न बुद्धिमात्रं सारथिः, अचेतनत्वात्, तस्माद्बुद्धिपदेन बुद्ध्यवच्छिन्नचैतन्यरूपः प्रज्ञात्मेह विवक्षितः श्रुत्येति प्रज्ञपदमत्रोपात्तम्। विज्ञानात्मैव प्रज्ञ इहोक्तः। मनश्च द्विविधम्—सुखदुःखादिग्राहकमिन्द्रियरूपमेकम्, सकलेन्द्रियसहकारि तु द्वितीयम्। सकलेन्द्रियसहकारिजनिता एव षड्विधाः प्रज्ञाः, पञ्चेन्द्रियजन्याः—

[1]आत्मा चिदाभास इति प्रसिद्धः प्रज्ञश्च षट्प्रज्ञ उतेन्द्रियाणि ।
अथैतदर्थाश्च तदित्यमेकः पशुः स आत्मा भवतीह भोक्ता ॥२६७॥

[2]अखण्ड आत्मा हि तुरीयपादः परोऽक्षरो वा क्षर इत्यमी तु ।
पादास्त्रयोऽन्ये तत एष आत्मा मतश्चतुष्पादयमेक एव ॥२६८॥

रसो विशुद्धस्तु परात्परो मतो य उत्तमः सोऽस्ति परोऽथ योऽक्षरः ।
परावरः सोऽस्त्यवरः स यः क्षरः संज्ञाविशेषाः स्युरमी तदात्मनाम् ॥२६९॥

[3]परस्तुरीयः पृथगस्य पादोऽक्षरः क्षरोऽन्यः पशुरित्यमी तु ।
त्रयोऽस्य पादास्तत एष आत्मा कर्म्मात्मसंज्ञोऽपि मतश्चतुष्पात् ॥२७०॥

षट्त्रिंशदारम्भककर्म्मजानि क्षरस्य वाक्प्राणमनांसि सन्ति ।
तान्यक्षरे षड्वलितानि तद्वत् परस्य तान्येकबलानि विद्यात् ॥२७१॥

मात्राप्रवेशात् पृथगात्मशक्त्योः खण्डाः क्षरे त्वष्टशतं भवेयुः ।
तयाक्षरोऽष्टादशखण्ड इष्टः परस्त्रिखण्डोऽथ रसस्त्वखण्डः ॥२७२॥

## (१६)[4] सिंहावलोकनाधिकरणम् ।

[5]ब्रह्म 'द्विधा दृश्यत आभु चाभ्वं, यन्निर्विशेषं प्रथमं तदाभु ।
अवाङ्मनोगोचरमस्ति तस्मादज्ञेयताऽनिर्वचनीयताऽस्य ॥२७३॥

---

रूपज्ञानं रसज्ञानमित्याद्याः, इन्द्रियरूपमनोजन्याश्च सुखदुःखादिज्ञानरूपाः । स एवात्र श्रुतौ प्रग्रह उक्तः । इन्द्रियरूपस्तु अश्वेषु गणितः । इन्द्रियार्थाः—रूपरसाद्याः प्रदेशाः—इन्द्रियाणां गमनस्थानानि—इन्द्रियद्वारा विशिष्टात्मभोग्यानीत्यर्थः ।

[1] योऽयमिन्द्रियमनोयुक्त आत्मा भोक्ता उक्तश्रुतावुक्तः, स एव वेदान्तग्रन्थेषु चिदाभासनाम्ना व्यवह्रियते । मनः पदेन च श्रुतौ षट्प्रज्ञो बुद्धयधिष्ठाता प्रज्ञात्मा ग्राह्यः । इन्द्रियार्था इन्द्रियगृहीता अपि इन्द्रियपदेनैव गृहीताः । सोऽयमिन्द्रियमनोविशिष्टो भोक्तात्मा पशुपदेनापि श्रुतिस्मृत्योर्व्यवह्रियत इत्यर्थः ।

[2] एवं व्यवहारे चतस्रोऽवस्था या उक्ताः, त एव चत्वारः पादा उच्यन्ते । तेन चात्मा चतुष्पादित्युच्यते । पद्यद्वयं स्पष्टार्थम् । उत्तरस्मिन् श्रुतिस्मृतिव्यवहृताः संज्ञा व्याख्याताः ।

[3] अथ शुद्धमखण्डात्मानं पृथक्कृत्य कर्मात्मन एव चतुष्पात्त्वमुच्यते । त्रयः पूर्वोक्ताः । चतुर्थस्तु भोक्ता पशुरिति तस्य चतुष्पात्त्वमित्यर्थः । पूर्वस्मिन् मते तु पशुः क्षरात्मन्येवान्तर्भाव्यते—इति विवक्षाभेदमात्रम्, न वस्तुभेदः ।

[4] अथोक्तस्यैवार्थस्य बुद्धयुपारोहार्थं क्वचित् किञ्चिद् विशेषबोधनार्थं च पुनर्वचनं क्रियते । सूक्ष्मो ह्यर्थो भूयो भूयः प्रतिपादित एव बुद्धिगम्यो भवतीति नात्र पुनरुक्तिं दोषाय मन्वत आचार्याः । सिंहो यथाऽग्रे गच्छन् कदाचित् परिवृत्य पृष्ठतोऽवलोकते, तथैवेदं पृष्ठतोऽवलोकनमिति सिंहावलोकनमुच्यते ।

[5] पूर्वोक्ते विशेषमाह—ब्रह्मैव प्रकारद्वयेन ज्ञातव्यम्—तत्र श्रुत्युक्ते संज्ञे—आभु, अभ्वं च । आभुशब्दो विभुसमानार्थः । आभुनि भवं चाभ्वम् । रसबलयोः पर्यायाविमौ शब्दौ । बलमपि ब्रह्मैवेति अत्र विशेष उक्तः ।

यद् दृश्यते कर्म्म च[1] रूपनामेत्यभ्वं तदुक्तं तदिह प्रवच्मि ।
विश्वं तदभ्वं तदिह द्विधोक्तं व्यष्टिः समष्टिर्दहरोत्तरो वा ॥२७४॥

[2]भूमोत्तरः स्याद् दहरोऽणिमान्तः पुनः पुनस्तौ मितिरस्ति यावत् ।
असीमभूमान्तमसीमरूपाणिमान्तमेकं प्रवदामि विश्वम् ॥२७५॥

[3]तमुत्तरं वा दहरं तथा वा द्विधा विभक्तैस्ताविहानुवीक्षे ।
तन्त्रं बहिस्तत्परिचालकं तु क्रान्त्वा तदन्तः प्रथितं सुसूक्ष्मम् ॥२७६॥

तन्त्रं शरीरं परिचालकं चास्यात्मानमाहुः स शरीरधर्त्ता ।
[4]शारीरकः प्रोच्यत एष एवायः किट्टवत् कल्पयते शरीरम् ॥२७७॥

तस्माच्छरीरं न तदात्मनः स्यात् पृथक् ततः प्रोच्यत एष आत्मा ।
एकैक आत्मा दहरस्तमन्यो व्याप्नोति तं चान्य इति क्रमोऽस्ति ॥२७८॥

एकैकमात्मानमिह त्रिभागं पश्यामि वाक्प्राणमनः प्रभेदात् ।
[5]वागन्नमर्थश्च, बलं क्रिया च प्राणो, मनोज्ञानमुदेति विद्या ॥२७९॥

---

[1] नामरूपकर्मात्मकं विश्वम्, तदपि व्यष्टिसमष्टिभेदेन द्विविधमित्यर्थः । व्यष्टिः—अल्पः—दहरः । समष्टिस्तु महान्—उत्तरः । समष्टौ व्यष्टयः प्रविष्टा भवन्तीति यावत् ।

[2] पूर्वोक्त प्राकारेण समष्टिर्भूमा इत्युच्यते, महत्त्वात्, व्यष्टिस्तु अणिमा, लघुत्वात् । भूमन् शब्दोऽणिमन् शब्दश्च धर्मवाचकावपि धर्मिण्यपिरूढ्या प्रयुज्येते । अयं च भूमाणिमभाव आपेक्षिकः । य एव कश्चिदपेक्ष्य भूमा, स एव परापेक्षयाणिमा भवति । यथा अङ्गुल्यपेक्ष्या हस्तो भूमा, शरीरापेक्षया तु स एवाणिमा । इत्थमयं भूमाणिमभावः पुनः पुनः प्रचलति । परममहति परमाणौ च सा परम्परा निवर्तते । परममहदपेक्षया भूमा नास्ति, परमाण्वपेक्षया चाणिमा नास्तीत्यर्थः ।

[3] दहरे उत्तरे चाप्यणिमभूमरूपेण व्याकृते पुनर्भागद्वयमाह—तन्त्रं परिचालकश्चेति । तन्त्रं शरीरम् परिचालकस्त्वात्मा । सर्वत्रैव ये पदार्था दृष्टिमुपयान्ति तत्र सूक्ष्मरूपेणात्मा प्रविष्टः । स एव तद्विधारकः प्राणरूपः, स एव तद्वृद्धिह्रासनवताजीर्णताप्रयोजक इति ।

[4] शरीराधिष्ठाता एष आत्मा शारीरक उच्यते, प्राणपदेनाप्ययं श्रुतिस्मृत्योर्व्यवह्रियते । कर्मात्मा एष प्रतिपत्तव्यः । यथा लोहे चिरस्थिते किट्टं जायते, तथैव प्राण एव किट्टरूपेण शरीरमुत्पादयति । तस्मात्तदुत्पादितं शरीरमपि न ततो भिन्नमित्यर्थः । पूर्वं प्राणः, तत एव रयिरूपं शरीरमित्येव वैदिकः सिद्धान्तः । एष दहरोत्तरभाव इदानीमुक्तः पुनः स्मारितः ।

[5] वाक्प्राणमनांसि व्याख्यातानि, तत्र संज्ञाविशेषा उच्यन्ते । वाक्, अन्नम्, अर्थः—इति पर्यायशब्दाः, बलम्, क्रिया प्राण इत्येकार्थाः । मनः, ज्ञानम्, विद्या—इत्येक एवार्थः । यद्यपि मनसो ज्ञानमुदेति इत्यपि व्यवहरन्ति, परं कार्यकारणयोरैक्यात् सत्कार्यवाद एषामेकतैव प्रतिपत्तव्या ।

[१]प्राणश्चवाक् चानुयुजौ मनश्चेत् संचारयेते तदुवेदरूपम् ।
ऋक्सामयोरस्ति यजुर्निविष्टं सामेदमध्यूढमृचिप्रविद्यात् ॥२८०॥

[२]चेद्वर्तनी वाक् च मनश्च युक्ते प्राणं तु संचारयतः स यज्ञः ।
प्राणोऽन्नमूर्क् च त्रितयं त्रिषु स्याद् गृहीतमन्योन्य समुद्भवाय ॥२८१॥

[३]प्राणो मनश्चेत् सयुजौ तु वाचं संचारयेते स च लोक एषः ।
उक्थोत्थितोऽश्नात्यशितीरिहार्को मृत्युर्यदर्चंश्चरतीह सोऽर्कः ॥२८२॥

अर्थैष वाक्प्राणमनोमयोर्योऽस्त्यात्मांशभूतो न तु पूर्ण आत्मा ।
सत्ताचिदानन्दमयः स आत्मा, सत्ता स वाक् प्राणमनोमयोऽर्थः ॥२८३॥

[४]चिदत्रविज्ञानमिदं मनस्तः पृथक् तदस्ति ध्रुवमेकरूपम् ।

---

[१] अर्थेभ्यो वाक्प्राणमनोभ्य एव वेद-यज्ञ-लोकसृष्टीरभिनवा व्याचष्टे । एषां हि मनःप्राणवाचामन्योन्यं गुणप्रधानभावो भवति । यदा हि प्राणवाचौ संयुज्य मनः संचारयतः, अर्थात् प्राणवाचौ वाहने, मनस्तु प्रधानं भवति तदा वेदरूपमाविर्भवति—अर्थाद् वेदसृष्टिर्भवति । वेदेष्वपि ऋक्सामे वर्तनी—वाहने—यजुस्तु तत्राधिरूढं मुख्यम् । ऋक्सामयोरपि सामऋच्यधिरूढम् । सर्वमिदं पुरुषप्रपञ्चाधिकरणव्याख्यायां स्पष्टीकृतमस्माभिः ।

[२] यदा तु वाङ्मनसे संयुज्य प्राणं प्रधानं वहतः—तदा यज्ञसृष्टिः वर्तनी वाहके । यज्ञश्च अन्नोर्क्प्राणानामुत्तरोत्तरीभावः । अर्थाद् यद् हूयते तदन्नम्, तच्च हुतमूर्ग्रूपेण परिणमति । ऊर्ग्-ओजः—अन्नप्रणयोर्मध्यगावस्था । ऊर्क् च प्राणरूपेण परिणमते । पुनः प्राणादूर्क्, ऊर्जश्चान्नमिति क्रमः प्रचलति । एतानि त्रीणि मनःप्राणवाक्षु गृहीतानि ।

[३] अथ मनः प्राणौ सयुजौ यत्र वाचं प्रधानभूतां वहतः, तत्र लोकसृष्टिः । अत्र पूर्वमुक्थार्काशीतयो भवन्ति, या वेदप्रकरणे व्याख्याताः । उक्थादुत्थितोऽर्को अशितीरश्नातीत्यन्वयः । मृत्युः—बलम्, अर्चन् चरति-परितो भ्रमन् गच्छति-स एवार्क उच्यत इत्यर्थः । तत एव पूर्वोक्ता अपामुत्पत्तिः । अद्भ्य एव लोकाः । तदुक्तं बृहदरण्यकोपनिषत्सु—"अशनाया हि मृत्युः, तन्मनो कुरुत, आत्मन्वी स्यामिति, सोऽर्चन्नचरत्, तस्यार्चत आपोऽजायन्त । अर्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम् । (अ० १ ब्रा० २ क० १) । मनःप्राणवाचामेव लोकवेदादिरूपतेत्यपि बृहदारण्यकोपनिषदि अम्नातम्—'त्रयो लोका एत एव । वागेवायं लोको मनोऽन्तरिक्ष लोकः प्राणोऽसौ लोकः । त्रयो वेदा एत एव, वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः' (३ अ० ५ ब्रा० ४–५ क०) इत्यादि ।

[४] सत्ता, चित्, आनन्द इति त्रीण्यात्मरूपाणि, तत्र मनः प्राणवाचः समुदिताः सत्तारूप आत्मांशः, चिदानन्दौ तु तदतिरिक्ताविति पूर्वपद्य उक्तम् । तत्र शङ्क्यते—मनस एव तु परिणतिः—वृत्तिः चित्, सा मनःप्राणवाग्भ्यः पृथक् कथमुच्यते ? तत्रोत्तरमाह । चित् पदेन नित्यं विज्ञानमात्मरूपमुच्यते, मनसि तत्प्रतिफलनाद् वृत्त्यात्मकं ज्ञानं जायते, स चिदाभासः । मुख्या चिद्—एकरूपा ध्रुवा नित्या, मनोवृत्तयस्तु ज्ञानरूपाः परिवर्तनशीलाः संकल्पविकल्पनाम्नोच्यन्त इति ।

[१]यदन्यदन्यत् क्रमते मनस्तज्ज्ञानेऽस्ति संकल्पविकल्परूपम् ॥२८४॥

य एष आनन्द इहोदितः स द्विधा रसोऽन्योस्ति बलं तथान्यत् ।
भूमासमृद्ध्यास्ति बलात्मकोऽसौ रसात्मकः शान्तिघनः सभिन्नः ॥२८५॥

[२]बलात्मकानन्दपुरोगमास्ते ज्ञानं मनः प्राण उतान्न मे ते ।
पञ्चापि कोशाः अथ तत्प्रविष्टो रसः स आत्मा स उपासनीयः ॥२८६॥

रसाद् बलाढ्यादिदमत्र सिद्धं विज्ञानमन्यश्च सतः[३] स्वभावः ।
स एष वाक्प्राणमनोमयोऽर्यो न पञ्चकादन्यदिहास्ति किञ्चित् ॥२८७॥

बहिर्बहिः [४]स्यात् क्रमशः शरीरं तदन्तरन्तः क्रमतोऽन्य आत्मा ।
पञ्चापि कोशा इह यच्छरीरं सोऽखण्ड आत्मा परमो रसः सः ॥२८८॥

अधः स्विदासीदुपरि स्विदासीदसीमनिःसङ्गरसो य आत्मा ।
तमाश्रिता अव्ययपञ्चकोशास्तदाश्रिता अक्षरधातवः स्युः ॥२८९॥

---

[१] यथा ज्ञानं द्विविधमुक्तम्—तथानन्दोऽपि द्विविधः एक आत्मरूपः, परस्तु बलसंबन्धाज्जायते । किञ्चिद् गृहारामभूम्यादि संपत्प्राप्तौ मनसि वृत्तिरूपो विशेषो जायते, स भूमा महत्त्वप्राप्तिरूप आनन्दः । स "यो वै भूमा तत्सुखम् यदल्पं तद्दुःखम्" इत्यादि श्रुत्या प्रतिपादितः । तदा मनसो विकासो जायते, मनोऽवच्छिन्नं चैतन्यं तदभिनववस्तु स्वस्वरूपे प्रवेशयतीति यावत् । आत्मानन्दस्तु शान्तिरूपः, यत्संबन्धान्मनसोऽपि चाञ्चल्यरूपः क्षोभो निवर्तते । स एष मुख्य आनन्दः । अतएवापरिमेयं विलाससुखमुपभुञ्जाना अपि धनिका विश्रामरूपां सुषुप्तिरूपां वा शान्तिमभिवाञ्छन्त्येवेति ।

[२] बलरूपो यो भूमानन्द उक्तः, स मुख्यात्मनः कोशरूपः । तदाद्याः पञ्चकोशाः तैत्तिरीयोपनिषदि व्याख्याताः—आनन्दमयः, विज्ञानमयः, मनोमयः, प्राणमयः, अन्नमय इति कोशशब्दार्थोऽत्रावरणम्, यथा खड्गस्य कोश इति । अन्नमयः सर्वोपर्यावरणम्, ततः क्रमेणानुप्रविष्टाः प्राणमयाद्याः । सर्वेषामान्तरस्तु रसो मुख्य आत्मा । स एव मुख्यतयोपासनीय इति । तत्र मुख्य आत्मनि उपासकानां मनोवाक् प्रवेशाभावात् प्रतीकरूपाः कोशोपासनाः । एतदेव श्री शङ्कराचार्यैरानन्दमयाधिकरणे विवृतम्, यस्य तत्त्वमनवधार्य कलहायन्ते सांप्रदायिकाः । यद्यपि ग्रन्थकर्त्रान्यत्रकोशशब्दार्थो निधानम् इत्युक्तम्, अव्ययकला जगत्युपलभ्यमानानामन्नप्राणादीनां निधानभूता इति । तथापीह प्राचीनाचार्यरीत्यैव कोशशब्दार्थो व्याख्यातः । वैज्ञानिकप्रक्रियायामुभयमपि समञ्जसमिति ।

[३] सतः स्वभावः सत्ता । सत्ता बलविशिष्टरसस्याभासो विज्ञानम् । समृद्ध्यानन्द इति सत्ता चिदानन्दाः कोशेष्वेवान्तर्भूताः । बलविशिष्टस्य रसस्येमानि रूपाणि न तु शुद्धरसस्य । शुद्धरसे त्वभावरूपाण्येतान्याख्यातानि श्रीशङ्कराचार्यैः सत्ता—अभावभिन्नता, चिद्-जाड्या- भावः, आनन्दश्च दुःखभावरूपमक्षुब्धत्वमिति ।

[४] आनन्दमयो बहिर्भूतानां विज्ञानमयादीनामात्मा, विज्ञानमयो मनोमयादीनामित्यादि । रसस्तु सर्वेषामात्मा ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | निर्विकल्पको निर्विशेष आत्मा = अज्ञेयः, अनिर्वचनीयश्च | | | परा-त्परम् | | गुणातीतः | मायानिष्कलम् (आभु) |
| २ | रसः = शान्तिः = आनन्दः । | | । आनन्दमयः | परम् | | अखण्ड आत्मा | |
| ३ | बलम् = भूमा = | आनन्दः । | । आनन्दमयः | परावरम् । | जीवः | सखण्ड आत्मा | मायाबलितं ब्रह्म = (अम्भम्) |
| ४ | | विज्ञानम् । | । विज्ञानमयः | | क्षेत्रज्ञः | | |
| ५ | चेतन आत्मा | सत्ता = | मनः = मनश्चरी संहिती वाक् प्राणी वेदः । मनोमयः | अवरम् । | महान् | | |
| ६ | स्थावरात्मा | | प्राणः = प्राणचरे उत्तरोत्तरे वाङ्मनसे यज्ञः । प्राणमयः | | | | |
| ७ | जड़ात्मा | | वाक् = वाक् चरी संहिती प्रज्ञाप्राणी लोकः । अन्नमयः | | | | |

वहरोत्तरभेदेन शरीरचातुर्विध्यादयं शारीरकोपि चतुर्धा भ्रूणः, जीवः, ईश्वरः, परमेश्वरश्चेति । [१]भूतानि, [२]जड़ः-[३]स्थावरः-[४]भ्रूणः-[५]जीवः-[६]ईश्वरः-[७]परमेश्वरः-इति पञ्चभूतपूर्वकोऽयं सप्तधा भिद्यते । परमेश्वरे ईश्वराः । ईश्वरे जीवाः । जीवे भ्रूणाः । भ्रूणे स्थावराः-स्थावरे जड़ाः । जड़े पञ्चभूतानि शरीरारम्भकाणि । एवं पञ्चभूतेषु जड़ादयः । जड़े स्थावरादयः । स्थावरे भ्रूणादयः । भ्रूणे जीवादयः । जीवे ईश्वर प्रमुखौ । ईश्वरे परमेश्वरोऽभिव्याप्नोति, स आत्मा ।

१ पार्थिवः-आप्यः-तैजसः-वायव्यः-आन्तरीक्ष्य इत्यादयः सप्तलोकाः ॥

२ समानेऽपि पार्थिवे लोके यज्ञभेदाज्जडस्थावरचेतनभेदास्त्रयो यज्ञाः ॥

३ समानेऽपि चेतने यज्ञे चेदभेदान्महतो भेदाः । ततो मनुष्यपशुपक्ष्यादिभेदाः ॥

४ समानेऽपि मनुष्यत्वे विज्ञानभेदाच्छीलभेदः । समानेऽपि शीले सुखदुःखादि वृत्तिभेदः ॥

[१]ब्रह्मेन्द्रविष्णू अथ चाग्निसोमौ पञ्चाक्षरास्तत्र तमेनमग्निम् ।
क्षरोऽग्निरन्यो वृणुतेऽथ तस्मिन् प्रवर्तते यज्ञ इति स्म सृष्टिः ॥२९०॥

संसर्ग उक्तो द्विविधः स्वरूपं वृत्तित्वमप्यत्र रसे बलस्य ।
स्वरूपसंसर्गवशादिहात्मा प्रजापते वृत्तितया तु शक्तिः ॥२९१॥

स्वरूपसंसर्ग इह त्रिधा स्याद् बन्धश्च योगश्च तथा विभूतिः ।
अनुग्रहादेव भवेद् विभूतिर्यत्कौशलं[२] कर्मसु योग एषः ॥२९२॥

बन्धस्तु सङ्गातिशयादिह स्यादेभिस्त्रिभिः संस्क्रियते स आत्मा ।
यत्र [३]ग्रहातिग्रहभावसिद्धिः सा वृत्तिता तत्र च भोग्यसिद्धिः ॥२९३॥

[४]त्रिभि स्वरूपानुगतैः प्रसर्गैरात्मा त्रिधा संभवति स्वतन्त्रः ।
मनो विभूत्या भवतीह योगात् प्राणोऽथ बन्धादिह जायते वाक् ॥२९४॥

[५]यत्सृज्यते तत् त्रिकमेव साकं ह्यन्नादमस्यावपनं तदन्नम् ।
न क्षीयतेऽन्नं न निरन्नमन्नात् स्यात्तद्द्वयं चावपनप्रतिष्ठम् ॥२९५॥

---

१ अक्षरकलाः पुरुषप्रपञ्चे व्याख्याताः । तत्राग्निर्न भौतिकः, किन्तु प्राणरूपः । एतदाधारेणैव क्षररूपोऽग्निः प्रादुर्भवति, स एतमग्निं वृणुते-अभितो वर्तते । तत्र यज्ञः प्रवर्तते, यज्ञेन च सृष्टिरिति सृष्ट्युत्पत्ति संक्षेपः । एतं सर्वमर्थं स्पष्टी कर्तुं मानचित्रमत्रोपन्यस्तम् । तच्च स्वयं गद्येन व्याख्यातम्—तत्सुगमं विद्वद्भिरनुध्येयम् । तत्र भ्रूणाः आधुनिकैः 'जर्म्स्' इत्युच्यन्ते ।

२ अथ पूर्वमुक्तान् रसबलयोः संसर्गभेदान् स्मारयति । स्वरूपसंसर्गेणात्मभेदा जायन्ते, वृत्तिसंसर्गेण च शक्तिभेदाः । अन्यद् व्याख्यातपूर्वम् ।

३ "योगः कर्मसु कौशलम्" इति भगवद्गीतावचनमेतत्प्रकरणोपयुक्ततयात्र योजितम् । कर्मसु यत् कौशलम्—नवनवोत्पादनशक्तिः, स योग इत्यर्थः । योगेनैव नवा अर्था उत्पद्यन्ते ।

४ संसर्गे सति एकः परेण गृहीतो यत्र भवति—अर्थात् परतन्त्रो भवति, तत्र ग्रहातिग्रहभाव उच्यते । सोऽयं वृत्तितासंबन्धः । अत्रैव भोगो भवति । परतन्त्रो भोग्यः, स्वतन्त्रस्तु भोक्ता इति ।

५ मनःप्राणवाचां प्रादुर्भावो व्याख्यातपूर्वः । एतेषां समष्टिश्चात्मा । एवमेव शक्तावपि भेदत्रयं भवतीति संशयोच्छेदवादे ग्रन्थकर्त्रा निरूपितम्, इहापि चाग्रे वक्ष्यते । यथात्र मनःप्राणवाचः, तेषां समवाय आत्मा, तथा तत्र सत्वरजस्तमांसि, तेषां समष्टिश्च प्रकृतिः । यथा च कर्मात्मसु अव्ययाक्षरक्षररूपावस्थाः, तथा शक्तौ महान्, अहङ्कारः तन्मात्राः इत्यवस्थाः । अग्रे वक्ष्यमाणश्च पुरुषशक्त्योः संबन्धः क्रमेणैव बोध्यः । अव्ययस्य शक्तिः महान्, अक्षरस्य अहङ्कारः क्षरस्य च तन्मात्रा इति । क्षरोऽपि द्विधात्र पूर्वं व्याख्यातः आत्मक्षरः—अभोक्ता, पशु-क्षरश्च भोक्ता इति । तत्रात्मक्षरस्य शक्तिः, तन्मात्रा समष्टिः पशुक्षरस्य तु पञ्चतन्मात्रा विभक्ता इति । सैव तत्र भोग्यमुपस्थापयतीति सुसूक्ष्ममनुसन्धेयं विवेचकैः ।

मनो भवेदावपनं वियत्त[१]त्प्राणस्तथान्नाद इति प्रसिद्धः ।
वागन्नमित्थं त्रितयं प्रतीयात् क्षरेऽक्षरे चाप्यपरे परेऽपि ॥२९६॥

[२]मनः खमाहुर्मनसि स्थितं तं प्राणं सहान्नं च कमाहुरेके ।
प्राणं मनःस्थं त्वमृतं तथाहुर्वाचं तु मृत्युं पुरुषेषु तेषु ॥२९७॥

प्राणं विदुः क्षत्रमथोविशं विदुर्वाचं मनो ब्रह्म विदुस्त्रिके गणे ।
प्राणो हि वाचः प्रथते नियोजकः प्राणस्य चेदं हि मनो नियोजकम् ॥२९८॥

ब्रह्माथ विद् क्षत्रमुपेत्य यद्वत् स्थितिं लभेतेह तथा मनो वा ।
वाग् वाश्रयं प्राणमुपेत्य नूनं स्थितिं लभेते स वसिष्ठ एषाम् ॥२९९॥

सहैव सर्वेप्युदयं लभन्ते सहैव सर्वेऽपि वसन्ति नित्यम् ।
नित्यं मनः प्राणमयं च वाचं तिष्ठत्यधिष्ठाय तदङ्गभावात् ॥३००॥

एषां त्रयाणां पृथगात्मनां मिथः सम्बन्ध उक्तः समवायसंज्ञकः ।
अन्योन्यतस्ते समवेतरूपिणो विनान्यतोऽन्यस्य न च स्थितिः क्वचित् ॥३०१॥

त्रयस्त्विमे ये पुरुषा निरुक्ताः प्राणो मनो वागिति संप्रतीताः ।
अन्योन्य साहित्यकृतैकमूर्तिस्त्रिपुरुषोऽन्यः पुरुषो मतस्तैः ॥३०२॥

स वाङ्मयः प्राणमयो मनोमयो य एक [३]आत्मास्ति सनातनः प्रभुः ।
त्रिविक्रमोऽसौ त्रिभिरेष विक्रमैर्विचक्रमेतज्जगदेतदुच्यते ॥३०३॥

य उत्तमो यः पुनरक्षरः क्षरस्ते विक्रमास्तस्य मता इमे त्रयः ।
एभिस्त्रिभिस्तैः पुरुषैर्विनाकृतं जगन्न किञ्चित् क्वचिदस्ति वस्तुवत् ॥३०४॥

[४]संसृज्यते तन्त्रिकमन्नमन्नात् सहैतयोरावपनं निविष्टम् ।
न क्षीयतेऽन्नं न निरन्नमन्नाद् द्वयं च तत्रावपने प्रविष्टम् ॥३०५॥

---

[१] मनःप्राणवाक्षु कश्चिद्विशेष आख्यायते द्वाभ्यां पद्याभ्याम् । वागन्नम्, प्राणोऽन्नादः, मनस्त्वावपनम् । आवपनम्-आधारविशेषः—सर्वावयवव्याप्त्या आधार इति । अन्नस्य प्रतिक्षणमद्यमानस्यापि क्षयो न भवति, यज्ञप्रक्रियया नवनवोत्पादनादिति । मनस्तथावपनं यथा वियद् जगतः । एतत् त्रितयं पुरुषत्रयेऽपि व्याप्तमिति ।

[२] श्रुति परिभाषामाह—मनः खमित्युच्यते, अन्नान्नादौ च कमित्युच्येते । यथा छान्दोग्योपनिषदि चतुर्थके प्रपाठके दशमखण्डे उपकोशलं प्रत्यग्नीनामुपदेशे "प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्म, खं ब्रह्मेति । सहोवाच विजानाम्यहं, यत्प्राणो ब्रह्म, कञ्च तु खञ्च न विजानामि, ते होचुः यदेव कं तदेव खं यदेव खं तदेव कमिति । प्राणं च हास्मै तदाकाशं चोचुः" इति स्पष्टार्थानि अन्यानि पद्यानि ।

[३] त्रयाणां समष्टिरेकः कर्मात्मोच्यते—स त्रिविक्रमः । त्रयो विक्रमाश्चाव्ययाक्षर-क्षराः । त्रिभिर्विक्रमैरेव जगज्जायत इति ।

[४] त्रिषु पुरुषेष्वपि अन्नान्नादावपनरूपता व्याख्यायते ।

परं भवेदावपनं ततोऽक्षरं त्वन्नादमस्य क्षरमन्नमिष्यते ।
[१]अत्राक्षरे कर्म्मफलस्य भोक्तृता निषिध्यते न त्वियमन्नभोक्तृता ॥३०६॥

[२]द्वयं च तत्रामृतमुच्यते परं तथाऽक्षरं मृत्युरथ क्षरं भवेत् ।
स मृत्युरस्मिन्नमृते स्थितोऽमृतो न क्षीयतेऽनुक्षणमक्षितोऽपि सन् ॥३०७॥

स्वरूपसंसर्गं इहोदितो द्विधा संसृष्टयोश्चाऽपि विशुद्धयोरपि ।
संसृष्टयोरप्यथ स द्विधा मतः स ग्रन्थिकाग्रन्थिकभेदतः पुनः ॥३०८॥

[३]सर्गैश्च संशुद्धनिरुपितैस्त्रिभिर्भवन्ति वाक्प्राणमनांसि यानि वै ।
तैरात्मभिर्यः प्रथमः प्रवर्तते परः स आत्मा पुरुषः स उत्तमः ॥३०९॥

सर्गैस्तु संसृष्टनिरूपितैस्त्रिभिः पुनस्तु वाक्प्राणमनांसि यानि तैः ।
अग्रन्थिकैस्तैरपरः प्रवर्ततेऽक्षरः स आत्मा पुरुषः स ईश्वरः ॥३१०॥

संसृष्टिसंसृष्टनिरूपितैस्त्रिभिः सर्गैस्तु वाक्प्राणमनांसि यानि तैः ।
स ग्रन्थिकैर्यः पुरुषः प्रवर्तते क्षरः स आत्मेति हि विक्रमत्रयम् ॥३११॥

स्वरूपसंसर्गिवलाश्रयेऽस्मिन् ध्रुवं भवेद् [४]वृत्तिमती हि शक्तिः ।
शक्तिः स्वरूपेण यदान्विता स्यात् तदा पुनः शक्तिरिहाभ्युपैति ॥३१२॥

परात्मनः शाश्वतिकीह शक्तिर्वलं तदन्वेति रसे परस्य ।
ततोऽक्षरं शश्वदुदेति तस्मिन् स्थितं परस्मिन् पुरुषोत्तमे स्यात् ॥३१३॥

---

[१] शङ्कते—ननु अक्षरस्य भोक्तृता पूर्वं निषिद्धा—इदानीं तस्यान्नादत्वं कथमुच्यते । समाधत्ते—कर्मफलभोक्तृता निषिद्धा । अन्नान्नादभावस्तु स्वाभाविको न निषिद्ध इति । नात्र भोक्तृता रूपमन्नादत्वम्, सुख दुःख भोगाभावात् । अपि तु यथेच्छं विनियोज्यात्मसात्करणमेवात्रान्नादत्वम् ।

[२] पराक्षरपुरुषावमृतपदेनोच्येते, क्षरस्तु मृत्युपदेनेति । मरणधर्माऽपि क्षरः अमृते स्थित इति अमृतरूप एव भवति । अनुक्षणमक्षरेण भक्ष्यते—अर्थात् स्वरूपं परिवर्त्यात्मसात् क्रियते । सोमोऽन्नम्—सोऽग्निना भक्ष्यते—आत्मसात् क्रियते, परं स्वरूपेण सोमो न नश्यति, अग्निनैवान्यतः पुनराप्यायते । एवमेव रयिः प्राणे प्रविश्य पुनः पुनरप्याय्यते । सेयं यज्ञप्रक्रिया अनयैव जगदुत्पद्यते, तिष्ठति चेति ।

[३] शुद्धाभ्यां रसवलाभ्यां यानि वाक्प्राणमनांसि उद्भूतानि, तत्समष्टिरव्ययपुरुषः । संसृष्टयोस्तु रसवलयोः पुनः संसर्गेण यानि वाक्प्राणमनांसि, तत्समष्टिरक्षरपुरुषः । स ईश्वर उच्यते । पुनः पुनः संसर्गेण ग्रन्थिप्रवृत्तौ सग्रन्थिकाभ्यां रसवलाभ्यां यानि वाक्-प्राणमनांसि, तत्समष्टिस्तु क्षरपुरुष इति । इदमेव विक्रमत्रयं प्रागुक्तम् ।

[४] त्रिष्वपि पुरुषेषु रसवलयोः स्वरूपसंवन्धः । शक्तीनां तु पुरुषैः संवन्धो वृत्तिरूप इति । यदा तु शक्तेरपि स्वरूपसंवन्धः, तदा वृत्तित्वसंवन्धेन शक्तिविशिष्टे अपरा शक्तिः समन्वेति इति । अनयैव प्रक्रियया अक्षरक्षरयोः प्रादुर्भाव उत्तरैः पद्यैराख्यातः ।

अथाक्षरस्यापि च येह शक्तिर्बलं तदन्वेति रसेऽक्षरस्य ।
ततः क्षरं यत्प्रभवेदनित्यं तदक्षरे नित्यमुपस्थितं स्यात् ॥३१४॥

[१]स्वानन्तरस्य त्ववरात्मनो यतः सृष्टौ कृतार्थापरशक्तिरिष्यते ।
तेनात्मभोग्यानुदयाद्धि नैतयोः संभाव्यते कर्म्मफलस्य भोक्तृता ॥३१५॥

क्षरस्य शक्त्या त्ववरः क्षरेतरो न कश्चिदात्मा पुनरत्र जायते ।
यज्जायते तत्क्षरमेव जायते तदस्य भोग्यं स भुनक्ति तत्सदा ॥३१६॥

तच्छक्तिभेदात् पुरुषस्त्रिधेष्यते क्षरोऽक्षरो वा स परो निरुच्यते ।
पूर्वस्य शक्त्याऽवरपूरुषो भवंस्तत्रैव तिष्ठत्यपि शक्ति[२]वत् सदा ॥३१७॥

[३]परस्य शक्तिस्थितमक्षरं स्यात् क्षरं तथैवाक्षरशक्तिसंस्थम् ।
क्षरस्य शक्त्या तु भवन्ति भोग्यान्यस्याक्षरे वा न परेऽस्ति भोगः ॥३१८॥

क्षराणि सर्वाणि तदक्षरे स्युस्तदक्षरं चापि परे निगूढम् ।
तेषां [४]ग्रहातिग्रहभावरूपः संसर्ग उक्तो न पृथक् क्वचित्स्युः ॥३१९॥

[५]पश्यन्ति लोके तु विपर्ययेण क्षरेऽक्षरं तत्र परं निगूढम् ।
तृणे क्षरे सत्यमिहाक्षरं यत् तत्रामृतं स्यात् परमन्तरन्तः ॥३२०॥

क्षरे[६] तु यो वाक् पुरुषोऽयमात्मा स त्रिः पुनर्विक्रमणं करोति ।
तेजस्तया पश्च तथान्नमित्थं तेनायमेको बहुधेह दृष्टः ॥३२१॥

---

[१] परस्य शक्तिरक्षरमुत्पाद्य कृतार्था भोग्यं वस्तु न जनयति, तथैवाक्षरस्य क्षरमुत्पाद्य कृतार्थेति । तत एवाव्ययाक्षरावभोक्तारौ, भोग्याभावात् । क्षरे तु शक्तिः न पुरुषान्तरं जनयति, अपि तु भोग्यमेवोत्पादयतीति, तद् भुञ्जानः क्षरो भोक्ता ।

[२] शक्तयोऽपि पुरुषेषु तिष्ठन्ति, पुरुषाश्चापि शक्त्युत्पादिताः उत्पादके पुरुष एवाधेयतया तिष्ठन्तीति ।

[३] पूर्वपद्योक्तमेव प्रपञ्चयति ।

[४] यत्रैकमपरत्राधीनं भवति, तत्रैव ग्रहातिग्रहभावसंबन्ध उच्यत इत्युक्तम् । त्रयोऽपि पुरुषाः पृथग् भूत्वा न कदापि तिष्ठन्तीति भावः ।

[५] एवमुत्पत्तिक्रमदृष्ट्या अव्ययः सर्वाधारः, तत्राहितोऽक्षरः, तत्र च क्षरः, तत्र भोग्यजातमिति क्रमः । लोकदृष्ट्या तु पूर्वं क्षर एव गृह्यते, तत्र पर्यालोचनया अक्षरानुप्रवेशो ज्ञायते, तत्रापि चाव्ययानुप्रवेश इति । यथा तृणं यः पश्यति, तस्य तृणस्योपरिभागः क्षररूप एव प्रथमं भासते, तत्र सत्तारूपेणाक्षराव्ययप्रतीतिः पश्चादिति ।

[६] अथ क्षरस्यापि त्रेधा विक्रमणमुच्यते । संमुग्धभूतावस्थारूपा वाक् क्षरः, स आत्मक्षरः, तेजोबलरूपेण च तस्य त्रीणि विक्रमणानि ।

[१]पुनस्तृतीयर्येऽपि च पर्य्ययेऽसौ पूर्वैः समेतोऽन्नमयोऽयमात्मा ।
त्रिविक्रमं विक्रमते ततः स्युर्भेदा जड़स्थावरचेतनानाम् ॥३२२॥

[२]एतावदेतज्जगदुच्यते तत् सर्वं क्रमेणेह विवेचयामः ।
पूर्वं परन्तं च ततोऽक्षरं तं ततः क्षरं तं च निरूपयामः ॥३२३॥

॥ इति पर विद्यायां भूमिकाधिकारः प्रथमः ॥

---

१ द्वितीये विक्रमणे यदन्नम्, तत्पुनस्त्रेधा विक्रमते, तेन जड़स्थावरचेतनशरीराणामुत्पत्तिः । केवलमन्नमेव न विक्रमते, अपि तु तत्रानुप्रविष्टं तेज आपश्च तेन सहैव विक्रमेते । एवं पूर्वत्रापि बोध्यम् ।

२ एतावदेव जगत्, तदुत्पत्तिः समासेनेह प्रथमे भूमिकाधिकारे व्याख्याता । एतस्या एव विस्तरोऽग्रे वक्ष्यत इत्यर्थः ।

॥ सोऽयं भूमिकाधिकारोऽत्र समाप्तः ॥

## (१७) [१]परधर्माधिकरणम्

आदौ परस्थानगतानि यानि धर्माणि वाक्प्राणमनांस्यमूनि ।
तानि प्रतिष्ठा विधृतिश्च तद्वज्ज्योतिस्तथेति क्रमतः प्रथन्ते ॥१॥

सा वाक्प्रतिष्ठाविधृतिस्तु तत्र प्राणो मनो ज्योतिरिति प्रक्लृप्त्या ।
[२]प्रतिष्ठितः कोऽपि रसोऽस्ति पूर्णो ज्योतिर्मयोऽसावणिमा च भूमा ॥२॥

## (१८) ज्योतिराख्याने मात्राविकाशाधिकरणम्

[३]स्थानस्थमेवातिविदूरसंस्थं योग्यं यदलैः मयूखैः स्पृशति प्रतीत्य ।
स्पृष्ट्वास्य रूपेण विवर्तते यत् तज्ज्योतिरुक्तं तदयं विकाशः ॥३॥

[४]ज्योतिस्त्रिधा स्यात् क्षरभूतमेकं स्यादक्षरं ज्ञानमिह द्वितीयम् ।
परं तृतीयं यदयं विकाशः क्षरेऽक्षरं तत्र परं निगूढम् ॥४॥

यतो [५]विभातीति मतिः प्रवर्तते तज्ज्योतिरुक्तं न विभाति तत् तमः ।
ज्ञानं हि तज्ज्योतिरिदं विवक्ष्यते यद्भौतिकं ज्योतिरिहास्ति तत्पृथक् ॥५॥
[६]ज्योतिर्न तत्रास्ति तमो यदन्तरे न ज्योतिषा वा विकलं क्वचित् तमः ।
ज्योतिर्घनेऽप्यस्ति तमोन्तरान्तरे ज्योतिस्तथैवास्ति तमो घनान्तरे ॥६॥

---

[१] अथ पूर्वोक्तानां वाक्प्राणमनसां जगति विस्तार आख्यायते। परस्थाने यानि वाक्प्राणमनांस्युक्तानि, तानि जगति प्रतिष्ठा, विधृतिः, ज्योतिरिति रूपत्रयेण विवृतानि विलोक्यन्त इत्यर्थः ।

[२] सर्वत्र जगति रस एव विभिन्नै रूपैर्भासते, स रसः प्रतिष्ठितः, प्रतिष्ठाविशिष्टः, पूर्ण इति विधृतः, ज्योतिर्मयः—ज्ञानप्रधानः—ज्ञायमान इत्यर्थः। सर्वं हि वस्तु प्रतिष्ठितम्, स्वस्वरूपे पूर्णं ज्ञायमानं चास्तीति तात्पर्यम् । अणिमा—लघुतमं वास्तु, भूमा—वृहत्तरं वास्तु—सर्वत्र त्रयमिदं प्रथत एवेति ।

[३] ज्योतिः पदेन ज्ञानमुक्तम्—तत्स्वरूपमाह—स्वस्थाने स्थितमेव ज्ञानं विदूरस्थमपि वस्तु स्पृशति, तद्वस्तुरूपेण च स्वयमपि विवृतं भवति, अयमेव विकाश उच्यते। तदिदं ज्योतीरूपम् । अयमेव विकाश इत्यप्युच्यते ।

[४] ज्योतिषः त्रैविध्यमाह। क्षरे पुरुषत्रये तदपि त्रिविधम् । क्षरे भूतरूप मान्यादि, अक्षरं ज्योतिर्ज्ञानम्, परं ज्योतिस्तु विकास इति ।

[५] भातीति बुद्धिर्यतः प्रवर्तते, तज्ज्योतिरिति। ज्ञानरूपं ज्योतिः। वाक्प्राणमनसां रसबलोभयात्मकत्वेन भानं रसभागः, अभानं तु बलभागः। बलमेव मृत्युरुच्यत इति पूर्वोक्तं न विस्मर्तव्यम् । भौतिकं ज्योतिस्तु प्रकाशरूपं प्रसिद्धमेव ।

[६] भौतिके ज्योतिषि प्रकाशस्तम्भश्च रसबलभागौ नित्य संबद्धौ। न क्वाप्यनयोः पृथग्भावः। प्रकाशेऽपि तमः संमिलितमस्ति, अत एव अल्पः प्रकाशः, महान् प्रकाश इति

यत् तारतम्यं तमसोऽस्ति तेन हि स्वल्पं महज्ज्योतिरिरिति प्रभिद्यते ।
तथैव तज्ज्योतिषि तारतम्यतः स्वल्पं महद्वेति विशिष्यते तमः ॥७॥

ज्ञानं हि नाज्ञान विना कृतं यथा ज्ञानेन चाज्ञानमिदं न हीयते ।
तथा प्रकाशो न विनाऽन्धकारतो न चान्धकारोऽस्ति विना प्रकाशतः ॥८॥

दिव्येऽपि तज्ज्योतिषि भौतिकेऽपि वा समानमित्थं तमसाऽनुविद्धता ।
अज्ञानतो ज्ञानमिहावृतं ततो जना विमुह्यन्ति तमोऽनुसारतः ॥९॥

[१]ज्योतिः क्षरं सत्त्वमधिश्रितं सदा तदल्पमल्पेऽथ महन्महत्यपि ।
तेनाल्पसत्त्वो भवतीह बालिशः सत्त्वाधिक ज्योतिषि दूरदर्शिता ॥१०॥

इति ज्योतिर्निरूपणम्

[२]ज्योतिविकाशस्त्रिविधः स इष्यते मात्रां च संस्थामपि दीप्तिमप्यनु ।
प्रत्येकमेते च पुनस्त्रिधा ततो ज्योतिः पदानीह नवैव चक्षते ॥११॥

[३]दिग्देशकालैरथ रूपभाव प्रसादनैरत्र यथा विकाशाः ।
प्रज्ञानचिद्भूतमयैस्तथान्ये त्रयोऽपि तानत्र निदर्शयामः ॥१२॥

[४]भूम्नो ह्यणिम्नः प्रतिविन्दुतो रसो विकाशते सर्वमुखः स्वभावतः ।
अन्तर्बहिश्चोत्तरदक्षिणे पुरः पृष्टेऽध उर्ध्वं परितः स तिष्ठति ॥१३॥

---

तारतम्यं प्रतीयते । महति प्रकाशेऽपि दीपान्तरं यद्यानीयते, तदा पुनर्महत्त्वं भवति, अभितो दीपेषु सत्स्वपि च तृणस्यापि छाया पतत्येव, छाया च प्रकाशावरणे तमो भागः, तेन तत्रापि तमोंऽशोऽस्त्येवेत्यनुमीयते । एवं तमसि घोरेऽपि प्रकाशांशोऽस्ति, अन्यथा तमसः प्रतीतिरेव न स्यात् तथैव ज्ञानमप्यज्ञानं विना भूतं नास्ति, अज्ञानेऽपि च तद्भासकं ज्ञानमस्त्येवेति चतुर्भिः पद्यैर्विवृतम् ।

[१] सत्त्वं दाढर्यम् 'हिम्मत' इति प्रसिद्धम्—तत्प्राणिषु क्षरज्योतिषो रूपमिति ।

[२] परं ज्योतिर्यद्विकाशरूपमुक्तम्—स विकाशः त्रिविधः, मात्राविकाशः, संस्थाविकाशः, दीप्तिविकाशश्चेति । तत्र मात्राविकाश एव पूर्वमष्टभिः पद्यैर्विवृतः । इदानीं तद्विस्ताराय प्रत्येकं त्रैविध्यमुच्यते । संभूय नवधा ज्योतिः ।

[३] मात्राविकाशो दिग्देशकालैस्त्रिधा, संस्थाविकाशो रूपभावप्रसादनैस्त्रिधा । दीप्तिविकासस्तु प्रज्ञान—चिद्—भूतमय इति त्रिधा—इत्थं नवधा विकासः । पूर्वंप्रदर्शितं ज्योतिः—सामान्यमप्यत्रैवान्तर्भाव्यम् ।

[४] मात्राविकासो विव्रियते । भूमा महान् वा पदार्थोऽस्तु-अणिमा लघुर्वा अस्तु । सर्वस्यापि प्रत्येकस्माद्बिन्दुतो रसो विकासमेति—प्रसरतीति यावत् । यथा पूर्वमृक्सामनिरूपणे उक्तम् ।

[१]अणोरणीयान् महतो महीयान् रसौ विकाशः प्रतिविन्दु नित्यः ।
यं बिन्दुमात्मानमुपैति पाप्माऽणुर्वा महांस्तत्र तथा विकाशः ॥१४॥

ज्योतिष्मतः कस्यचिदत्यणोरणो ज्योतिर्विकाशोऽणुरुदेति वात्यणु ।
रवेर्विकाशो महतो महानयं विकाशते तन्नु विकाशलक्षणम् ॥१५॥

[२]परप्रकाशः पुरुषोऽपि लब्ध्वा महानणुर्वा परतः प्रकाशम् ।
स्वल्पावकाशेऽथ महावकाशे [३]विकाशते सेह रसोपपत्तिः ॥१६॥

अथाप्रकाशे पुरुषेऽपि भानोः स्पृष्ट्वांशवो यज्जनयन्ति रूपम् ।
तत्राऽपि रूपस्य भवन् विकाशः सोऽनुग्रहस्तस्य रसस्य मूर्त्यौ ॥१७॥

सूर्य्यादि तेजः किरणस्य यत्राभावो भवेत्तत्र तमो विकाशः ।
सोऽप्येवमेवानुदिशं प्रवृत्तस्तदिष्यतेऽनुग्रहणं रसेन ॥१८॥

[४]जलोत्थवीचेरथ शब्दवीचेर्विकाशते मण्डलवत्तु रूपम् ।
बलस्य नाभेश्चरतो रसेऽस्मिंस्तदिष्यतेऽनुग्रहणं रसेन ॥१९॥

बीजाङ्कुरः सन्धिदलप्रसूनफलानि बीजं क्रमतो विकाशात् ।
सूक्ष्माद्बृहन्ति प्रभवन्ति रेतो विन्दुः क्रमादवृधं चतुर्थहस्तः ॥२०॥

[५]सर्वत्र भूमन्यणिमाय उक्तो यत्नाच्चयं नात्र निभालयन्ते ।
स एव सर्वत्र विकाशयोगाद् भूमा भवत्यत्र बलानुसारात् ॥२१॥

एकोऽपि बिन्दुर्न रसस्य तादृशः क्वचिद्भवेद्यत्र गतस्य पाप्मनः ।
गर्तिविकाशानुगता न संभवेत् ततः सभूमैव विकाश इष्यते ॥२२॥

---

[१] रसे अल्पत्वं महत्त्वं वेति मात्रा नास्ति । स तु सर्वतो व्याप्तः । पाप्म पदवाच्ये बले त्वस्ति मात्रा । यावन्मात्रं बलं यत्रोपैति, तत्र तावानेव रसविकासः प्रतीयते इति भावः । एतदेवोत्तरेण पद्येन विवृतम् ।

[२] त्रिविधाः पदार्थाः पूर्वं व्याख्याताः स्वयं ज्योतिषः सूर्याद्याः, परज्योतिषश्चन्द्राद्याः, रूपज्योतिषश्च पार्थिवाः । अज्योतिषो वाय्वाद्याः चतुर्थः । तेषु सर्वेष्वेव पुरुषपदवाच्येषु अल्पता महत्ता वा समन्वेतीति व्याख्यायते ।

[३] अल्पत्वं महत्त्वं वा बलकृतम्, विकासस्तु रसकृत इति भाव्यम् ।

[४] जले यदा वीचिरुत्पद्यते, सा मण्डलाकारैव भवति, एवं शब्देऽपि मण्डलाकारास्तरङ्गा उत्पद्यन्ते । सैषा मण्डलाकारता रसे चरतो बलस्य नाभेः केन्द्रादेवोत्पद्यते, सोऽप्ययं रसस्यैवानुग्रहः ।

[५] उक्तयोर्बीजरेतसोरुदाहरणयोर्भूमनि महति वृक्षे पुरुषे च येऽणिमारूपा बीजरेत आद्याः, त एव विकाशेन पुनर्महत्त्वं गच्छन्तीति बलकृतं सर्वं रसानुग्रहेण भाव्यम् । एतदेवाग्रेऽपि विवृतम् ।

अथ[१] ब्रुवे देशविकाशकार्यं यज्ञाच्च वेदाच्च मतो द्विधायम् ।
अवेक्षते यज्ञमिहार्थसत्ता वेदानुरोधात्तु तदर्थं भातिः ॥२३॥
[२]संबध्यतेऽस्मिन्नमृते स मृत्युः खण्डोऽतिखण्डोऽतिमहान् महान् वा ।
दभ्रेप्यदभ्रेऽप्युरुविस्तृते वा स्थितोऽवकाशे न ततोऽन्यतः स्यात् ॥२४॥
[३]अनावृतोऽप्येष विदूरतावशान्न दृश्यतेऽथाणुपृथुक्रमेण सः ।
दृष्टोऽणुतामेत्य पुनर्न दृश्यते यद् दृश्यते सोऽस्य विकाश इष्यते ॥२५॥
[४]संबध्यतेऽस्मिन्नमृते स मृत्युः खण्डोऽतिखण्डोतिमहान् महान् वा ।
खण्डेऽतिखण्डेऽतिचिरं चिरं वा स्थित्वा सकाले म्रियतेऽथ पश्चात् ॥२६॥
[५]नासीत् पुरस्तान्न पुनः परस्तान्मध्येऽपि मृत्युर्म्रियमाण आस्ते ।
तदस्ति नास्तीति विलक्षणत्वं मृत्युस्वभावोऽमृतगोऽमृतः सः ॥२७॥
नासीत् पुरस्तान्न पुनः परस्ताद् यावत्तु मध्येऽमृतगः स दृष्टः ।
प्रतिक्षणोच्छित्ति मतोऽपि सत्ता [६]सात्मन्विता सोऽस्य मतोविकाशः ॥२८॥

इति कालविकाशः

---

[१] अथ देशविकाशकार्यं—विकाशस्वरूपं ब्रुवे । अयं विकाशः यज्ञाद् वेदाच्च भवेदिति योजना । अस्ति च भाति चेति द्वे विकासस्वरूपे, तत्र अस्ति पदवाच्या सत्ता यज्ञमपेक्षते, ग्रहणं त्यागश्चेति यज्ञस्वरूपं प्राग् भूमिकायां विवृतम्, तेनैव सत्ता सिद्धचति, तदेव सत्तायाः स्वरूपमिति यावत् । अर्थस्य भातिः—भानं तु वेदानुरोधात् । ऋक्सामादिवेदस्वरूपं पूर्वं भूमिकाप्रकरणे विवृतम्, तैरेव तत्तद् वस्तुनो भानं भवतीति तत्रैव भाव्यम् । अस्ति, भाति—इति प्रसिद्धं भातिपदमत्र प्रातिपदिकत्वेनाभ्युपगम्य सुवन्तं 'भातिः' इति कृतं ग्रन्थकर्त्रा । अर्थस्य भातिः—अर्थभातिरिति ।

[२] अमृतपदवाच्यो रसस्तु विभुरेव, अल्पं महद्वा वस्तु यद् दृश्यते तदिदमल्पत्वमहत्त्वादिकं मृत्युपदवाच्येन बलेनैव संपादितम् । मृत्युः—बलम्—अमृतेन—रसेन संसृज्यते खण्डः, अतिखण्डः इत्यादीनि मृत्योरेव विशेषणानि । अतो मृत्युरेव दभ्रे—अल्पे, अदभ्रे—महति, अति विस्तृते वा अवकाशे स्थितः । ततोऽन्यत्र तु नास्तीति बलस्य देशपरिच्छेदो दर्शितः ।

[३] एषः कश्चित्पदार्थः दूरे महान्, लघुर्वेति क्रमेण दृश्यमानोऽतिदूरे न दृश्यते । यावत्तु दृश्यते, तावानस्य विकासः—इति साम्प्रकरणमनुसन्धेयम् ।

[४] रसेन संबद्धस्य मृत्योर्यथादेशपरिच्छेदः, तथा कालपरिच्छेदोऽप्यस्तीत्याह । कालस्य खण्डे दिनमासादौ, अतिखण्डे घटीक्षणादौ, चिरम् अतिचिरं वा स्थित्वा स्वकालैर्म्रियत एवेति कालपरिच्छेदः ।

[५] मृत्युः स्वयं मरणधर्मा—स्वभावतो विनाशशीलः । अत एव अस्ति नास्ति स्वभावः स उच्यते । अमृते स्थितस्तु स किञ्चित् कालं बहुकालं वा अमृतो भवतीत्यमृतस्यैवायमनुग्रह—इति भावः एतदेवाग्रिमेण पद्येनापि विवृतम् ।

[६] आत्मा रसः, तेनायं मृत्युरात्मन्वी भूत्वा सद्रूपेण दृश्यते । स एवास्य विकाशो ज्ञेयः । सोऽयं कालविकाश उक्तः ।

[१]दिग्भ्यश्च देशेन च कालतश्च वा न चाऽमृतस्य व्यभिचार इष्यते ।
तत्तद्विशेषार्थपरिग्रहात्त्वसौ मात्राविकाशः समुदीरितस्त्रिधा ॥२९॥

इति त्रिविधो मात्राविकाशः

## (१६) संस्थाविकाशाधिकरणम्

विकासरूपं[२] यदिहास्ति सत्यं ज्योतिस्तदिष्टं त्रिविधं प्रसर्गे ।
माया दशा प्रत्ययभेदतः स्यादेकैकमेतत् त्रिविधं पुनश्च ॥३०॥

स नाम रूपं त्वथ कर्ममायाः प्रसादभावस्थितयो दशाः स्युः ।
जात्याकृतिर्व्यक्तिकृता प्रतीतिर्न वापि सत्याति विवेचयामः ॥३१॥

रसः स एकः स विशुद्ध आत्मा तद् ब्रह्म तस्मिन् बलमभ्युदेति ।
रसे[३] स्वरूपेण बलप्रवेशात् परः स आत्मापुरुषः स भूमा ॥३२॥

परे स्वरूपेण बलप्रवेशात् स्यादक्षरोऽन्यः पुरुषः स आत्मा ।
अथाक्षरेऽप्यन्यबलप्रवेशात् क्षरोऽन्य आत्मा पुरुषोजगत्तत् ॥३३॥

क्षरे स्वरूपेण बलप्रवेशात् पुनः क्षरः स्याच्च पुनः क्षरः स्यात् ।
एकत्र तेषां पुनरन्वितानां बलैश्च संसर्गवशात् पशुः स्यात् ॥३४॥

तेषां[४] बलानां मुहुरन्वितानां कुतस्तदात्मन्ययमागमोऽभूत् ।
आत्मैव मन्येऽविरतं बलानि प्रोद्भावयत्याहरति स्वभावात् ॥३५॥

---

[१] अमृतं दिग्देशकालपरिच्छेदशून्यम्, मृत्युसंबन्धेन तत्तदर्थरूपतां गतस्य तु दिग्देश-कालव्याप्तिरूपोऽयं विकाशस्त्रिधा व्याख्यात इत्युपसंहारे पुनः स्मारितम् ।

[२] इदानीं संस्थाविकास उच्यते, स एव सत्यविकासपदेनाप्याख्यायते । सोऽपि त्रिविधः—मायाविकासः, दशाविकासः, प्रत्ययविकासश्च । ते त्रयोऽपि प्रत्येकं त्रिविधाः—नाम, रूपम्, कर्म चेति त्रयो मायाविकासाः । प्रसादः, भावः, स्थितिः—इति दशाविकासाः, जातिः, आकृतिः, व्यक्तिः—इति प्रत्ययविकासाः ।

[३] बलमेव मायाशब्देनोच्यते, तस्य कारणमग्रे वक्ष्यति । बलकृता विकासाः पराक्षर-क्षररूपाः पुरुषा मायाविकासः, एषु नाम रूपं कर्म च परिवर्तितं भवति । बलस्यात्र स्वरूप-संबन्धः । क्षरे पुनर्बलप्रवेशात्तु क्षरस्यैव विकासः, न तु नामरूपपरिवर्तनम् । त्रय एते पुरुषा समन्विता एव तिष्ठन्ति, तेषु संसर्गाख्यसंबन्धेन बलप्रवेशे पुरुषभोग्यः पशुर्भवतीति पद्यत्रयेणोक्तम् । सर्वमेतद् व्याख्यातपूर्वम् ।

[४] बलानि मायाशब्देन कुत उच्यन्ते—इत्यत्र प्रतिपादितम् । यस्योद्भवो न ज्ञायते, उपपत्तिर्यत्र न भवति, सैव मायापदेन लोके व्यवह्रियते । एषामपि बलानामुद्भवस्योपपत्ति-र्नास्तीति मायापदेनैतान्युच्यन्ते । स्पष्टार्थाः सर्वेऽपि श्लोकाः । मितिकरणं मायेति पूर्वोक्त-मपि न विस्मर्तव्यम् ।

[१]रसे विशुद्धे तु बलं विशुद्धं प्रोद्भूय तस्मिन् मुहुरन्वितं सत् ।
विलीयते नित्यमुवेति चास्मिन् न ह्रीयते तेन परो बलेन ॥३६॥

[२]अथोद्वियात्तत्र परे बलं यत् तदन्यजातीय बलं निरुक्तम् ।
आत्मैव तस्य प्रभवः प्रतिष्ठा काले पुनस्तत्र विलीयते तत् ॥३७॥

तथाऽक्षरे वाथ तथा क्षरे वा तथा पशौ वा यदयं बलस्य ।
स्व स्वात्मनः स्यादुदयः स तस्मान्मतो रसादेव स तद्विकाशः ॥३८॥

रसेऽवतारेऽथ बलेऽवतारे भूयोऽपि भूयोऽपि बलोदयेन ।
रूपाणि कर्माणि तथैव तेषां नामानि भिन्नानि पृथग् भवन्ति ॥३९॥

ज्योतिर्निबद्धं बलमस्ति रूपं प्राणेन संबद्धबलं तु कर्म ।
[३]स्यान्नाम संबद्धबलं तु वाचा माया बलानि त्रिविधानि तानि ॥४०॥

[४]अदृष्टपूर्वाण्युदयं लभन्ते तत्रैव भूयो विलयं प्रयान्ति ।
असन्ति तस्मादनृतानि तानि भवन्ति सत्यानि सति स्थितत्वात् ॥४१॥

यतो[५]बलानामुदयेऽपि भूयो भूयोऽपि नात्मा स रसः क्षिणोति ।
न ज्ञायते तानि कथं बभूवुर्मायाविकासं तत एतमाहुः ॥४२॥

[६]अथो वदन्तीह निधिः परोऽयं तस्मादुपादाय रसान् बलानि ।
स शक्तिरात्मास्ति परोऽक्षरो वा क्षरोऽथ शक्याऽत्र भवेद्विकारः ॥४३॥

---

१ बलं क्षणिकं संख्याकृतमानन्त्यं दधातीति प्रागुक्तमेव स्मार्यते, एकैकं बलं क्षणे क्षणे विनश्यति, परमन्यदन्यत् प्रादुर्भवतीति बलविरहितो रसः कदापि न लभ्यते । शुद्धयो रस-बलयोः संबन्धात् परः पुरुषोऽव्ययो नाम ।

२ बलविशिष्टे रसे अव्ययसंज्ञे अन्यद् बलमुदेति, तेनाक्षरपुरुषप्रादुर्भावः । अस्य पुनरुत्पन्नस्य बलस्यापि प्रभवः प्रतिष्ठा च शुद्धो रस एव । एवमग्रेऽपि इयमेव प्रक्रिया । सर्वत्रात्मपदेन रस एवोच्यते । रसे स्थितं बलमपि धारावाहिकं बलान्तराधारतां गच्छति, तेनापि रूपान्तरमुदेतीत्यग्रिमे पद्ये स्पष्टीकृतम् ।

३ वाचा संबद्धबलं तु नामेति योजना । त्रिविधान्यपि बलानि मायेत्येवोच्यन्ते ।

४ अनृतानि—अप्रतिष्ठान्यपि बलानि अमृते प्रतिष्ठितानीत्यमृतरूपाण्येव भवन्ति । सति स्थितत्वाच्च सत्यानि ।

५ उपादानकारणं कार्यमुत्पाद्य स्वरूपेण क्षीयत इति सर्वत्र बीजाङ्कुरादौ दृष्टम् । रसस्तु बलान्युत्पाद्यापि न क्षीयते । तत एव विलक्षणत्वाद्बलानि मायापदेनोच्यन्ते ।

६ क्वचित्तु परस्याव्ययस्य पुरुषत्वं क्षराक्षरयोस्तु शक्तित्वमाख्यायते भगवद्गीतादिषु । तत्राक्षरक्षरे अपि निधिं भूतात्परादेव रसमुपाददते । शक्तिभूते अक्षरक्षरे एव विकारहेतू उच्येते इति ।

[१]अयापि यत्तत्र बलप्रसर्गे रूपं कुतश्चित्समुदेत्यपूर्वम् ।
क्व चापि तत्प्रैति न तद्विदुर्यन्मायाविकाशं तत एतमाहुः ॥४४॥

इति मायाविकाशः

[२]संसृज्यते चेदमृते स मृत्युः सर्गः स भावोदयनोऽन्य मार्गः ।
विमुच्यते चेदमृतात्स मृत्युर्मोक्षः प्रसादोदयनोऽन्य मार्गः ॥४५॥

अनारतोत्पत्तिविनाशधर्मा निर्धर्मकेस्मिन्नमृते स मृत्युः ।
अज्ञातमूलः[३] प्रभवत्यकस्मादुद्भूय चोद्भूय विनाशमेति ॥४६॥

[४]ओं तत्र कृत्वा यदि कर्म संचरेद् ओं तत्र कृत्वैव निवर्ततेऽन्ततः ।
उद्गीथमेतस्य तु सत्त्वचेतनं प्रवर्तते चक्रमिदं निरन्तरम् ॥४७॥

[५]उद्भूय चाकर्मणि कर्म सृज्यते न तत्क्षणादेव निवर्तते पुनः ।
विवर्तते तत् क्रमतो घनीभवत् पुनर्विसर्गाद्ध्रसदेव नश्यति ॥४८॥

[६]ओंकारतो ग्रन्थिषु वर्धनं क्रमादुद्गीथपर्यन्तमिहोत्तरोत्तरम् ।
ग्रन्थौ पुनर्ग्रन्थिपरम्परावशादणोः क्रमात् स्थूलतरत्वसम्भवः ॥४९॥

[७]अथो विसर्गात् प्रति संचरे भवेदुद्गीथतो ग्रन्थिनिवर्तनं पुनः ।
उद्ग्रन्थितो ग्रन्थिविमोकतोऽन्ततो नैष्कर्म्यमायात्यमृतं प्रसीदति ॥५०॥

---

[१] एवं बलस्योद्भवः कथंचित्प्रतिपादितः, परं बलप्रयोगे यदपूर्वं रूपमुदेति विलीयते च तस्योद्भवस्तु न ज्ञायते—इति मायाविकाश एव मन्तव्य इति ।

[२] अथ भावप्रसादौ विवृणोति अमृते मृत्योः संसर्ग एव भावोदयः । मृत्योरमृतात् पृथग्भवनमेवामृतस्य प्रसाद इति ।

[३] न ज्ञातं मूलं यस्य तादृशः ।

[४] छान्दोग्ये उद्गीथादेव सृष्टिः श्राव्यते । उद्गीथः प्रणवश्चोङ्कार एव । तत्र प्रसिद्धे नित्ये रसे ओं कृत्वा रसमेवाश्रित्योपक्रमरूपेण कर्म—बलं प्रवर्तते, अन्ततश्च ओं कृत्वा तमेव रसमाश्रित्य निवर्तते—तत्रैव विलीयते । अस्य बलस्योद्गीथम्—उदयनं सत्त्वचेतनमेव । इदं प्रवृत्तिनिवृत्तिचक्रमनवरतं प्रवर्तते इत्यर्थः ।

[५] यत्र तु बलं तत् क्षणादेव न निवर्तते—अर्थाद् अमृते संसृष्टं धारावाह्रिकं भवति, तत्र बलान्तरसंसर्गे क्रमेण घनीभावो जायते, पुनश्च विपरीतबलान्तरसंयोगे, स्वभावादेव वा क्रमेण ह्रसद् विनाशमेति । घनीभावे च रूपान्तरप्रतीतिर्विवर्तः, स्वरूपाप्रच्युतावपि रूपान्तरप्रतीतिर्विवर्त इत्युक्तं प्राक् ।

[६] ओम्—इत्युपक्रम उक्तः । उपक्रमादेव क्रमेण बलान्तरसंबन्धे बले बलग्रन्थिर्भवति । यथा गाने स्वरवितनने वर्णानां स्थूलतेव प्रतीयते—गीयमानः प्रणव एवोद्गीथमुच्यते । ततश्चोद्गीथपर्यन्तं ग्रन्थिपरम्परा बोध्या । एवमेव सर्वत्र बलग्रन्थिपरम्परायामणोः स्थूलता ध्येया ।

[७] विसर्गपरम्परायान्तु क्रमेण ग्रन्थिविमोके पुनरुद्गीथस्य प्रणवपर्यन्तं सूक्ष्मतेति भावः । एवं ग्रन्थिविमोक एवामृतस्य प्रसाद उच्यते ।

[१]कामात्पुरस्त्वा वरणं हि भुक्तये ततस्तदुच्छेदविधानभुक्तये ।
क्रमो द्विधाप्यत्र रसे प्रवर्तते तत्सर्गमोक्षाख्य विकाशनद्वयम् ॥५१॥

पूर्वं विसर्गः परतो विमोक्षः पुनर्विसर्गः पुनरेव मोक्षः ।
अनादि चानन्तमिदं हि चक्रं व्याख्यातमन्तर्यदि नान्तरायः ॥५२॥

नैसर्गिकं सर्गविमोक्षचक्रं चक्रेऽणुचक्रं पुनरत्र चक्रम् ।
[२]अथेच्छतस्तु प्रतिमार्गमस्य व्यतिक्रमः संभवति क्रमस्य ॥५३॥

[३]यावन्निवर्तेत न कर्मपादयोऽश्वत्थाभिधो नित्यनवप्ररोहणः ।
तावन्मनुष्यो न कदापि मुच्यते निर्मूल तच्छेदनतोऽमृतोदयः ॥५४॥

इति भावविकाशप्रसादविकाशौ

[४]ओंकारतस्त्वेव यथा विवर्तः क्रमेण जातः स इहोच्यतेऽतः ।
तस्योत्क्रमादेव पुनर्विवर्तः परो भवेत् स स्वयमूहनीयः ॥५५॥

संबध्यते चेदमृते स मृत्युस्ततोऽक्षरं स्यात् त्रिविधं[५] क्रमेण ।
ततः क्षराणि प्रभवन्ति नाना विधानि भोग्यानि[६] सभोक्तृकाणि ॥५६॥

यदा[७]ऽमृते मृत्युविशेषबन्धो हृद्ग्रन्थियुक्तः क्रमते निसर्गात् ।
तदाक्षरादेव सतो भवन्ति ज्ञा प्राणभूतानि पुनः क्षराणि ॥५७॥

यदा तु कर्म क्रमते प्रकर्षात् प्रज्ञा तदा प्राणतयोदिता स्यात् ।
ग्रन्थौ पुनर्ग्रन्थिपरम्परायां प्राणोऽपि भूतत्वमुपैति पश्चात् ॥५८॥

आसीद्यदव्यक्तमतीव सौक्ष्म्याद् व्यक्तं पुनः स्थूलतरं भवेत्तत् ।
क्रमेण संबन्धविलक्षणत्वात् तत्तारतम्याच्च विसर्गभेदः ॥५९॥

---

[१] पूर्वस्मात् क्रमाद् ग्रन्थिपरम्परातो भवेत् संसारः, ग्रन्थिविमोकपरम्परातस्तु मुक्तिः । द्वयमपि रसे एवेति रसस्यैव विकासद्वयम् ।

[२] यदा मनुष्यो मोक्षमिच्छति, तदा तत्प्रयत्नाच्चक्रे विपर्ययो भवतीति ।

[३] अयमेव कर्माश्वत्थो भगवद्गीतायामुक्तः । अस्योन्मूलनमेव पुरुषार्थः ।

[४] प्रथमाद् विवर्ताद् बलप्रयोगेण पुनर्विवर्ता जायन्ते—इत्येवं स्थूलात् स्थूलतरं जगदुद्भवति—इति स्वयं विचार्यमित्यर्थः ।

[५] यद्यप्यक्षरस्य पञ्चकलाः प्रागुक्ताः, तथाप्यत्र हृद्या एव तिस्रः कला गृहीताः, पृष्ठ्ये तु द्वे नात्र विवक्षिते । ओङ्कारप्रसङ्गात्, तत्र हि अ—उ—म—इति त्रयाणामेवाक्षराणां सद्भावात् । इमे एवाक्षरकालानां प्रतिनिधयो भाव्याः ।

[६] क्षरे पुरुषे भोक्तृभोग्यविभाग इत्युक्तं प्राक् ।

[७] क्षरे दृढग्रन्थिवशात् त्रिरूपता जायते-तानि रूपाणि प्रज्ञा-प्राण-भूत नामभिरुच्यन्ते । एते सर्वे क्षरस्यैव भेदाः । तस्यैव रूपाणीति यावत् । बलप्रकर्षाकृते रूपान्तराणि । एतदेवाग्रे स्पष्टीकृतम् बहुभिः स्पष्टाक्षरैः पद्यैः ।

प्रज्ञैव तत्सत्यमभूदिहादौ सूक्ष्माच्च तत्सूक्ष्मतरं तदासीत् ।
क्रमेण तु स्थूलतरत्वयोगादन्ते पुनः सा पृथिवीत्वमेति ॥६०॥

[१]भूरम्भसा तत्किल तेजसा तद्वातेन वाचैव तु सा बलेन ।
तत्प्रज्ञया चावृतमेतदेवं सप्ताङ्गमेकैकमिदं प्रतीयात् ॥६१॥

एवं विसर्गाक्रमसंचरोऽयं पृथ्वीपरा तत्र गतिर्निरुक्ता ।
महानयं कर्मजयोऽवधेयो यद् ब्रह्म पृथ्वीत्वमुपेत्य शेते ॥६२॥

संभाव्यतेऽतः प्रतिसंचरेऽपि प्रज्ञात्वमायास्यति सैव पृथ्वी ।
क्रमेण तद्ग्रन्थिविमोकयोगादन्ते पुनर्ब्रह्मजयो ध्रुवं स्यात् ॥६३॥

भावोदयो नाम य एष संचरो मतो विकाशः किल तत्र कर्मणः ।
उपक्रमात् तत्क्रमतो महानसावभूद्विकाशः स पुनर्भविष्यति ॥६४॥

मुमुक्षु तत्कर्मविशेषतः पुनर्ग्रन्थिप्रमोके प्रतिसंचरो भवेत् ।
भूतात्मनो भौतिककर्मणः क्षये क्रमात्स नैष्कर्म्यगतः प्रसीदति ॥६५॥

[२]भूरम्बुतेजस्तदिदं तु वायुः स वाक् च सा प्राणतया मनः सः ।
मनो रसः स्यादिति कर्मनाशादयं प्रसादस्य मतो विकाशः ॥६६॥

[३]अहं त्वहः स्यां क्रमशस्तवों स्यादिति क्रमेणैव शरीरनिष्ठः ।
गत्वापरे तेजसि संप्रसादोऽमृतोऽभयः स्यात्समतो विकाशः ॥६७॥

इति भावप्रसादक्रमोदाहरणम्

---

[१] कार्यं कारणेनावृतं भवति-कारणाश्रितमिति यावत् । कारणं च कार्यमुत्पादयत् स्वरूपेणापि तिष्ठति । तत्कारणस्वरूपं कार्यं परित आवृणोति । अनया रीत्या पृथिवी अद्भिः, आपस्तेजसा, तेजो वायुना, वायुः वाचा, शब्द घनेन-आकाशेन, आकाशो बलेन–प्राणेन, प्राणश्च प्रज्ञया आवृत इति सप्तावरणानि पुराणादिष्वाख्यायन्ते । अयं कर्मणो जयः, कर्मप्राधान्यम् । अग्रे प्रति संचर उक्तः ।

[२] अथ कर्मनिवृत्तौ प्रसाद उच्यते क्रमेण । पृथिवीग्रन्थिनिवृत्तौ जलं भवति, तद् अम्बु तेजो भवति, एवं क्रमेण रसपर्यन्तं प्रसादो भवति। सोऽयं भावप्रसादोऽपि रसविकास एवेति ।

[३] अयमत्राशयः— अं, अः इति स्थितिद्वयम् । अत्र द्वयेऽप्यकारः सर्ववर्णमूलभूतो ब्रह्मणः सर्वजगन्मूलस्य प्रतिनिधिः । तत्सहचरितो विन्दुर्मायायाः सूक्ष्मावस्थाप्रतिनिधिरिति स्फुटं व्याख्यातमागमेषु । अः—इत्यत्र विसर्गस्तु स्थूलरूपा जगदवस्था । इयं स्थूलावस्था सूक्षावस्था च मतभेदमात्रं न तु वस्तुतो भिद्यत इति द्योतयितुं द्वयमपि संयोज्यते । तत्रास्माकं जगद्गतानां प्राणिनां प्रथमं जगति दृष्टिः, ततस्तु सूक्ष्मावस्थायामिति अः—इति विसर्गान्तं प्रथमं प्रयुज्यते । विसर्गो नाम सृष्टयवस्था, लेखनेऽप्यत्र विन्दोर्द्वित्वं नाम घनीभावः । ततश्च योगे अः+अम् इति स्थिते विसर्गः स्थूलरूप एव यदि रक्ष्यते, तदा तस्य हकाररूपेणोच्चारणमिति अमा योगे 'अहम्' इति भवति । यदि तु स्थूलता विलाप्यते, तदा अकारे परे तदोकाररूपतां गच्छतीति स्पष्टं व्याकरणप्रक्रियाविदाम् । उक्तं च पाणिनिशिक्षायाम्—

[१]आपः पृथिव्यां रसरूपतः स्थिता धूमात्मनापः पृथिवीत उत्थिताः ।
श्रद्धान्तरिक्षे दिवि याति सोमतां पर्जन्यमागत्य च याति वृष्टिताम् ॥६८॥

वृष्टिर्भवत्यन्नमिहोर्वरान्तरे तत् पुंसि रेतः स पुमान् वधूदरे ।
शिशुर्युवा स स्थविरो वियद्गतः क्षितिं गतोऽप्येति रसात्मनान्ततः ॥६९॥

रसः पृथिव्युत्थित उद्भिदाङ्कुरः स्कन्धः प्रशाखा विटपो दलोच्चयः ।
पुष्पोद्गमः श्रीविगमः फलोदयः शोषोऽतिजीर्णः क्षितिमेत्यसौ रसः ॥७०॥

स यत्र पश्यामि यदेव किञ्चित् प्रदृश्यते तत्र विकाश एषः ।
न चेद्विकाशोऽत्र भवेत्तदानीं सतोऽपि भूम्नो न रसाज्जगत् स्यात् ॥७१॥

भावोदये वाप्यमृतोदये वा यदित्थमन्तः स्थितयो विभिन्नाः ।
तास्ता अवस्थाः प्रथितास्तदित्थं दशाविकाशः कथितस्त्रिधाऽयम् ॥७२॥

---

ओभावश्च विवृतिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गातिरष्टविधोष्मणः ।

ऊष्मा नाम वर्णोत्पादक वायुगतो धर्मः, तस्यैवाभिनयो हकारेण जायते, स चाष्टभीरूपैरुपलभ्यत इति व्याकरणप्रक्रियाविदां स्पष्टमेव । अनेनोष्मणैव बहुधा शब्दानां परिवर्तनं भवति, अयमेव च वर्णानामपि सृष्टिकृदिति भारतीयं भाषाविज्ञानम् । आस्तामप्रकृतमिदम्, एवम् 'अ+अम्' इत्यस्य 'अहम्' इति 'ओम्' इति चोच्चारणद्वयं जायते । अम्–इत्यत्र योऽयमकारोपरि बिन्दुः, तस्यापि मकाररूपेण नकाररूपेण चोभयथाप्यभिनयो भवतीति नकाररूपेणाभिनये तदेव 'अहन्' इति संपद्यते । 'अहन्' शब्दोऽयं जगत् प्रतिनिधिभूतस्य सूर्यस्य बोधकः, तत्संबन्धादेव दिवसे प्रकाशमये प्रयुज्यते । इयञ्चाहः शब्दो स्थूल जगद्—बोधकः । तदित्थम् 'ओम्' 'अहन्' 'अहम्' इति त्रिविधमेकस्यैवोच्चारणम् । यत्र जगत् प्रलीनावस्थम्, तत् सूक्ष्मावस्थमायाविशिष्टं ब्रह्म 'ओम्' इत्युच्यते । स्थूलजगद्विशिष्टम्–अहन् शब्देन 'अहः'–इति प्रथमा विभक्त्यन्तेन व्यवह्रियते । तदेव चाध्यात्मम्–स्थूलशरीरविशिष्टम्–'अहम्' इत्युच्यते । तानीमानि–'ओम्, अहः, अहम्' इत्येकरूपाण्येव, अवस्थाभेदमात्रमत्र । अहमिति शरीरनिष्ठः परिछिन्नो जीवो यदा परिच्छेदाद्विमुच्यते—तदा अहः इति सर्वजगन्मयो भवति, यदा च स्थूलावस्थाया अपि विमुच्यते–तदा ओम्–इति परब्रह्मरूपं भवति । एवं परं तेजसि विलीनो जीवोऽयं संप्रसादः, अमृतः, अभयो भवति । सोऽयं परमो विकास इति ।

१ अथ जगच्चक्रस्य कानिचिदुदाहरणानि सौकर्येण बोधायोपादीयन्ते । तत्र प्रथमं जलमेवोदाह्रियते । पृथिव्यां रसरूपेण सूक्ष्मावस्थया स्थिता आपो वह्निसंयोगे धूमरूपतामाप्योपरि गच्छन्ति, अन्तरिक्षगतास्ता आपः श्रद्धाशब्देन व्यवह्रियन्ते छान्दोग्यादिषूपनिषत्सु । दिवि च गतास्ता एव सोमरूपा भवन्ति । ता एव पर्जन्यतामाप्य वृष्टिरूपेण पुनः पृथिव्यामागच्छन्ति । वृष्टेरन्नम्, अन्नाद् रेतः पुंसि, स्त्रिया गर्भाशये निषिक्तं तदेव शिशुरूपं भवति, शिशुश्च क्रमेण प्रवृद्धोऽनन्तरं प्रक्षीणश्च मृतः पृथिव्यामेव प्रलीय रसरूपतामेव गच्छतीति चक्रस्यैकमुदाहरणम् । अग्रे रसस्य बीजवृक्षादिरूपेण चक्रमुक्तम् ।

[१]भावोदये सा पृथिवी ययेयमयोऽश्मफेनो हिरण्यभेदात् ।
नाना विधास्तत्र तदश्मभेदाः पुनर्विभिन्ना इति ता अवस्थाः ॥७३॥

द्विधा विकाशः पुनरेष दृश्यते कर्मप्रवृत्तेरनु तन्निवृत्तितः ।
रसो विदूरे भवति क्रमाधिका वृत्तेः प्रवृत्तौ स तदन्यथाऽन्यथा ॥७४॥

स जायते कर्म विकाश आदौ ततः पुनर्ब्रह्म विकाश एति ।
प्रवृत्तिमार्गः स चतुष्पदः स्याच्चतुष्पदः सोऽपि निवृत्तिमार्गः ॥७५॥

हिंकार[२] एव प्रथमं द्वितीयः प्रस्ताव आदिस्तु पदं तृतीयम् ।
उक्यात् प्रवृत्तस्य परागतिः स्यादुद्गीथ उक्ता परतो निवृत्तिः ॥७६॥

पूर्वं प्रतीहार उपद्रवोऽन्यत्पदं तृतीयं निधनं ततोऽन्ते ।
परायणोऽप्येति परागतिः सा यदुक्थमासीत् प्रभवः प्रतिष्ठा ॥७७॥

[३]स्थितेर्विकासः प्रभवत्यवस्थया बलस्यभावोदयने विकासः ।
रसप्रसादोदयतो विकासोऽमृतस्य सोऽन्यस्त्रिविधो विकासः ॥७८॥

इति विकाशद्वयपरिभाषा

## (२०) दीप्तिविकाशाधिकरणम्

[४]संस्याविकाशस्त्रिविधोऽयमुक्तस्त्रिधा प्रकाशोऽथ परो विकाशः ।
यद्भौतिकं ज्योतिरिदं ततोऽन्यत् प्रज्ञानमन्यन्निखिलावभासम् ॥७९॥

वि[५]द्युच्च धिष्ण्यानि च सूर्यचन्द्राम्ब्वग्निश्च दिव्यौषधयो हिरण्यम् ।
ज्योतिर्षी सप्तैव तु भौतिकानि प्रज्ञा तु गृह्णाति हि तैर्गृहीतम् ॥८०॥

---

[१] अद्भ्यः पृथिव्या उत्पत्तौ—आपः, फेनः, मृत्स्ना, सिकता, अश्मा, अयो, हिरण्यम्—इत्यष्टौ अवस्थाः शतपथब्राह्मण उक्ताः, ता एवात्र काश्चिदुपन्यस्ताः, क्रमस्तु न विवक्षितः । एवं विकासे पुनर्विकासो भवति—तेन अश्माद्याः प्रयेकं बहुविधा भवन्तीति । स्पष्टार्थान्यन्यानि पद्यानि ।

[२] ये पूर्वत्र पद्ये प्रवृत्तिमार्गस्य निवृत्तिमार्गस्य च प्रत्येकं चत्वारः पादा उक्ताः, त एव छान्दोग्योपनिषदि (२ प्रपा० २–८ खण्डेषु) सप्तविधस्य साम्न उपासने हिंकारादि शब्दैर्विवृता इति संकेत्यते । प्रथमः पादो हिङ्कार उच्यते, द्वितीयः प्रस्तावः, तृतीय आदिः । एतत्पर्यन्तं प्रवृत्तिः, परतो निवृत्तिस्तु उद्गीथः स चतुर्थः । निवृत्तौ उद्गीथः, प्रतीहारः, उपद्रवः—इति त्रीणि पदानि । परतस्तु निधनम् । एतत्तु सर्वं छान्दोग्योपनिषदोऽध्ययनेनैव स्पष्टी भवति, इह संकेतमात्रम् ।

[३] एतत्पद्योक्तेन प्रकारेण विकासस्य त्रैविध्यं युज्यत इति भावः ।

[४] अथ दीप्तिविकास उच्यते, सोऽपि त्रिविधः—भौतिकं ज्योतिः, प्रज्ञाज्योतिः, रसज्योतिश्च । रसज्योतिरिह निखिलावभासपदेनोक्तम् ।

[५] भूतज्योति सप्तविधं व्याख्यायते—धिष्णयानि आकाशे प्रलीयमानानि समये समये ज्योतींषि, यानि जनाः तारास्त्रुटिता इति वदन्ति । अम्बुनि अग्निः अम्ब्वग्निः, बडवानलः,

[१]सूर्याग्निचन्द्रावथ वागथाऽऽत्मा यस्यान्नमस्ति प्रथते तदन्यत् ।
विज्ञानमाद्यं सदसद्विकाशस्तज्ज्योतिषां ज्योतिरिति प्रपद्ये ॥८१॥
न तत्र सूर्यो न च चन्द्रतारं न विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तं त्वनुभाति सर्वं तस्यैव भासा[२] निखिलं विभाति ॥८२॥
[३]वाग्घ्राणचक्षुःश्रवणत्वचां तु यश्चित्तस्य योगेन विशेष इष्यते ।
प्रज्ञासु मृत्युः स मतोऽस्य यावता तेष्वैकरूप्यं स विकस्वरो रसः ॥८३॥
[४]तत्राऽमृतं मृत्युयुतं विशेषवद्रूपं समाधाय पृथक् पृथक् पुनः ।
तं तं प्रकाश्यं विषयं प्रकाशयत् पुनस्तदन्येन युनक्ति मृत्युना ॥८४॥
[५]सवषु चैतेष्वमृतस्य मृत्योरस्ति ग्रहातिग्रहरूपबन्धः ।
न पाप्मना तेन विना विकाशः प्रवर्तते नापि विनाऽमृतेन ॥८५॥

---

ओषधीषु यः प्रकाशो दृश्यते हिमालयादिषु स षष्ठः । हिरण्यम्–सुवर्णमपि तेजोमयमिति ज्योतिःषु परिगणितम् । एतैः परिगृहीतम्—संयुक्तमेव वस्तु प्रज्ञा गृह्णाति ।

[१] बृहदारण्यकोपनिषदि षष्ठाध्यायस्य तृतीये ब्राह्मणे ज्योतिर्ब्राह्मणपदेन प्रसिद्धे, अस्ति जनकयाज्ञवल्क्यसंवादः । तत्र 'किं ज्योतिरयं पुरुषः' इति जनकस्य प्रश्नमुत्तरयन् भगवान् याज्ञवल्क्यः पूर्वं सूर्यज्योतिः, असंमिते सूर्ये चन्द्रज्योतिः, चन्द्रेऽप्यसति अग्निज्योतिः, अग्नावप्य-सन्निहिते वाग्ज्योतिः (वाचैव परैर्व्यवहरन्, परांश्च प्रत्यभिजानन्) वाच्यपि प्रलीनायां स्वप्ने स्वज्योतिः—इति क्रमेण जगाद । स्वप्ने सर्वमात्मैवोत्पादयति, आत्मनैव च जानाति । अत्रात्मपदेन अन्तःकरणम् । अनन्तरं तु स्वप्नसुषुप्त्यादि विवरणं कृत्वा तदनु सर्वास्ववस्थासु विपरिवर्तमानमप्यविकृतं सर्वप्रकाशकमेकमात्मानं ग्राहयागास । तस्मिन्नेव सर्वं लीयत इति सर्वस्यात्मा । तमेव प्रसङ्गं संकेतयन्नत्र सर्वाणि ज्योतींष्युदाहृत्य सर्वस्यान्तरात्मानं परं ज्योतिः प्रत्यपीपदद् ग्रन्थकृत् । सर्वमस्यान्नमिति । अत्र योऽयमात्मा अन्नेषु परिगणितः स प्रज्ञा-रूप एव । अन्तिमस्तु रसरूप इति भाव्यम् । तदेवात्मरूपमाद्यं विज्ञानमुच्यते, तदेव ज्योति-षामपि ज्योतिः, प्रज्ञापर्यन्तानां सर्वेषां प्रकाशत्वात् । अत्रैवार्थे श्रुतिमर्थतः पठत्यग्रिमे पद्ये ।

[२] अतएव सुषुप्तिमूर्छादिषु चैतन्याभिभवे किमपि न प्रतीयते ।

[३] अत्र वाक्पदेन रसनेन्द्रियं ग्राह्यम्–ज्ञानेन्द्रियाणां प्रक्रान्तत्वात् । वागिन्द्रियस्य तु कर्मेन्द्रियत्वात् । रसनादीनां ज्ञानेन्द्रियाणां मनःसाहाय्येन प्रज्ञासु–ज्ञानेषु यो विशेषः, चाक्षुषं ज्ञानम्, रासनं ज्ञानमित्यादिः, स मृत्युकृतः–बलसंबन्धाद्भवति । यत्तु प्रकाशांशे–ऐकरूप्यम्, तद्रसस्वरूपम् । विषया एव ज्ञानेषु भिद्यन्ते, विषयसंबन्धादेव च विशिष्टे ज्ञाने वैलक्षण्यं प्रतीयते–प्रकाशांशस्तु न भिद्यते— त्यादि पञ्चदश्याम् ।

[४] एकेन मृत्युना–बलेन योगे एकः प्रकाशः— एकं वृत्त्यात्मकं ज्ञानम् । पुनरन्येन मृत्युना योगेऽन्यज् ज्ञानम् । सोऽयं वृत्तिभेद एव, न मुख्यप्रकाशभेद इति भावः ।

[५] अत्र वृत्त्यात्मके ज्ञाने अमृतस्य मृत्युना सह ग्रहातिग्रहरूपो बन्धः—संबन्ध इष्यते । संबन्धभेदा आदावेव निरूपिताः स्मर्तव्याः । तेष्वयं बन्धरूपः संबन्धः—तत्रापि च ग्रहातिग्रह-भावोऽयं वैदिकपरिभाषायां व्याख्यातो ब्राह्मणेषु ।

[१]न चाऽभविष्यद् यदि चेद् विकाशो वेदेऽग्निचित्या न तदाऽभविष्यत् :
विकाशतश्चेतयते यतोऽग्नि ततो विकाशः स हि चेतना चित् ॥८६॥

इति त्रिविधा दीप्तिः

[२]संस्थाक्रमो यः स विकासरूपो मात्राक्रमो यः स विकासरूपः ।
दीप्तिक्रमो यः स विकासरूपस्त्रयस्तु शब्दा इह तुल्यमिष्टाः ॥८७॥

[३]ज्योतिर्हि यावद्विधृतिः प्रतिष्ठा वेदास्त्रयस्तावदुपक्रमन्ते ।
यज्ञश्च भर्गोऽस्य महर्यशो वा न ज्योतिषोऽस्मात् परतोऽस्ति वस्तु ॥८८॥

इति ज्योतिःपरिभाषा

इति ज्योतिराख्यानम्

## (२१) विधृत्यधिकरणम्

[४]इहेवमस्तीति यतो मतिर्भवेद् विधारणा सा विधृतिर्धृतिश्च सा ।
धृत्यात्मरक्षानुयतो न विच्यवः परस्य भक्तिश्च परो विधारणात् ॥८९॥

---

१ अयं ज्योतिषो विकाशो यदि न स्यात् तर्हि चेतनापि न स्यात् । पूर्वं निरूपितेषु वेदेषु आयतनभूतेषु यदा अग्नेः प्राणरूपस्य चितिः—चयनम्—ऊर्ध्वाधरभावेन निवेशो भवति, तदैव चैतन्यं प्रतीयते । यदि विकासो न स्यात् तर्हि एकस्य चयनं कथं संभवेत् । विकासादेव अग्नेः प्राणस्य विविधरूपता जायते, तत एव चितिर्भवति । तेनैव जनः चेतयते—चैतन्यं लभते । चेतना–चित्, चैतन्यम्–विकासः–इति सर्वेऽपि शब्दा समानार्था एव व्यवह्रियन्त इति भावः । वेदेष्वग्निसंबन्ध एवास्य हेतुरिति वैज्ञानिकी दृष्टिरास्थेया ।

२ ज्योतिः प्रकरणमुपसंहरन् त्रयाणामपि विकासानां नियतसाहचर्येणैव रूपतामाह ।

३ वाक्प्राणमनसामपि ऋग्यजुः सामरूपवेदत्वं ब्राह्मणेषु निरूपितम् । तेषामेव विवर्ता इमे प्रतिष्ठितविधृतिज्योतिष्ष्वपि वेदाः । एतैर्विना वेदानां प्रथनं न संभवति । एभिरेव यज्ञस्तायते । सूर्यादिषु ज्योतिर्मयपिण्डेषु । तत्र ज्योतिः पिण्डो भर्ग उच्यते । ज्योतिषां किरणप्रसरो मह इति । यस्तु प्रतिहतैः किरणैस्तमसि कश्चन प्रकाशांश आधीयते, स उच्यते यश इति । यथा सूर्यमण्डलमभितो रथरूपं तेजोमण्डलं भर्गः, पृथिव्यां प्रसृताः किरणा महः, आवृतेऽपि भवने किरणानां साक्षात्संबन्धाभावेऽपि यः प्रकाशोऽनुभूयते स तु यश इति । तत्र भर्गं ऋग्वेदः, महो यजुः, यशस्तु सामेति त्रयो वेदाः । यावती च ज्योतिषो व्याप्तिः, तावत्यामेव विधृतिप्रतिष्ठे अपि प्रसरतः, वेदा अपि तावत्येव प्रदेशे व्याप्नुवन्ति । ज्योतिषः परतः किमपि नास्तीति । अनेन ज्योतिःपिण्डन्यायेन रूपज्योतिषामपि भर्गमहोयशांसि विज्ञेयानि ।

४ अथ प्राणविवर्तरूपाया विधृतेर्निर्वचनमारभ्यते । तत्र प्रथमं विधृतिस्वरूपमाह–इह इदमस्ति–इति आधाराधेयरूपा वा वस्तुस्वरूपावगाहिनी वा बुद्धिर्यतो जायते–सैव धृतिः, विधृतिः, विधारणेति शब्दैः पर्यायरूपैर्व्यवह्रियते । आधाराधेयबुद्धिप्रयोजिका, अस्तित्व-बुद्धिप्रयोजिका च विधृतिरेवेत्यर्थः । तदेवोत्तरार्द्धेन विवृणोति–धृत्या आत्मरक्षा भवति, अर्थात् स्वरूपविच्युतिर्न भवति, सेयमस्तित्वबुद्धिप्रयोजिका विधृतिः । यया तु परः परस्य भक्तिर्भवति, अर्थात्तदवयवतामिव गच्छति, सा आधाराधेयभावप्रयोजिका विधृतिः ।

[१]यो यस्य भक्तः स हि तस्य बन्धुः प्रपद्यते भक्तिवशादुपास्ते ।
भर्गस्थितो वाऽस्य महः स्थितो वा यशः स्थितो वा न परत्र याति ॥९०॥

[२]यद्वस्तु विम्बप्रधिकं स भर्गो यावद्बहिर्वायुमहस्तदुक्तम् ।
तद् दृश्यता रूपकमण्डले स्याद्यशो धृतिस्तेषु च तारतम्यात् ॥९१॥

[३]यानस्थितो यानधृतः स भर्ग गत्यैव गच्छेदचलश्चलो वा ।
ये मक्षिकापक्षिगणामहस्थाश्चला अपि स्युर्विधृताः स्थितास्ते ॥९२॥

[४]ध्रुवस्य येयं पृथिवीयशःस्या ध्रुवेण सेयं विधृता स्थिताऽऽस्ते ।
गच्छन्त्यपीयं न च गच्छतीह ध्रुवस्य तन्मण्डलतो बहिर्धा ॥९३॥

तदित्थमुक्ता विधृतिस्तयैषा भक्तिर्निरुक्ता विधृते च भक्ते ।
विधारकोऽयं विभवेद् व्रतैः स्वैर्भक्तोऽप्युपास्तेऽवहितो व्रतेषु ॥९४॥

## इति विधृतिस्वरूपम्

---

[१] चेतनेषु यो यमाश्रयते, स तस्य भक्तो वा बन्धुरपि वा उच्यते। बन्धुष्वपि परस्पर-माश्रयाश्रयिभाव एव बन्धुताप्रयोजको भवतीत्यर्थः। उपासनायामपि च भक्ति शब्दोऽस्मादेव कारणात् प्रवर्तते। यो यमुपास्ते, स तस्य भक्तः—भागरूपः, तदाश्रयो भवतीत्यर्थः। इयमु-पासनाग्रे उपासनाधिकरणे विवरीष्यते। आधारधेयभावोऽपि त्रिधा भवति—ज्योतिः प्रकरणान्ते भर्गमहोयशांसि व्याख्यातानि, तेषु त्रिष्वन्यतममाश्रितोऽप्याश्रित एवोच्यते। त्रिषु एकस्मिन्नपि स्थितस्ततो बहिर्धा न गन्तुं शक्नोतीति।

[२] भर्गादीनां स्वरूपमस्माभिरनुपदमेव विवृतम्, अत्र मूल एव तद् विव्रियते। बिम्ब-प्रधिकम्—प्रधि (परिधि) परिच्छिन्नं विम्बमेव भर्गः। यावद्बहिर्वायु—विम्बाद् बहिः; वायुमण्डले प्रसृताः प्राणविशेषाः किरणा एव महः। रूपकमण्डले किरणाप्रतिफलनेन प्रति-विम्बभूते क्लृप्ते मण्डले या दृश्यता तत्तु यश इति।

[३] त्रयेऽपि विधृतिमुदाहरति—यदा कश्चित् पुरुषो यानमास्थाय गच्छति, तदा पुरुष-शरीरस्य यानभर्गे विधृतिः। यानगत्या च पुरुषेऽपि गतिर्भवति, सा विधृत्यैव। पुरुषशरीरेऽपि तदा हस्तपादादिषु गतिर्भवति चेद् भवतु नाम। स्थानान्तरप्राप्तिस्तु न तया, अपि तु यानगत्यैव। द्वितीयामुदाहरति—मक्षिकाणां पक्षिणां च गणाः खे प्रचरन्तोऽपि पृथिव्या महसा-पृथिवीप्राणै-राकर्षणबद्धाः पृथिव्या महसो बहिर्गन्तुं न शक्नुवन्ति-तदन्तरेव तिष्ठन्ति। अत एव भूभ्रमण-वादिनां मते पृथिवीपिण्डो यद्यपि क्षणे क्षणे शतयोजनान्यतिक्राम्यति, तथापि तदुपर्याकाशे विचरन्तः पक्षिणः क्षणेनैव स्वस्थानमागच्छन्ति। यावती पृथिव्या गतिस्तावती तन्महस्यपि बहिर्वायुमण्डले भवतीति। तदर्थं पक्ष्यादीनां प्रयासो न भवति, पृथिवी पिण्डाद् बहिर्यावति प्रदेशे तेषां गतिः, तत्प्रत्यावर्तनायैव तैः प्रयासः कर्तव्यो भवतीति।

[४] अथ तृतीयां यशो धृतिमुदाहरति—पृथिवीयमस्माकं ध्रुवेण धृता, ध्रुवस्य यशो मण्डले स्थितेति यावत्। सेयं भूभ्रमणवादिनां मतेन यद्यपि सहस्रशो योजनानि दूरं याति, परं ध्रुवस्य यशोमण्डलाद्बहिर्गन्तुं न शक्नोतीति भावः। उपसंहाररूपमग्रिमं पद्यं स्पष्टार्थम्।

[१]लोकेऽवलोकेऽनुगतां त्रिधा तां विधारणां वा विधृतिं धृतिं वा ।
यत्र स्वयं न च्यवते स्वरूपादविच्युतिः साऽस्खलनं धृतिः स्यात् ॥९५॥
[२]नाभौ निकायस्थित सर्वधर्मा यथायथं स्युर्विधृता हि धृत्या ।
ते पूर्वतः पश्चिमतोऽथ दक्षादथोत्तरादूर्ध्वमधो धृताः स्युः ॥९६॥
[३]भर्गस्थ एवं स महस्थ एवं यशःस्थ एवं विधृतोऽवसेयः ।
भर्गस्थितावस्य यशःस्थ धर्मे सा तारतम्याद्विधृतिः परीता ॥९७॥
[४]आकर्षणं यत् क्रियते परेण परस्य तत् स्याद् बलकर्म किन्तु ।
यत् स्यादुपासीनमिदं परस्मिंस्तद् भक्तिभूतं विधृतिर्मता सा ॥९८॥
[५]अनित्यकाला विधृतिर्हि सैषा बलात् परस्था विधृताः क्वचित्स्युः ।
पश्यामि नित्यां तु विधारणां यां सोक्ता पृथिव्या इह पार्थिवेषु ॥९९॥
[६]ये यस्य भक्ता महिमान एते भौमा यथोर्व्या इह तद्धृतिर्या ।
तामेव लोके गुरुतामिहाहुः प्रत्यर्यमेषा गुरुतार्पिता स्यात् ॥१००॥
[७]पृथ्वीविधृत्या गुरुता निकाये निकायधर्मा विधृतास्तु नाभौ ।
नाभिस्थितस्तेन स वस्तुभारः प्रतीयते गर्भगतः स आत्मा ॥१०१॥
[८]बाधात्तु भास्वत्कृतया विधृत्या पृथ्वीविधृत्या लघुतां वदामः ।
यावद् विधृत्योः प्रतिबाधवीर्यं तावल्लघुत्वं च गुरुत्वमिष्टम् ॥१०२॥

---

[१] अथ धृतिं त्रेधा विभजते—धृतिः, विधृतिः, विधारणा चेति। सर्वो ह्यर्थः स्वस्वरूपे तिष्ठति, सा स्वरूपादच्युतिः—स्वरूपादस्खलनं धृतिरित्युच्यते।

[२] अस्या धृतेः स्थानं नाभिः—केन्द्रम्। निकाये—पिण्डे ये धर्माः—अवयवा गुणा वा, ते सर्वेऽपि नाभिस्थया शक्त्या ध्रियते। ये अवयवा यस्यां दिशि ते तत्रैव तिष्ठन्ति, सैषा नाभिस्था धृतिः प्राणविवर्तरूपा।

[३] पदार्थाः पदार्थान्तराधारेण भर्गे महसि यशसि वा तिष्ठन्ति, सैषा प्रागुदाहृता विधृतिः। तत्र च भर्गस्थितापेक्षया महःस्थे यशःस्थे च तारतम्यं भवति, तदपि प्रागुदाहृतम्।

[४] एतां विधृतिमेव केचिदाकर्षणं वदन्ति, तन्मतं खण्डयति। आकर्षणं परेण बलपूर्वकं स्वाभिमुखं क्रियते। यत्तु स्वयं विनैव परबलप्रयोगं परस्मिन् भागभूतं भवति, तद्विधृतिकृतमेव। आकर्षणे परबलेन पर आकृष्यते, विधृतौ तु स्वबलेनैव परस्मिन् भक्तो भवतीति भेदः।

[५] अथ तृतीयां विधारणामाह—सजातीये स्वघने नित्यबद्धता विधारणा। पद्यं स्पष्टार्थम्।

[६] इयं पृथिव्या विधारणैव विधृतेषु पदार्थेषु गुरुत्वरूपेण परिणमतीति भावः।

[७] निकाये-पिण्डे। इह धृतिविधृतिविधारणानां पर्यायतयैव व्यवहारः, अवान्तरभेदमुपेक्ष्य लोके पर्यायत्वेनैव व्यवहारदर्शनात्। तदित्थं परम्परया नाभौ-केन्द्रे एव सर्वं धृतमिति केन्द्रमात्मरूपेण व्यवह्रियते। प्राणस्य केन्द्र एव स्थितिरिति यावत्।

[८] भास्वत्कृतया विधृत्या पृथ्वीविधृतेर्बाधात् पदार्थेषु लघुता प्रतीयते। यत्र सूर्यविधृतिराधिक्येन प्रवर्तते, तत्र पृथ्वीविधृतिर्बाधिता भवति। सूर्यविधृतेराधिक्ये पदार्थेषु लघुता प्रतीयत इति भावः।

यदेकमन्यत्तु विधर्त्तुमीष्टे न तत्र पृथ्वीविधृतिः स्वतन्त्रा ।
[१]क्षरेषु तेजो विधृतिर्वरिष्ठा संश्लेपविश्लेषगतिस्ततः स्यात् ॥१०३॥

[२]या तु च्युतिः सा च पराशनायाबलस्य तस्मिन् विलयो बलिष्ठे ।
स्वभावतः सर्वमिहाच्युतं स्याद् बलप्रयोगाच्च्यवते परेण ॥१०४॥

[३]तदित्थमेषा त्रिविधा प्रतीता विधारणा वा विधृतिर्धृतिर्वा ।
त्रैविध्यमस्या अथवा न मन्ये समानभावेन वदाम्यतस्ताम् ॥१०५॥

यथा[४] प्रतिष्ठापकतास्ति वाचः प्रकाशकत्वं मनसः स्वरूपम् ।
प्राणस्य तद्वच्च विधारकत्वं वदन्ति नैषा विधृतिः प्रतिष्ठा ॥१०६॥

नि[५]र्व्यापृत्तिः सा भवति प्रतिष्ठा स व्यापृतिं तां विधृतिं वदन्ति ।
त्यक्तं विधृत्या क्वचिदन्यगं स्यात् त्यक्तप्रतिष्ठन्तु विनाशमेति ॥१०७॥

---

१ येषु क्षरेषु—भावेषु तेजोविधृतिर्वरिष्ठा भवति, तेषु पृथिव्याः संश्लेषोऽल्पो भवतीति विश्लेषात्तेषां गगनेऽपि गतिः संभवतीति ।

२ अशनाया बलं पूर्वं बलप्रकरणे व्याख्यातम् । अन्यं स्वस्मिन् प्रवेशयितुं यो बलप्रयोगः, सा अशनाया । यदा तु परस्य अल्पस्य अशनायाबलं स्वस्मादधिकबले बलिष्ठे विलीयते-तदा अल्पस्य स्वरूपाद् विच्युतिर्भवतीति भावः । एवं स्वभावेन सर्वं स्वरूपादप्रच्युतं भवति परेण तु बलप्रयोगात् स्वरूपात्प्रच्याव्यते—इति सर्वत्र भाव्यम् ।

३ उपसंहारः—धृतिः, विधृतिः, विधारणेति त्रयं पृथक् पृथग् व्याकृतम् । अवान्तर-भेदमुपेक्ष्य तु पर्यायतयैव शब्दत्रयं व्यवह्रियत इति । स्वरूपेणापि धृतित्वसामान्येन सर्वासा-मैक्यमेव । विशेषविवित्सया तु त्रित्वं व्याख्यातम् ।

कञ्चिद्विशेषं वक्तुं पूर्वोक्तं स्मारयति—मनः प्राणवाक्षु वाचः प्रतिष्ठापकतास्वरूपम्, मनसः प्रकाशकत्वम्, प्राणस्य तु विधारकत्वमित्यनुसाधेयम् । वाक्प्राणमनांस्येव तत्तत्पदार्थेषु प्रतिष्ठाविधृतिप्रकाशरूपेण समन्वितानीति पूर्वोक्तस्यानुसन्धानम् । तत्र विधृतिप्रतिष्ठयो-रैक्यमेवेति संभावितां शङ्कां निराकरोति—एषा विधृतिः प्रतिष्ठारूपा न भवतीति ।

५ भेदमेवोपपादयति—प्रतिष्ठा निर्व्यावृतिः, प्रतिष्ठायां कोऽपि व्यापारः—कापि क्रिया न भवति विधृतिस्तु सव्यापारा; विधृतौ व्यापारो भवतीत्यर्थः । सोऽयं स्वरूपभेदः । कार्यभेद-मप्युपपादयति—विधृत्या त्यक्तमपि-अर्थाद् एकत्र विधृतौ निवृत्तायामपि तद्वस्तु अन्यगम्—अन्यत्र विधृतं स्यात्, न तु वस्तुनाशः । प्रतिष्ठाया अपगमे तु वस्तु विनश्यत्येव । "स्वरूप-प्रतिष्ठारूपा विधृतिर्या विवृता, सापि केन्द्राकर्षणरूपेति केन्द्रेऽनवरतमवयवगुणादिधारणाय क्रिया प्रवर्तत एव । एकस्मात् केन्द्रात् प्रच्युतमपि केन्द्रान्तरनिबद्धं तिष्ठेदिति संभाव्यते । यथा प्रज्वलितो वह्निर्यदा स्वसंनिहितेषु पदार्थेषु उष्णतामर्पयति, तदा सा उष्णता स्वकेन्द्राद् विच्युता जलादिपदार्थान्तरकेन्द्रेण सम्बद्धा भवति । प्रतिष्ठाविलोपस्तु तदैवोच्यते यदा वस्तुस्वरूप-नाशः स्यात् ।

[१]यथा हि सामान्यगता विशेषा यथा तु कार्यं निजकारणस्थम् ।
यथा च वायुर्गगनस्थितः स्यात्तथा प्रतिष्ठाविधृतिर्न तेषु ॥१०८॥

[२]गतेर्निवृत्तिः परतो यदि स्यात् तदा स्थितिं तां विधृतिं प्रतीयात् ।
लोपो न गच्छत्प्रकृतेः प्रकृत्या फलं तु तस्या विहितं विधृत्या ॥१०९॥

वि[३]काससीमोदरसंस्थितानामन्तःप्रचारेऽप्यगतिर्वहिर्या ।
सोक्ता धृतिर्नामतया गृहीतं त्वन्नं न चान्नात् परतो धृतं स्यात् ॥११०॥

[४]यत्किञ्चिदस्यां क्वचिदस्ति पृथ्व्यां रथन्तरं यावदिवान्नमस्याः ।
सर्वं तयैतद्विधृतं वहिस्तद्रथन्तरान्न प्रभवेद्धि गन्तुम् ॥१११॥

[५]करोमि यत्रोत्प्लवनाय चेष्टां तन्मे बलं भूविधृतिं रुणद्धि ।
उत्प्लुत्य यावद्बलमेव पश्चात् तया विधृत्यैव पतामि भूमौ ॥११२॥

[६]यावद्बृहत्साम च भास्वतेदं सर्वं तदन्नं विधृतं ततस्तत् ।
न स्याद्वहिर्या बृहतः कदाचित् सर्वत्र चैवं विधृतिं प्रतीयात् ॥११३॥

---

[१] प्रतिष्ठामुदाहरति—सामान्ये ये विशेषाः—गो सामान्ये ये धूम्रत्वधवलाद्या विशेषाः सन्ति, कारणे मृदादौ च या घटादीनां स्थितिः, या चाकाशे निर्व्यापारेऽपि वायोः स्थितिः—सा सर्वापि प्रतिष्ठैवोच्यते, न तु धृतिः, सामान्ये, कारणे, आकाशे वा क्रियाभावात् । विना सामान्यं विशेषस्य, विना कारणाश्रयतां कार्यस्य, विनाकाशं च वायोः स्थितेरसंभवेन तादृश-प्रतिष्ठाविच्युतौ विनाशस्यैव वक्तव्यत्वाच्च ।

[२] अन्ये न कृतायां गतिनिवृत्तौ या स्थितिः सा विधृतिरुच्यते । यत्र तु गतेः संभव एव न, सा प्रतिष्ठेत्यर्थादायातम् । यथा सर्वस्मिन्नपि पदार्थे पूर्वोक्ताक्षरपुरुषेन्द्रविष्णुकृता तदवयवगुणधर्माणां गतिः, रिक्तस्थानपूरणार्थमागतिश्च भवति, अथापि एवं गच्छन्त्याः—गतागतं कुर्वन्त्याः, प्रकृतेः—पदार्थस्य लोपो न भवति, स एवायमर्थं इति प्रत्यभिज्ञायते, सोऽयं लोपाभावः प्रकृत्या स्वभावभूतया प्रतिष्ठयैव विज्ञेयः । अयं प्रतिष्ठारूपो ब्रह्मेत्युक्तं पुरुष-निरूपणे, गच्छन्ती प्रकृतिः गच्छत्प्रकृतिरिति । अत्र पद्य एकं प्रकृतिपदं गतागताश्रयभूतस्य पदार्थस्य वाचकम्, द्वितीयन्तु प्रतिष्ठाप्राणबोधकमिति सावधानमालोच्यम् । तस्याः प्रतिष्ठायाः फलम्—एकत्राधारेऽवस्थितिस्तु विधृत्या विहिता ।

[३] पूर्वोक्तमेव स्पष्टीक्रियते—प्रत्येकं पदार्थस्य विकाससीमा नियता—यावत्पर्यन्तं तदव-यवगुणधर्माणां गतिः सा विकाससीमा, तदुदर एव तदवयवास्तिष्ठन्ति, वहिर्न गच्छन्तीति देशवन्धो विधृतिकृतः । विधृतिगृहीतमन्नं वाग्रूपं तु अन्येन न धृतम्—स्वरूपेण स्वप्रतिष्ठमेवेति ।

[४] दृष्टान्तेन स्पष्टयति—पृथिव्याः सामरथन्तरम्—सूर्यरथपर्यन्तं व्याप्तम्, तेन पार्थिवाः पदार्था धृताः, तद्वहिर्न गन्तुं प्रभवन्तीति विधृति कृतम् ।

[५] स्वशरीरे विधृत्युदाहरणं स्पष्टार्थम् ।

[६] सूर्यमण्डलस्य बृहत्साम, तत्पर्यन्तं तदीया धृतिः ।

भू[१]तानि भूम्यन्नमयेह देवाः सूर्यान्नमाभ्यां विधृतं पृथक् तत् ।
वयं तु जाता उभयेभ्य एभ्यस्तस्मादुभाभ्यां विधृता वयं स्मः ॥११४॥

पटे च मृत्स्वप्युदकं निधीयते पटेन मृद्भिर्विधृतं च नीयते ।
[२]सूत्रात्मनाऽङ्गान्यथ यच्च वायुना स्तब्धानि दृब्धात्यपि तद्विधारणम् ॥११५॥

[३]स्वरूपसंसृष्टमिहाशनाया बलं रसे चेद्विधृतिस्तदा स्यात् ।
बलं विधृत्या हि रसे स्वरूपात् संसृष्टमेर्कामुदाहरन्ति ॥११६॥

[४]प्राणः स एर्कषिरिहाक्षरोऽयं प्रोक्तो विधर्ता च विधारणश्च ।

प्राणः[५] स एर्कषिरिहाक्षरोऽयं प्रोक्तो विधर्ता च विधारणश्च ।
तस्य प्रभावादितरेतरेण श्लिष्टाक्षराणां त्रयमेकवत् स्यात् ॥११७॥

तस्या[६] क्षरस्याथ रसे बलं चेत् स्वरूपसंसृष्टमुदेति चान्यत् ।
प्राणः क्षरोऽयं स च वा विधर्ता विधारकश्चेति मतस्तृतीयः ॥११८॥

तस्य[७] प्रभावादितरेतरेण श्लिष्टं क्षराणां त्रयमेकवत्स्यात् ।
वाणं त्ववष्टभ्य स एव देहं विधारयत्येष विचित्र कर्मा ॥११९॥

बले रसस्याथ परस्य चाक्षरे क्षरेऽक्षरस्यास्ति विधारणा पृथक् ।
प्रज्ञेऽक्षरं प्रज्ञगताश्च देवताः प्रज्ञाश्च तस्मिन् विधृताः सदेरते ॥१२०॥

---

[१] पूर्वपद्यद्वयोक्तमन्नशब्दार्थं स्पष्टयति—भूमौ स्थितानि भूतानि भूम्यन्नम्, तदाकर्षण-धृतानि सूर्यमण्डलमितस्तु देवाः, ते सूर्यस्यान्नम्—तदाकर्षणवद्धाः । वयन्तु प्राणिनो भूतदेवमया इत्युभाभ्यामपि बद्धाः । भूतमयमस्माकं शरीरम्—देवमयानि त्विन्द्रियाणीति ।

[२] पूर्वार्द्धं स्पष्टम्—तत्र मृदि पटे च जलविधृतिः । अस्माकं प्राणीनामङ्गानि तु सूत्रात्मरूपेण वायुना धृतानि, अत एव स्तब्धानि—दृब्धानि—परस्परसंवद्धानि चेति ।

[३] अशनाया बलं रसे स्वरूपसंसर्गेणास्ति । तत्तु यदा विधृत्या भवति, तमेर्कपि कथयन्ति ।

[४] अथ विधारणां पूर्वोक्तेषु त्रिषु पुरुषेषु विभिन्नरूपतया संगमयति—पूर्वपद्ये य एर्कपि-पदेनोक्तः, स प्राण एव । स प्राण एवाक्षरः पुरुषः । अक्षराणां त्रयं यदुक्तम्—ब्रह्मा, विष्णु-रिन्द्रश्च, ते प्राणस्य विधृतिप्रभावादेव परस्परं श्लिष्टा एकवत् प्रतीयन्ते ।

[५] अथाक्षरपुरुषस्य रसे यदा स्वरूपसंसर्गेण बलान्तरं समन्वेति, तदा क्षरकलारूपः प्राण उदेति । सोऽयं तृतीयः प्राणः । एकोऽव्ययपुरुषकलारूपः प्राणः, तद्विकासरूपोऽक्षररूपो द्वितीयः प्राणः । क्षरपुरुषस्य कलास्वादिमस्त्वयं तृतीयः प्राणः । सर्वमिदं गद्यमयपुरुषप्रकरणे व्याख्यातपूर्वम् । विधारकत्वं तु त्रयेऽप्यनुगतम्, तदेव प्राणशब्दस्य प्रवृत्तिनिमित्तम् । अस्य भौतिकशरीरस्य विधर्ताऽयं क्षरः प्राण एव ।

[६] अयं तृतीयः क्षरकलारूपः प्राण एव सर्वासां क्षरकलानाम्—'प्राणः, आपः', इत्युक्तानां संश्लेषकरणेनैकत्वभासकः । अयमेव च बाणरूपस्य शरीरस्य विधारकः । 'अहमे-वैतद्बाणमवष्टभ्य विधारयामि' इति प्राणविवादस्था श्रुतिरत्र बाणपदेन संकेतिता । अग्रिमं पद्यद्वयं प्रागुक्तस्यैवानुवादकं स्पष्टार्थम् ।

अस्तीन्द्रियस्यार्थगता विधारणा तथात्मनः शक्तिगतास्ति धारणा ।
सुपिच्छिलस्य प्रतिबिम्बधारणा प्राणस्य चैतत्तनुबाणधारणा ॥१२१॥

[१]इन्द्रस्य सप्तर्षिषु चास्ति धारणा तद्भूतमात्रासु तथर्षिधारणा ।
न तत्क्वचिद्वस्तु न यत्र धारणा सर्वं तयाऽधारि ममेति धारणा ॥१२२॥

इतिविधृत्युदाहरणानि

[२]आत्मा यदोत्सीदति दम्यते वा तदार्तमल्पं च स दुःखभावः ।
दब्धस्य चोत्सादगतस्य भूयो धृत्याप्तिमानन्दमुशन्ति विज्ञाः ॥१२३॥

[३]यत्रापि वीरः करुणाद्भुतो वा बीभत्सरौद्रौ च भयानको वा ।
रसेषु चेतो द्रवणेऽपि धृत्या स्वास्थ्यादिहानन्दरसोपपत्तिः ॥१२४॥

[४]आनन्दमाहुर्द्विविधं विधृत्या स्वास्थ्योपपत्तेः प्रथमः स उक्तः ।
अनुप्रहाद् भूमरसस्य सस्यादथात्मनो वृद्ध्युपपत्तितोऽन्यः ॥१२५॥

विना विधृत्यानु न वृद्धिरेषा संभाव्यते तेन सदोभयत्र ।
[५]तदन्वयादव्यतिरेकतश्च स्वानन्दहेतुं विधृतिं वदन्ति ॥१२६॥

इति विधृतेरानन्दरूपत्वम्

---

[१] क्षरस्य कलारूपः प्राणः सप्तधावतिष्ठते, तत्र मध्यगत इन्द्रो भवतीत्यादि शतपथ-ब्राह्मणस्य षष्ठकाण्डारम्भे व्याख्यातम् । व्याख्यातं चेहापि पूर्वप्रकरणे । सप्तधा स्थिता ऋषयः प्राणाः पक्षपुच्छादिरूपेण व्यवस्थिताः, ते मध्यगतेनेन्द्रेण ध्रियन्त इत्यर्थः । ते च ऋषयो अवादिभूतान्युत्पाद्य तान् धरन्तीति सर्वमन्योन्यधृतं भवति । विधारणाहीनं किमपि न दृश्यत इति भावः ।

[२] अथ विधारणाया आनन्दरूपतां व्याचष्टे—"यो वै भूमा, तत्सुखम्, यदल्पं तद् दुःखम्" इति श्रुतेरल्पतार्थात् क्षीणता परेणाक्रान्तता वा दुःखरूपा । विधृतिस्तु तदभाव-रूपेत्यानन्द रूपतास्याः सिद्ध्यतीति भावः ।

[३] वीरकरुणादिषु रसेषु चेतसो द्रवणेऽपि आत्मनो धृतिरिति रसस्यानन्दरूपतोच्यते । तेनापि धृतेरानन्दरूपता सिद्ध्यतीति । रसेष्वात्मानन्दभानं भवतीति स्फुटं विवृतमलंकारशास्त्र-ग्रन्थेषु काव्यप्रकाशादिषु ।

[४] द्विविधो ह्यानन्दो व्याख्यायते—शान्त्यानन्दः, समृद्ध्यानन्दश्च । क्षोभाभावे प्रथमः, तत्र तु विधृतिरूपता स्पष्टैव । क्षोभाभावस्य विधृतिरूपत्वात् । समृद्ध्यानन्दे तु व्यवहारि-कस्यात्मनो वित्तप्रजादिकलानां वृद्धिर्भवति, वृद्धिरपि विधृतस्यैव संभवतीति द्विविधोऽप्यानन्दो विधृतिरूपतां नातिक्राम्यतीति ।

[५] अन्वयाद्—विधृतिसत्त्वे आनन्दानुभवात्, अव्यतिरेकतः—विधृतिं विना आनन्दा-नुपलब्धेश्च विधृतेरानन्दहेतुता सिद्धा । इयं हेतुता लोकव्यवहारदृष्ट्या व्याख्याता । वस्तु-तस्तु अनिन्दस्यस्व स्वरूपतया स्वरूपादप्रच्यवरूपा विधृतिरानन्दरूपैवेति अधिकरणसमाप्ति-सूचकवाक्ये आनन्दरूपतैवोक्तेति भाव्यम् । आनन्दस्य नित्यतया तत्र कारणासंभवादिति ।

## (२२) प्रतिष्ठाधिकरणम्

[१]यदाशनाया ध्रियते विधृत्या ज्योतिस्ततः संस्रवते समन्तात् ।
सैव प्रतिष्ठाद्विरसा तयैतान्येकात्म्यमायान्ति बलान्तराणि ॥१२७॥

[२]स्वतन्त्र रूपाणि बलानि सर्वाण्यैकात्म्यमायान्ति यदा तदानीम् ।
प्रतिष्ठितान्यात्मनि पारतन्त्र्यं यतो लभन्ते किल सा प्रतिष्ठा ॥१२८॥

[३]यदि प्रतिष्ठेह न चाभविष्यज्ज्योतिः प्रवर्तेत कुतः समन्तात् ।
कुतस्तरां वा विधृतिर्बलानां सांतानिकं रूपमरूपयिष्यत् ॥१२९॥

[४]प्रतिष्ठितानां विधृतिर्बलानां प्रतिष्ठितेन क्रमते समीची ।
ब्रह्मप्रतिष्ठा तत एव सर्वं प्रतिष्ठितं कर्म जगद्विभाति ॥१३०॥

---

[१] मात्राविकाससंस्थाविकासाद्या ये ज्योतिषो भेदाः पूर्वं निरूपिताः, तेषां स्थितिः प्रतिष्ठयैव भवतीति प्रतिष्ठाधिकरणेऽत्र प्रतिपाद्यते। मनः प्राणवाचामेव रूपाणि ज्योतिर्विधृतिप्रतिष्ठा नामभिराख्यायन्ते—इत्युपक्रम उक्तम्। तत्र वाचो रूपं प्रतिष्ठा। सा च स्वसत्तारूपेति पूर्वत्र विधृतिप्रतिष्ठयोर्भेदप्रकरण उक्तम्। यथा च मनःप्राणवाचः परस्परमविनाभूताः, तथैव तद्विवर्ता ज्योतिर्विधृतिप्रतिष्ठा अपि बोध्याः। तथा चाशनायाबलं यदा विधृत्या ध्रियते—धार्यते, तदाशनायावशात्तदवच्छिन्नं ज्योतिरूपं मनः समन्तात् स्थितां समन्तात् संस्रवते, परमात्मसात्कर्तुं प्रसरति, स एष रसद्वययोग एव प्रतिष्ठा। मनो रसस्य प्रथमो विवर्त इत्युक्तमेव बहुशः। तदेकं रसरूपं मनो ज्योतीरूपेण विधृतौ प्रविष्टम्—अपरन्तु अशनायाबलात् संस्रुवमिति द्विरसत्वमुक्तम्। क्षणिकान्यपि बलानि यदा रसे प्रतिष्ठितानि भवन्ति, तथा विभिन्नान्यपि एकत्र प्रतिष्ठितत्वादेव रूपतामायान्ति। सैषा तेषां स्वरूपसत्ता, इयमेव च प्रतिष्ठेति भाव्यम्।

[२] पूर्वोक्तमेव स्पष्टीकर्तुं विध्रियते—पूर्वं बलानि स्वस्वरूपेण स्वतन्त्राण्यासन्, यदा तु रसविवर्ते ज्योतिषि प्रतिष्ठितानि जातानि, तदा ज्योतिः परतन्त्राणि जातानि। इत्थं सर्वेषामैकात्म्यसंपादिका, पारतन्त्र्यसंपादिका च प्रतिष्ठेति प्रतिष्ठास्वरूपमनुसन्धेयम्।

[३] ज्योतिर्विधृतिप्रतिष्ठानां परस्परोपकारित्वं प्रतिपाद्यते—प्रतिष्ठां विना अस्थिरेषु बलेषु रसविवर्तभूतं ज्योतिः कथं प्रवर्तेत, विकासः कथं संभवेदिति यावत्। बलेष्वेव ज्योतिषो विकासो भवति। अस्थिरेषु क्षणप्रध्वंसिषु कथं विकासः स्यात्। अस्थिराणां संतानोऽपि न सिद्ध्यतीति सान्तानिकं रूपमपि विधृत्या कथं संपाद्येतेति।

[४] ननु अस्थिराणामपि तरङ्गादीनां परम्परा दृश्यते—तथैव बलानामपि परम्परारूपः संतानो भविष्यतीति चेत्तत्राह—तरङ्गा अपि यदा जले सत्तारूपेण प्रतिष्ठिता भवन्ति, तदैव तेषां परम्परा संभवति। उत्पन्नप्रध्वस्तानान्तु कथं परम्परा संभवेत्। ज्ञाने परम्परा सेत्स्यतीति चेत्, तत्रापि ज्ञाने प्रतिष्ठितानामेव परम्परा। न चानया ज्ञानपरम्परया वस्तुविकासः संभवति, यावद् वस्तुनि बलानां स्थितिर्न स्यात्। अतएव नैयायिकाः क्षणिकानामपि उत्पत्तिक्षणः, स्थितिक्षणः, विनाशक्षण इति क्षणत्रयं कल्पयन्ति, न तु बौद्धानामिव

[१]यतोऽस्ति चास्तीति मतिः प्रवर्तते मृत्योः प्रतिष्ठा ननु साभिधीयते ।
प्रतिष्ठितः सन्निह कथ्यते सतः सत्ता प्रतिष्ठोत्क्रमपाप्मनः पृथक् ॥१३१॥

[२]न सा स्थितिर्यत्र गतिर्न विद्यते स्थितिर्न यत्रास्ति न सा गतिः क्वचित् ।
स्थितिर्नु सैवाऽमृतमत्र दृश्यते गतिर्नु मृत्युः परिवर्तनात्मिका ॥१३२॥

[३]धत्त्वावृतिः सा मितिरत्र तत्कृता वस्त्वाकृतिः सा स्थितिरन्यथा मता ।
उच्छेदगत्याः पृथगत्र सा गतिर्मता परिच्छेदफलाऽमृतानुगा ॥१३३॥

---

उत्पादविनाशयोरेक एव क्षणस्तैरभ्युपगतः । स एष स्थितिक्षणः एव प्रतिष्ठारूपः । विधृतिरपि स्थितिक्षण एव संभवति, उत्पादविनाशक्षणयोरैक्ये तु कथं विधृतिः, सर्वस्य विनाशित्वे च कुत्र विधृतिः स्यात् । तस्मात्प्रतिष्ठितेन वलेनैव समीची–संगमनम्–संतानरूपा प्रतिष्ठापि संभवति । तस्मात्सैषा प्रतिष्ठापि ब्रह्मरूपमित्युपगन्तव्यमेव । ब्रह्मरूपया प्रतिष्ठयैव सर्वं जगत्प्रतिष्ठितमिति । प्रतिष्ठामाप्तं कर्मैव जगदिति ।

[१] ननु क्षणिके जगति प्रतिष्ठा नास्त्येवेति कुतः प्रतिष्ठितत्वमुच्यत–इत्याशंङ्कायमाह—क्षणिकस्यापि मृत्योः—वलस्य अस्ति, अस्ति इति बुद्धिर्यतः प्रवर्तते सैव प्रतिष्ठेत्युच्यते । अस्ति बुद्धिः सर्वेपामनुभवसिद्धा, न केनाप्यपलपितुं शक्या । सेयमस्तीति बुद्धिः सत्ता प्रयोज्या, स वस्तुनि सत्तानुवर्तत इत्यस्मार्कमस्तिबुद्धिस्तत्र प्रवर्तते । सैपा सत्तैव प्रतिष्ठेत्युच्यते । प्रतिष्ठितः सन्, तस्य भावः प्रतिष्ठा सत्ता । सतः सत्तैव प्रतिष्ठेत्यन्वयः पद्ये । उत्क्रमणं तु केवलं वलस्वरूपमेव । तद् वलस्य स्वभावभूतं न ब्रह्मणि प्रतिष्ठितम् । तस्मात् पाप्मनः—वलाद् उत्क्रमणरूपाद् इयं प्रतिष्ठा पृथगिति इयं ब्रह्मणो विवर्तः ।

[२] तदित्थं विधृतिप्रतिष्ठे स्थितिरूपे—इति पूर्वत्र सिद्धम्, ते च रसप्रधानस्याव्ययपुरुषस्य कलारूपयोः प्राणवाचोः स्वरूपे– इति रसरूपे । परं रसः सदैव वलेनाविनाकृतो भवति, नित्यसंवद्धे ब्रह्ममाये—इति पुनरपि स्फुटी करोति । कुत्रापि स्थितिः गतिविधिः—रहिता जगति न दृश्यते । यमपि पर्वतादिकं वयं स्थिरं मन्महे, तत्राप्यवयवपरिवर्तनात्मिका गतिरस्त्येव, अन्यथा प्राचीनत्वं तत्र न व्यवह्रियेतेति प्रागनेकधा प्रतिपादितम्, एवं गतिरपि स्थिति विना कृता न भवति—इति पूर्वपद्ययोर्व्याख्यातम् । सैपा स्थितिरेव अमृतम्—रसः, गतिस्तु–मृत्युः–वलमिति द्वयोर्योग एव सर्वत्रास्थेयः परिवर्तनम्, तथापि प्रत्यभिज्ञा च सर्वत्रैव प्रतीयते–तेन रसबलोभयात्मकं सर्वमिति सिद्धयतीति भावः ।

[३] स्थितिगत्योरेव रूपान्तरे विभुत्वम्, परिच्छिन्नत्वं चेत्याह—सर्वत्र व्याप्तस्य विभोरावरणमेव मितिः—परिच्छेदः । परिच्छेद एव चाकृतिः—आकारः । इदं गतिरूपम्—आवरणस्यापि वलरूपत्वात् । स्थितिस्तु तद्विपरीता–विभुत्वमेव । इयं मितिरूपा—परिच्छेदकरणरूपा गतिः उच्छेदरूपाया गतेः पृथगेव दृश्यते । परिच्छेद उच्छेदकश्च विभिन्नावेवेति भावः । इयमपरागतिः—परिच्छेदफला, अनया परिच्छेद एव क्रियते नोच्छेदः । इयमपि तु गतिः—अमृतानुगा—अमृतं रसमेवानुगच्छति, तमेवाश्रयति, रसस्यैव परिच्छेदं दर्शयतीति भावः ।

[१]स्थितस्य शश्वत् परिवर्तनक्रमे यत्पूर्वदृष्टं न पुनः प्रदृश्यते ।
तद्रूपमुच्छिन्नमिति प्रतीयते तत्कर्ममृत्युः परतः सदिष्यते ॥१३४॥

असन् स मृत्युः सति वीक्ष्यते क्षणं यतस्तु सत्तां परिगृह्य सन्निव ।
स एव संत्ताधन उच्यतेऽमृतं रसः स नश्यत्तु न नश्यतीह यः ॥१३५॥

[२]सत्ता हि सामान्यमिदं प्रदृश्यते सैकैव सर्वत्र विवर्तते पृथक् ।
भावा भवन्तीह तदन्वयादिमेऽभावः पुनस्तद्व्यतिरेकतो भवेत् ॥१३६॥

कर्मैव सत्कर्मणि वध्यमानं रूपेऽन्यरूपेण विजायते यत् ।
भूयोऽपि भूयोऽपि नवे नवेऽस्मिन् पूर्वेव सत्ता क्रमते स्थितैव ॥१३७॥

इति प्रतिष्ठास्वरूपम्

[३]सत्ता पृथिव्या इह नाभिभूता तस्या विकाशः परितोऽस्ति दिक्षु ।
आलम्ब्य तामेव भवन्ति भावा ये पार्थिवास्ते हि तयात्र बद्धाः ॥१३८॥

---

[१] ननु सत्कार्यवादे उच्छेदस्तु कस्यापि नास्त्येवेति कथमुच्छेदो व्यवह्रियत इति तत्राह— परिवर्तनक्रमे पूर्वं यद्रूपम्—तत्तु पुनः कदापि नायातीति तस्य तु उच्छेद एव । अवस्थान्तर—प्राप्तिरेव परिणतिः सत्कार्यवादे । तत्र यावस्था निवृत्ता, सा तु पुनर्गच्छत्येव । अवस्थानामवस्थावद्भिः पदार्थैः भेदं मत्वा तु सत्कार्यवादो व्यवह्रियते । या अवस्था उच्छिद्यन्ते ताः कर्मणो रूपम् । रसाश्रयेण तु वलरूपाणामवस्थानां सत्त्वं प्रतीयते । न तु तासां स्वतन्त्र-मस्तित्वम्—अत एव वेदान्ते तासामसत्त्वं मिथ्यात्वं वा व्यवह्रियत इति । परतः तासां सत्त्वम्, न तु स्वतः । इदमेव मिथ्यात्वम् । मिथु धातुः संगमनार्थः, परेण संगता एव ताः प्रतीयन्ते, स्वतन्त्राः—इत्येव मिथ्यात्वनिरुक्तिः । अग्रेतनं पद्यमस्यैव विवरणरूपम् ।

ततश्च न्यायादिदर्शनेषु यत्सत्ता सामान्यं व्यवह्रियते, तद्रसस्य ब्रह्मण एव रूपम्—न तु ततः पृथक् किमपि । 'व्यक्त्याकृति जातयस्तु पदार्थः' इति यन्न्यायसूत्रे उक्तम्—तत्र गतिः सामान्यं ब्रह्मरूपम् । आकृतिः कर्मरूपेत्युक्तमेव । तयोः समवाय एव व्यक्तिरित्यनु-सन्धेयम् । सत्तान्वयादेव भाव उच्यते । यत्र तु सत्ता नानुसन्धीयते—स उच्यते—अभावः । यद्यपि सत्ता ब्रह्मरूपा विभ्वी, न तद् व्यतिरेकः क्वापि संभवति, तथापि तस्या अनुसंधानं यत्संबन्धेन नास्ति, तस्यैवाभाव उच्यते । अतएव 'भावान्तरमभावः' इति न्यायाव्यतिरि-क्तानां पदार्थानां सिद्धान्तः, अग्रेतनं पद्यमुपसंहाररूपं स्पष्टार्थमेव ।

[२] प्रतिष्ठा सत्तेत्युक्तं प्राक् । तत्र च कारणसत्तैव कार्येष्वनुवर्तते न तु कार्याणां स्वतन्त्रा सत्ता भवतीत्यत्र प्रतिपाद्यते । कार्यसत्तया च कारणसत्ता नाभिभूयते, ततश्च कारणसत्ताया एव विकासः कारणसत्तारूपेणेति मन्तव्यं भवति । तत्र मूलतः पञ्च भूतानि, तज्जन्याश्च प्रत्येकं शतशः पदार्थाः—यथा पृथिव्या घटकुड्यशरावाद्याः, जलस्य फेनवुद्बुदाद्या, तेजसः प्रदीपाद्या विकासाः । तत्र भूतानां सत्तैव भौतिकेष्वनुवर्तते इति द्वाभ्यां प्रतिपाद्यते । तत एव भौतिका भूतैर्निवद्धा भवन्ति, तदाकर्षणाकृष्टा न तन्मण्डलव्याप्तेर्वहिर्गन्तुं शक्नुवन्ति । पार्थिवादि शरीरवन्तः प्राणिनोऽपि पृथिवीनिवद्धा भवन्ति, एवं जलीय शरीरवन्तो जलेनेत्यादि व्याख्यतमत्र ।

अप्स्वम्मयास्तेजसि तैजसास्ते वायौ तु वायव्यगणा निवद्धाः ।
वाचो वियत्यत्र वलानि तद्वत् [१]प्राणो धियः प्रज्ञगताः समस्ताः ॥१३९॥

[२]सत्ता पृथिव्यामनुवर्तते जलाज्जले तु सा तेजस एव तेजसि ।
वायोश्च वायौ वियतोऽथ तत्र सा प्राणात् पुनस्तत्र धियोनुवर्तते ॥१४०॥

[३]एवं नु भावाः सकलाः समन्ततो रसेन सत्तामय सूत्ररूपिणा ।
प्रज्ञे निवद्धा अथ तेऽपि भूरिशः प्रज्ञा इहैकाक्षर मूलमास्थिताः ॥१४१॥

[४]सत्तैव भावो य इहास्ति भावो भवेदभावो यदि नात्र सत्ता ।
सत्ता यदेका तदिहैकमेव प्रतीयतेऽद्वैतमिदं समस्तम् ॥१४२॥

· इति प्रतिष्ठोदाहरणानि

## (२३) भूमाधिकरणम्—

[५]ब्रह्मादिरूपं यदतीवगूढं निर्लक्षणत्वान्न निरुच्यते तत् ।
शक्यं न विज्ञातुमिदं यथावद् यावत्तु शक्यं तदिह प्रदिष्टम् ॥१४३॥

---

[१] यथा भौतिका भूतैर्निवद्धाः, तथा प्रज्ञस्यात्मनो विवर्ता मनःप्राणवाचो वलानि च प्रज्ञेनात्मना निवद्धानीति भावः । अत्र वाचः स्थूलानां सर्वेषामुपादानभूताया आकाशे निवद्धत्वमुक्तमिति अत्र प्राणधियोरेव प्रज्ञनिवद्धत्वमाख्यातम् । यद्यपि आकाशगुणरूपा आकाशेन निवद्धा वाक् स्थूला, सर्वोपादानभूता तु अव्ययकलारूपा वागाकाशादेरपि कारणमित्यस्ति भेदः, तथापि इयं स्थूला वागपि तस्या मूलभूताया एव प्रथमो विवर्त इति कार्यकारणयोरनन्यत्वेनैवात्र व्यवहारः कृतः । पार्थक्येन विचारे तु प्राणधियोरिव वाचोऽपि प्रज्ञगतत्वमनुसन्धेयम् ।

[२] इदानीं पञ्चसु भूतेष्वपि श्रुत्युक्ताम् "आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" (तैत्तिरीयोपनिषत्) इति प्रक्रियायामुपजीव्य कारणसत्तैव कार्ये संक्राम्यतीत्युच्यते । पृथिव्यां जलात्सत्तानुवर्तते, जले तु तेजस इत्यादि स्पष्टार्थम् । आकाशस्तु प्राणाज्जात इति प्राणसत्ता तत्रानुवृत्ता, प्राणे च मनसो धियः सत्तेत्याद्यनुसन्धेयम् ।

[३] एवं परम्परया विचारे रस एव सत्तारूपः, रसरूपैव सत्ता सर्वत्रानुवर्तत इत्यद्वैतं फलति । सर्वे प्रज्ञ आत्मनि निवद्धाः, प्रज्ञोऽपि क्षरात्मरूपोऽक्षरे निवद्धः, सोऽप्यव्यये, सोऽपि परात्परे, सोऽपि निर्विशेषे शुद्धे रसे—इति क्रमेणाद्वैते पर्यवसानम् ।

[४] पूर्वमुपपादितामद्वैतप्रक्रियां स्मारयति—सत्तैव भाव इत्युच्यते, सत्ताया भेदे एव च द्वैतं मन्यते—इति पूर्वमुष्णीपदृष्टान्तेनोपपादितम् । सत्ताया यत्रानुसन्धानं नास्ति, स एवाभाव इत्यनुपदमस्माभिरुक्तम् । सत्ताया ऐक्यादद्वैतं सिद्धमेवेति प्रतिष्ठाया उपसंहारः ।

[५] भूमा—व्यापकं ब्रह्म । तन्मनोवागतीतम्, तथापि यावदुपपादयितुं शक्यम् तावदुच्यते 'पतन्ति खे ह्यात्मसमं पतत्रिणः' इति न्यायात् ।

[१]तज्ज्योतिराभाति यथा तथा यत्सेयं प्रतिष्ठा यद्विहास्ति चास्ति ।
रसो हि भूमाविधृतोऽस्ति भाति विरूपमेतद्धचमृतं निरुक्तम् ॥१४४॥

[२]ज्योतिः प्रतिष्ठा विधृतिस्तथैभिर्नित्यावियुक्तैस्त्रिभिरात्मभिर्यः ।
परोऽन्य आत्मा पुरुषोत्तमः स्यात् तं सच्चिदानन्द इति ब्रुवन्ति ॥१४५॥

प्रतिष्ठितोऽयं तु यतस्ततः सन् ज्योतिर्मयोऽयं यदतश्चिदुक्तः ।
यतोऽच्युतोऽयं विधृतः सुखोऽतस्तं सच्चिदानन्द इति स्तुवन्ति ॥१४६॥

इतिभूम्नः सच्चिदानन्दरूपम् ।

[३]भूमा वहुत्वं परिपूर्णरूपं कामस्तदर्थो न च तत्र कामः ।
कामो ह्यपूर्णे परिपूर्णतायै प्रवर्तते पूर्णतरे कुतः स्यात् ॥१४७॥

[४]भूम्नो रसान्नो पृथगस्तिकिञ्चित् सर्वं हि तस्मिन्न च तत्परस्मिन् ।
प्रतिष्ठतः स स्वमहिम्नि भूमा भूमैव भूम्नो महिमा प्रतिष्ठा ॥१४८॥

सोऽधः स ऊर्ध्वं स पुरश्च पश्चात् स उत्तरा दक्षिणतः समन्तात् ।
सर्वं तदेकामृतमद्वितीयं दिक्कालदेहैर्न विमीयते तत् ॥१४९॥

इति भूम्नः परनिरुक्तरूपम्

---

[१] सत्, चिद्, आनन्दं ब्रह्मेति निरूपितमुपनिषत्सु । तत्र चिद्—ज्योतिः, सत्ता—प्रतिष्ठा, विधृतिः—आनन्दः—इति ज्योतिर्विधृतिप्रतिष्ठापदैरपि तदेवोक्तमिति भावः । एषां च तत्तद्रूपता प्राग् व्याख्याता ।

[२] ज्योतिरादीनां लोके प्रतीयमानानां समष्टिसम्मुग्धा भेदा पर आत्मा उच्यते । एतदेवाग्रिमपद्येनापि स्पष्टार्थेन विवृतम् ।

[३] 'यो वै भूमा तत्सुखम्' इति श्रुत्युक्तं युक्त्याप्यनुसन्धीयते । महत्त्वप्राप्तये सर्वोऽपि जीवः प्रवर्तते—ततस्तत्रैव सुखमित्यनुमीयते । सुखस्यैव सर्वाभिलषितत्वात् । ततश्च महत्त्वप्राप्तये सर्वेषां कामः । यतः परं तु महत्त्वं नास्ति—तत्प्राप्त्यनन्तरं किमुद्दिश्य कामो भवेत् । तस्माद्यावदपूर्णता, तावदेव कामः, भूमत्वे—व्यापकत्वे तु न काम इति भूम्नो ब्रह्मणः, भूमत्वं प्राप्तानां मुक्तानां चाकामत्वं युक्त्या सिद्धमिति भावः । बहुशब्दादेव इमनिच् प्रत्ययेन 'भूमा' शब्दः सिद्धयति । तेन बहुत्वमेव तस्यार्थं इति ।

[४] छान्दोग्योपनिषदि सप्तम प्रपाठकारम्भे नारदसनत्कुमारसंवादः श्रूयते । तत्र वेदशास्त्रेभ्यः सर्वेभ्यो नाम भूयः, नाम्नो वाग् भूयसीत्यादिक्रमेण भगवता सनत्कुमारेण एकैकस्मात् परस्य परस्य महत्त्वं प्रतिष्ठाप्य पञ्चदश खण्डान्ते प्राणस्य सर्वापेक्षया महत्त्वं प्रतिष्ठापितम् । प्रत्येकं च ब्रह्मत्वमुपगम्य नारदेन तदुपासनं क्रमेणाङ्गीकृतम् । तदनु तु षोडशखण्डमारभ्य सत्यविज्ञानादिक्रमेण जिज्ञास्य तारतम्यमवतार्य त्रयोविंशखण्डे भूम्नः सर्वस्मात्परत्वमाम्नातम्, तस्य च स्वप्रतिष्ठितत्वमुक्तम् । तां श्रुतिमत्रार्थतोऽनुवदति ग्रन्थकृत् । तत्र त्रयोविंश चतुर्विंश खण्डयोरादौ द्वाभ्यां पद्याभ्यामाशयानुवादः । तत्र भूमेति पदेन रस एवोक्तः—स एव सर्वस्मात्परः सर्वं तस्मिन् प्रतिष्ठितम्—स तु नान्यत्र प्रतिष्ठित इति पद्ययोरनयोः स्पष्टोऽर्थः ।

[१]बृहत् सदायत् परिबृंहणं यत् तदुच्यते ब्रह्म य एष भूमा ।
प्रतीयते सर्वगतोऽप्यलिप्तो रूपं तदेतत् परमं प्रविद्यात् ॥१५०॥

[२]नाम्ना विना किञ्चिदिहास्ति नैतन्नाम्नोपि वागेव तु भूयसीयम् ।
वाचो मनस्तन्मनसोऽपि भूयान् संकल्पकश्चित्तमतोऽपि भूयः ॥१५१॥

तद्ध्यानविज्ञानबलान्नमापस्तेजोऽन्तरिक्षं स्मर एवमाशा ।
प्राणश्च भूयान क्रमशस्तदित्थं यथोत्तरं भूयसि पूर्वं पूर्वात् ॥१५२॥

[३]नाभौ यथारा निखिलाः स्युरर्पिताः प्राणे तथास्मिन्निखिलं समर्पितम् ।
स कर्म कर्त्ता करणं क्रिया तथा स एव माता स पिता स बान्धवाः ॥१५३॥

प्राणः क्षरं प्राण इहाक्षरं तथा प्राणः परं नास्ति परं किमप्यतः ।
अनेकधा प्राण इहानुवक्ष्यते परो रजास्त्वेष मतः पृथग्विधः ॥१५४॥

इति भूम्नः प्राणे विशेषता

प्राणोऽस्ति[४] सत्यं न ततोऽस्ति सत्यं जिज्ञासितव्यं तु यदस्ति सत्यम् ।
विज्ञाय सत्यं वदतीति तस्माद् विज्ञानमेव प्रथमं तु शिक्षेत् ॥१५५॥
मत्वा विजानाति ततो मतिः प्राक् संपादनीया मतिमान् हि विद्यात् ।
श्रद्धोदये तद्विषये मतिः स्याच्छ्रद्धामतोऽस्मिन् प्रथमं विदध्यात् ॥१५६॥
निष्ठां गताः श्रद्दधते ततः प्राङ् निष्ठैव कार्या न ततः पराक् स्यात् ।
कृत्वा तु निस्तिष्ठति यत्नयोगात् तस्मादिहासौ कृतिमान् पुरः स्यात् ॥१५७॥
यदैव कुर्वन् लभते सुखं चेत् तदा करोतीति सुखं परीक्ष्यम् ।
सुखं तु भूमैव न चाल्पभावे सुखं स भूमा प्रथमोऽवधेयः ॥१५८॥

इति भूम्नः सुखरूपता

[५]यत्रान्यदन्यत् प्रतिपद्यते तत् स्यादल्पकं तन्मतमत्र मर्त्यम् ।
न श्रूयतेऽन्यन्न च दृश्यतेऽन्यद्विज्ञायतेऽन्यच्च न चेत् सभूमा ॥१५९॥

इति भूम्नः स्वरूपम्

---

[१] भूमैव सर्वस्माद् बृहत्वाद् ब्रह्मपदेनोच्यत इति पद्याशयः ।

[२] अथ पूर्वोक्त छान्दोग्यश्रुतावाम्नातः नाम, वाङ, मनः, संकल्प, चित्त, ध्यान, विज्ञान, बलानाम्, ततश्चान्नाप्, तेजः, आकाशस्मराशा प्राणानां महत्त्वक्रमः पद्यद्वयेनानूदितः संक्षेपेण। एषां कुतो महत्त्वक्रम इति तु तत्र श्रुतावेव व्याकृतम्—नेह ग्रन्थकृता प्रपञ्चितम् ।

[३] अथ पद्यद्वयेन प्राणस्यैव भूमत्वं तस्यैव महिमा च प्रोच्येते स्पष्टार्थेन । अत्र च प्राण शब्दो ब्रह्मबोधक एवेति वेदान्तसूत्रेषु निर्णीतम् ।

[४] अथ छान्दोग्यश्रुत्युक्तो जिज्ञास्यक्रमः पद्यचतुष्टयेन स्फुटार्थेनानूदितः ।

[५] अथ पूर्वोक्त छान्दोग्यश्रुतेरन्ते श्रुतं भूम्नः स्वरूपमेवानुवदति—यत्र भेदः प्रतीयते, तत्राल्पत्वं स्वतः सिद्धम्—स्वस्मादन्यदपि किञ्चिदस्तीति स्वस्य व्यापकत्वं नास्त्येव, व्यापक—

यदल्पमल्पं[१] तद्विलवर्तमातं यथा तु भूमा सुखमिष्यते तत् ।
परस्तु भूमाऽस्त्यमृतेऽतिमात्रे ततः परानन्दमयः स आत्मा ॥१६०॥

भयं[२] हि कम्पः स्थितिविच्यवोऽसौ तत्कर्म मृत्युः स इहापविष्टः ।
ध्रुवं प्रशान्तं त्वमृतं ततोऽन्यत् ततः सदानन्दमयः स आत्मा ॥१६१॥

[३]भयं मितस्य प्रबलाद् द्वितीयादिदं त्वमात्रामृतमद्वितीयम् ।
न कम्पयोग्यं न ततो वरिष्ठं ततोऽभयानन्दमयः स आत्मा ॥१६२॥

[४]रसोऽन्नमाधीयत आत्मने यत् तृप्तिर्गतिस्तस्य रसस्य दृष्टा ।
विज्ञानमानन्द इतीह तृप्तौ तत्तृप्तिजानन्दमयः स आत्मा ॥१६३॥

[१]सुखं रसो हीति वदन्ति विज्ञा रसं हि लब्ध्वा सुखिनो भवन्ति ।
रसोऽमृतं कार्यरसानुभावात् ततो रसानन्दमयः स आत्मा ॥१६४॥

इति भूम्न आनन्दत्वमात्मत्वं च

---

त्वाभाव एव चाल्पत्वम् । यत्र वयं किञ्चिद्विजानीमः—तत्र ज्ञेयं ज्ञातुः पृथगिति अल्पत्वं सिद्धम् । एवं श्रवण—श्रोतव्ययोः, द्रष्टृदृश्ययोश्चापि भेदे अल्पत्वमर्थागतम । यत्र तु ज्ञातृ-ज्ञेययोः श्रुतश्रोतव्ययोश्चापि भेदो नास्ति स भूमा । सोऽयं भेदो बलकृतः, रसस्तु भूमा अद्वितीय इति ब्रह्माद्वैतं सिद्धयति ।

१ आत्मैवानन्दमय इति भूयोऽपि प्रतिपाद्यते दार्ढ्याय लोके हि दृश्यते—यस्योपकर-णादेर्यावती अल्पता, तस्य तावदेव दुःखमिति । यावती तु प्रजावित्तयोर्वृद्धिर्भवति तावदेव तेन सुखमनुभूयते । तस्मान्महत्त्वरूपो भूमेव सुखमिति स्पष्टं सिद्धयति । ततश्च यदमृतं रसो नाम सर्वेभ्योऽपि महान्, तस्यानन्दरूपतायां कः सन्देहः ?

२ तत्र भयदुःखयोः सम्बन्धो नास्तीत्युच्यते—भय शब्दो हि कम्पवाचकः, एतच्चाग्रे दुःखसुखाधिकरणे स्पष्टमुपपाद्येत । सोऽयं कम्पः स्थितेर्विच्युतिः—स्थित्यभाव एव कम्पः । इदमेव च मृत्योर्बलस्य रूपम्—इति सर्वं प्रागुक्तम् । इदमेव च दुःखमुच्यते । अन्तःकरण-विचलने हि दुःखमनुभूयत इत्युक्तं च वक्ष्यते । ततश्च बलमेव दुःखम् । तद्विपरीतो रसस्त्वानन्द इति युक्त्यापि सिद्धयतीति ।

३ पूर्वोक्तमेवोपपाद्यते । य आत्मनं परिच्छिन्नं मन्यते, स्वस्माच्च परं प्रबलं मन्यते—तस्य बलिष्ठाद् द्वितीयाद्भयं भवतीति दृश्यते लोके । रसपदवाच्यममृतं ब्रह्म तु अद्वितीयम्, न ततोऽन्यत् किञ्चिदस्तीति तत्र कुतो भयं स्यात् । एतच्च 'द्वितीयाद्वै भयं भवति' बृहदा० १।४।२ इत्याद्यासु श्रुतिष्वेव स्पष्टम् ।

४ सर्वस्य लय आनन्द एव भवतीति ततोऽप्यानन्दस्य ब्रह्मत्वं विव्रियते । आत्मने—आत्मभोगसाधनाय शरीराय तद्रक्षणाय यदन्नमाधीयते—भुज्यत इति यावत् । तस्य गतिः—परिणामः, तृप्तिः । अन्नं लोकदृष्ट्यापि रसवत्, तस्माद्रसस्य परिणामस्तृप्तिः सिद्धा । तृप्तेर्ज्ञानं चानन्दः, तस्मादानन्द एव सर्वस्यापि पर्यवसानम् ।

## (२४) आनन्दकारणताधिकरणम्

[१]स्त्रीपुंसयोर्यत्र न हर्षसंभवस्तदा न गर्भस्थितिरिष्यते क्वचित् ।
गर्भच्युतिः स्याच्च विषादसंस्रवादानन्दतः सर्वमिदं प्रजायते ॥१६५॥

[३]न जीवने यस्य तु हर्षसंभवेश्चिरं न जीवेत् स इहार्ति संप्लुतः ।
प्रतिक्षणं जीवति हर्षमात्रया स सर्वतोऽन्नादिह तृप्तिमश्नुते ॥१६६॥

यदोषधीर्वारि[४] तथाग्निवायू वाचं बलं ज्ञानमिहान्नमत्ति ।
स सर्वतस्तृप्तिमुपेत्य शश्वद्धर्षं स गृह्णाति सहर्ष आत्मा ॥१६७॥

[५]एतेषु वा सप्तविधेषु भोग्येष्वन्नेषुनानन्दरसो यदि स्यात् ।
आनन्द आत्माविभवेन्नतेषुमहांश्च न स्यान्नच तृप्तिमेयात् ॥१६९॥

---

१ लोकेऽपि सुखं रसपदेनोच्यते । 'रसोऽस्माभिर्लब्धः' इत्येव सुखिनां प्रतीतिर्दृश्यते । लोके च यत्सुखम्, तदात्मानन्दस्यैव प्रतिबिम्बरूपं तत्कार्यमेवेति प्रागनेकधोक्तम् । ततश्च यस्य प्रतिबिम्बने सुखम्, तस्य सुखरूपतायां कः सन्देह इति भावः ।

२ अथानन्द एवोत्पादक इत्युच्यते—विषादस्य संस्रवाद्—प्रसराद् गर्भच्युतिभवति । स्पष्टार्थमन्यत् ।

३ आनन्दस्यैव जीवनस्थितिसंपादकत्वरूपं पालकत्वमनेनोच्यते ।

४ अन्नात् तृप्तिः, तृप्तिरेव हर्षः, ततो जीवनमिति स्फुटमेव सर्वेषामनुभव इति ।

५ बृहदारण्यकोपनिषदि प्रथमाध्यायस्य पञ्चमे ब्राह्मणे सप्तान्नविवरणं श्रूयते—तस्यायमाशयो ग्रन्थकृतान्यत्र व्याख्यातः, यद्—अन्नम्, जलम्, अग्निः, वायुः, वाक्, बलम्, ज्ञानम्—इति सप्तापि मनुष्यस्यान्नानि । एतानि प्राप्नुवन्नेवायं जीवति । एकस्याप्यलाभे उद्विजते तदेवैतेन पद्येनोच्यते । अत्रौषधिपदेनान्नमुक्तम् । अन्नस्य जलस्य वायोश्च प्राणधारकत्वं प्रसिद्धमेव । अग्निपदवाच्या उष्णतापि प्राणधारकत्वेन प्रसिद्धा, उष्णताया अभावे प्राणापगमस्य सुप्रसिद्धत्वात् । साप्यन्नादिष्वनुस्यूता भुज्यत एव । एवं कस्या अपि वाचोऽश्रवणे भवति मनुष्यस्योद्वेगः, बलमपि चेदन्नादिभिर्न लभ्यते, तदापि मृत्युः । ज्ञानाभावे च मृत्युः सुप्रसिद्धमेव । तेषामेषां लाभेन तृप्तिर्भवति । तृप्तेश्च हर्षः, तस्माद्धर्षस्य जीवनरक्षकता सिद्धा ।

६ उक्तेषु सप्तविधेषु भोग्येषु अन्नेषु आनन्दं लभते—इत्येवात्मा प्रवर्तते, यत्र त्वानन्दं लभते, तस्मिन् विषये आत्मा न विभवेत् विभूतिसंबन्धस्तत्र न स्यात् । मुख्यस्यात्मनो विभूतिरेव संबन्धो बलरूपे जगतीति संसर्गाधिकरणोक्तं स्मर्तव्यम् । तेनैतत् सिद्धयति यदानन्दरूप एव आत्मा । आनन्दस्यैवानन्देन सजातीयाकर्षणरूपः संबन्ध उपपद्यते । अन्तः करणावच्छिन्नो व्यावहारिकस्त्वात्मा विषयसंबन्धे सति महान् भवति—विकसति विवेचितं प्राक् । स विकासोऽप्यानन्दस्यालाभे न भवति, च तृप्तिरपि आनन्दस्यालाभे भवतीति आनन्दे एव संबन्धादानन्दमयत्वमात्मनः सिद्धयति ।

[१]प्राण्यादिहान्यादपि कः क्षणं वा नानन्दमाकाशमिदं यदि स्यात् ।
श्रृणोति यत्पश्यति वेत्ति यद्वा धृतिं तदाप्नोति सुखं तदिष्टम् ॥१७०॥
[२]आहारतो वाथ विहारतो वा सा निर्वृतिर्यत्र रमेत लोके ।
सर्वत्र लोके रमते हि लोकस्तस्मात्स आनन्द इहास्ति भूमा ॥१७१॥

इत्यानन्दस्यात्मनः सर्वजगत्प्रवर्तकत्वम्

## जगदानन्दताधिकरणम्

[३]चिरं स तिष्ठत्यपि यत्र देशे तत्रैव भूयो रमते स्वभोगैः ।
ततो बहिष्कारकृतौ त्वमुष्य प्रतीयते चेतसि दुःखभावः ॥१७२॥

---

[१] 'को ह्येवान्यात्, कः प्राण्यात्, यद्येष आकाश आनन्दो न स्यात्' (तैत्तिरीयोपनिषत् ब्रह्मानन्दवल्ली ७ अनु०) इति तैत्तिरीयश्रुतिमर्थतोऽनुवदति—अननम्-जीवनम्, प्राणनम्—अभिनवपदार्थोत्पादनम् । श्वासप्रश्वासादिप्रवृत्तिर्वा, उभयमपि आनन्दाभावे क्षणमपि न संभवतीति श्रुतेरभिप्रायः । अत्राकाशपदेनात्मैव गृह्यत इति निर्णीतं ब्रह्मसूत्रेषु आकाशाधिकरणे । स्पष्टार्थमन्यत् ।

[२] अथ वक्ष्यमाणेऽधिकरणे निरूपयिष्यमाणं जगतोऽप्यानन्दमयत्वमुपक्षिपति—आहरतो वा विहारतो वा यत्र निर्वृतिः—तृप्तिर्भवति—तत्रैव लोकः रमते, तत्रैव क्रीडति, तेनैव पदार्थेन संवध्नाति । लोकस्य च जनसमष्टिरूपस्य सर्वत्रैव रमणं दृश्यते, कश्चित् क्वचिद्रमते, तदपरस्तु तदपरत्रेति । नास्त्येव स आहारः क्रीडास्थानं वा, यत्र कस्यापि अभिरुचिर्न स्यात् । अस्माकमत्यन्तं घृणास्पदेष्वपि नरकादिषु कृमिवाराहादीनां रमणदर्शनात् । तस्मात् सर्वत्रैव रमणम्, सर्वत्रैवानन्द इति आनन्दस्य भूमत्वम्—व्यापकत्वं सिद्धयतीति भावः ।

[३] एषां सप्तानां पद्यानामयमाशयः—आत्मनो भोग्येन द्रव्येण सह यदा एकीभावो भवति, तदा तत्र प्रीतिर्भवति, तत्रैव चानन्दानुभवः । प्रीतिरानन्दस्यैव रूपम् । यदा तु भोग्याद् द्रव्यात् पृथग्भावः—तदा दुःखम् । यथा कश्चित् पुरुषः क्वचिदभिनवे स्थाने गतः पूर्वं न रमते, कालेन तु तत्रैव तस्य प्रीतिरुत्पद्यते—यदि केनचित्तस्मात् स्थानात् स बहिष्क्रियेत, तदा तस्य दुखं भवति । तेनैतदनुमीयते—यावत्तत्र ममत्वं नामात्मसंबन्धो नासीत्—तावत्तत्र प्रीतिर्नासीत् । यदा तु क्रमेण ममत्वं प्रवृत्तम्—तदा परस्परं संबन्धादेकीभावे आनन्दरूपा प्रीतिर्जाता । पुनर्वहिष्कारेण भेदप्रसङ्गे दुःखानुभवः । यत् स्थानमाहारादि वा पुरा सुखकमासीत्, बहिष्कारेण तदलाभे तदेव दुःखजनकं भवति । दैवात् पुनरपि यदि तत्रैव गच्छेत्, तदापि सद्यो न रमणम्, अपि त्वरुचिरेव । क्रमेण तु रमणम् । यदि केवलम् आत्मैवानन्दरूपः स्यात्, तदा तस्य सदैकरूपत्वादिदं तारतम्यं न स्यात् । तस्मादिदं सिद्धयति आत्माप्यानन्दमयः, भोग्यमप्यानन्दमयम् । द्वयोर्ममत्वरूप एकीभावे आनन्दानुभवः, पृथग्भावरूपे अन्तरे तु दुःखानुभवः, पुनरेकीभावे पुनरानन्दानुभव इति । तेनानन्दस्य ब्रह्मरूपस्य व्यापकत्वं सिद्धम् । तदेतच्छ्रुत्यापि श्रावितम् । पूर्वोक्त श्रुतेरग्रे तैत्तिरीयोपनिषदि (ब्रह्मानन्दवल्ल्यां ७ अनु०) 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' इति । यद्यपि तत्र श्रुतौ ब्रह्मणा सहैकीभावे अभयम्, भेदे तु भयमाम्नातम् । परं ब्रह्मणो व्यापकत्वात्सर्वत्रैवाभेदबुद्धिस्तया श्रुत्या सिद्धयति । ततश्च श्रुत्युक्तमर्थमनुभवपथ आरोपयितुं ग्रन्थकृता भोग्येन पदार्थेनाप्येकीभावस्थापने सा श्रुतिर्योजिता । पद्यानि स्पष्टार्थानि ।

तत्रात्मनस्तस्यस्वतः स्वभोग्ये विज्ञानतो या ममता विविष्टा ।
निवर्तते सा तदिहात्मनस्तद्भोग्यं पृथक् स्यात्तदिहास्ति दुःखम् ॥१७३॥

यान्येव भोग्यानि पुरा सुखानि तान्येव सम्प्रत्य सुखानि भान्ति ।
भोग्यस्थितात्मस्थितयोश्च तस्मादानन्दयोरन्तरमेतदाहुः ॥१७४॥

तेनाऽयमानन्दमयः स आत्मा तेनेदमानन्दमयं च भोग्यम् ।
एकं पुरासीदुदरेऽन्तरे तु कृते भयं स्यात् तदवैति दुःखम् ॥१७५॥

सुखेन भोग्येन सुखोऽयमात्मा न संभवेदेकभयः क्वचिच्चेत् ।
विशेषदोषादुदरेऽन्तरे तु कृतेन तस्मिन् रमते स दुःखी ॥१७६॥

बहिष्कृतस्त्वेष पुनः प्रदेशे यत्रैव गच्छेन्न रमेत सद्यः ।
अथाक्रमाद् भोग्यकुले स आत्मा ममत्व योगाद्विभवन् रमेत ॥१७७॥

न केवलं तत्सुखमात्मनीनं तस्या विशेषादसुखाऽप्रसङ्गात् ।
आत्मेव तस्मादिह भोग्यवर्गोऽप्यानन्द एवेति मतः सभूमा ॥१७८॥

इति सर्वजगत आनन्दभयत्वोपपादनम्

## (२३) अणिमाधिकरणम्

न[१]यत्र खण्डो न च खण्डयोगः स एष भूमा परिपूर्णरूपः ।
यं यं तु पश्यामि स एष सर्वोऽप्यखण्ड एको रस एव भूमा ॥१७९॥

[२]परे तु पश्यन्ति यदत्र दृश्यते सर्वं हि तत् सावयवं प्रदेशवत् ।
सर्वस्य खण्डाः प्रभवन्त्यखण्डता नास्त्यन्ततः कुत्रचिदत्यणोरपि ॥१८०॥

[३]क्षुद्रेह्यमत्रे पृथुले वरिष्ठे कूपे तटाके लवणं निदध्यात् ।
सर्वत्र तु प्रत्युदकाणुसाम्यात् प्रसारणं स्याल्लवणस्य लोके ॥१८१॥

---

[१] उक्तो भूमा अखण्डः—अनवयवः, खण्डानां योगेन नोत्पन्नः, किन्तु नित्यमेव पूर्णः । स च सर्वत्र व्याप्त इति सर्वोऽप्यर्थो रसरूपेणाखण्ड एव। सच्चिदानन्दानां रसरूपाणां न क्वापि खण्डं संभवतीति भावः ।

[२] अथात्र शङ्कारूपं पूर्वपक्षिणां मतमुपन्यस्यति—लोके यद् दृश्यते, तत्सर्वं सावयवं खण्डवदेव । सर्वत्रावयवाः पृथक् कर्तुं शक्यन्ते । ननु नैयायिकाभिमताः परमाणवस्त्वनवयवाः सन्तीति चेत्तत्राह—अत्यणोरपि परमाणोरप्यखण्डता नास्त्येवेति ।

[३] परमाणोरपि सखण्डतामुपपादयति—एकं क्षुद्रं लवणखण्डं क्षुद्रे जलपात्रे यदि निक्षिप्यते, तत्र स्थिते जले व्याप्नोति, तदेव यदि महति कूपे, ततोऽपि वरिष्ठे तटाके वा निक्षिप्येत—तत्रापि सर्वेषु जलावयवेषु तद् व्याप्नोति । त्यक्तघनीभावस्य तस्यैकत्र स्थितेः स्वभावविरुद्धत्वात् । तदित्थं लवणखण्डस्य अल्पस्यापि यावन्तः कूपतटाकादिषु जलाणवः, तत्र सर्वत्र प्रसरणं भवति, ततश्च चिन्त्यताम्—कियन्तस्तत्र क्षुद्रे लवणखण्डे परमाणवः स्युः, यावन्तोऽपि कल्प्यन्ते—तावन्तोऽपि कथं महति तटाके प्रसृत्य व्याप्तुं प्रभवेयुः, यदि अनन्ताः सन्ति तत्र परमाणव इत्युच्यते, तदा क्षुद्रे पात्रे कथं जलाणुभिस्तेषां सर्वेषां समावेशः। तत्रापि लवणमणुतां

[१]क्षुद्रे गृहे वा प्रवृद्धे वरिष्ठे कर्पूरखिल्यं विशदे निबध्यात् ।
सर्वत्र साम्यादनुमारुताणु प्रसारिणस्तस्य कणा भवन्ति ॥१८२॥

कर्पूरखिल्यं लवणं तदित्थं महावकाशेऽथ महासमुद्रे ।
यत् प्रक्षिपेत् तद्विभवेत् तन्निम्ना ततोऽस्ति नान्तः परमाणुखण्डे ॥१८३॥

[२]परे तु पश्यन्ति यदत्र दृश्यते सर्वं सखण्डं सरसः स एव यः ।
खण्डोऽस्ति खण्डस्तु न तस्य कल्प्यते तथा प्रदेशोऽवयवश्च नेष्यते ॥१८४॥

[३]महर्षयस्त्वाहुरखण्डता वा सखण्डता वास्ति न नास्ति चेति ।
बलात्सखण्डेऽपि रसादखण्डे सर्वत्र बुद्धिर्द्विविधा समीची ॥१८५॥

[४]बलं मितं तेन हि खण्डवत्कृतं प्रदृश्यते सर्वमिदं पृथक्पृथक् ।
बलव्यपाये तदखडमेकवत् स एकसिन्धुर्बहुभङ्गवान्यथा ॥१८६॥

---

गतं न पृथग् दृश्यत एवेति उभयमिदंनोपपद्यते, तेन क्षुद्रे पात्रे येऽणव आसन्, महति तटाके तेऽपि खण्डशो विभक्ताः । ततोऽपि महति समुद्रसदृशे च तटाके सर्वत्र भवति तदवयवानां व्याप्तिः, एकत्रैव क्वचिन्न तदनुमातुं शक्यम्—प्रमाणविरहादिति अणूनां तदवयवानामपि च खण्डपरम्परा प्रवर्तत एवेत्यकामेनापि मन्तव्यं स्यात् । तस्मान्निरवयवं किमपि नानुसन्धातुं शक्यम् ।

[१] द्वितीयं पूर्वसदृशं कर्पूरदृष्टान्तमाह—वायोरणूननुसृत्य कर्पूरखण्डावयवाः क्षुद्रे महति वा गृहे समं प्रसरन्तीति पूर्ववदेवावयवपरम्परा विश्रामो नात्राप्यवसीयते । एवं केनचिदत्यनुभविना वैद्येन शतं द्विशतं वौषधीर्माषमापमिताः समायोज्य चूर्णीकृत्य गुञ्जापरिमिता गुलिका निर्मिताः, तत्रैकैकस्यामस्ति सर्वासामोषधीनां योग इति मन्तव्यमेव, अन्यथा कथं तत्तदौषधप्रभावस्तत्रानुभूयेत । तत्र च गुञ्जामात्रायां गुलिकायां कथं द्विशतौषधावयवसमावेशः, कथं च माषमात्राणामोषधीनां सर्वत्र गुलिकासु व्याप्तिरिति नानुसन्धातुं शक्यमित्यप्युदाहार्यम् । तस्मादवयवावयवपरम्पराया विश्रामो नानुसन्धातुं शक्य इति सर्वेषां वस्तूनां सखण्डता सिद्धा ।

[२] अथ वेदान्तदर्शनमतमाह—परे वेदान्तविदः पश्यन्ति—यदत्र जगति दृश्यते सखण्डम्—तत्सर्वं रसरूपं ब्रह्मैव । सच्चिदानन्दरूपेण रसस्य सर्वत्र व्याप्तत्वात्—'सर्वं खल्विदं ब्रह्म' इति श्रुतिवचनात् । ततश्च खण्डोऽपि रस एव । निरवयवे च ब्रह्मणि न खण्डानि संभवन्तीति कल्पनामात्रमियमवयवावयविकल्पनेति । न हि सत्तायां ज्ञाने आनन्दे वा ब्रह्मरूपे खण्डानुभवोऽस्ति । नामरूपे च माया कल्पिते एवेति न वास्तविके ।

[३] अथ वैदिकविज्ञानदृष्ट्या उभयोर्मतयोः समन्वयमाह । अखण्डता सखण्डता वा यानुभूयते—सच्चिदानन्दरूपेणाखण्डता, नामरूपसमष्ट्यात्मकस्य च सखण्डतेति । तदुभयमप्यस्ति, किमपि नास्ति—इति न, अनुभवस्यापलपितुमशक्यत्वात् । ततश्च द्वयोर्मूलमपि तथाभूतं द्वयं कल्पनीयम् । तदेव व्याकृतम्—रसबलोभयात्मकं सर्वम् । तत्र रसरूपेणाखण्डता, बलरूपेण तु सखण्डतेति द्विधापि बुद्धिरुपपद्यत एव ।

[४] बलं स्वयं मितम्—तच्च रसेऽपि मितिं दर्शयति, तरङ्गा इव जले—इति सर्वं व्याख्यातपूर्वम् । नामरूपात्मकस्य बलस्य पृथक्कारे तु नास्त्येव सखण्डता, सद्रूपेणैकत्वात्, तरङ्गापाये जलस्यैकतैवेति ।

[१]भूताणवो ग्रन्थनकृद्बलक्षयापि खण्डिताः स्युः परमाणवः पृथक् ।
ते चाणवो ग्रन्थिविमोकतः क्रमादभिद्रुताः पुद्गलतां त्यजन्ति हि ॥१८७॥

[२]आकाशवत्सर्वगते रसे पुनर्विलीयमानाः प्रभवन्ति सोऽणिमा ।
एषोऽणिमा सोऽस्ति रसो य उच्यते भूमाविभुर्यो बहिरन्तरा ततः ॥१८८॥

क्षुद्रे[३]प्यभत्रे विशदे वरिष्ठे कूपे तटाके लवणं निदध्यात् ।
सर्वत्र तु प्रत्युदकाणुसाम्यात् प्रसारणं स्याल्लवणस्य मन्ये ॥१८९॥

क्षुद्रे गृहे वा प्रवृटे वरिष्ठे कर्पूरखिल्यं यदि वा निदध्यात् ।
सर्वत्र साम्यादनुमारुताणुप्रसारिणस्तस्य कणाः भवन्ति ॥१९०॥

भूमाणिम्नोः स्वभावविशेषभावादैकरूप्यम्

---

[१] परमाणूनामपि सखण्डतां पूर्वोक्तामुपपादयति—अणूनामवयवानां बलेन परस्परं संघटनं ग्रन्थिरूपं क्रियत इत्यवयविष्वेकता भासते। बलान्तरेण ग्रन्थिकृतो बलस्य नाशने तु अवयविनः खण्डिता भवन्तीति—परमाणुपर्यन्तमवयवविभागेनावयवविनाशप्रक्रिया। परमाणवोऽपि तु बलग्रन्थिसंपादिता एवेति। तत्रापि ग्रन्थिविमोके तद् द्रव्यताव्ययेति, यथा पार्थिव—परमाणूनां ग्रन्थिविमोके तेषां द्रव्यत्वं जायते, तस्य जलरूपस्यापि ग्रन्थविमोके तु तेजस्त्वम्—अनेन क्रमेण वायोरणूनामपि ग्रन्थिविमोके ते परमाणवः, पुद्गलताम्—घनताम्—दृश्यताम्—स्थानावरोधकतारूपां परित्यजन्ति—तदा नामरूपपरित्यागेन तेषां भूम्न्येव लयो भवतीति भावः। तदुक्तं श्री शङ्कर भगवत्पादैः शारीरकभाष्यस्य द्वितीयाध्यायद्वितीयपादे वैशेषिक—खण्डनप्रकरणे—परमाणोरपि विनाशोपपादाने (२।१५ सूत्र भाष्ये) "नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्याम् (कारणविभागकारणविनाशाभ्याम्) विनष्टुमर्हतीति नियमोऽस्ति—इति काठिन्यविलयनवन्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते" इति। आद्यत्वे तु वैज्ञानिकाः परमाणुविभागेन महान्ति कार्याण्यनुतिष्ठन्तीति भारतीयानामाचार्याणां सूक्ष्मदर्शिता सिद्ध्यतीत्यास्तामप्रकृतम्।

[२] एवन्तु पूर्वोक्त लवणकर्पूरादिरीत्या परमाणूनामपि ग्रन्थिविलयनरीत्या च विलीयमाना अणवोऽन्ततः क्व यान्तीति विचारे आकाशवत् सर्वगते रसे एव विलीयन्ते इत्यभ्युपगन्तव्यं स्यात्। ततश्चाणिम्नोऽपि परिणामोऽन्ततो भूमैवेति सिद्ध्यति। तत्त्वानां विलयनेन निष्पन्नोऽणिमा, यतः परमणुत्वं नास्ति, रसस्तु निरवच्छिन्नो भूमेत्युच्यत इति।

[३] अणिमस्वरूपं बोधयितुं पूर्वोक्तं (१८१-१८२) पद्यद्वयं पुनरावर्त्यते। तदेव तदणिम्नो रूपं छान्दोग्योपनिषदि षष्ठे प्रपाठके महर्षिणोद्दालकेन श्वेतकेतुं प्रति बहुधा व्याख्यातम्—तस्यैवाशयोऽत्र प्रकरणे ग्रन्थकृता शब्दान्तरैरनूदितः। अणिमापि भूम्नो रूपेण परिणमतीत्यपि तत्रानेकैर्दृष्टान्तैः स्फुटीकृतम्। उक्तो लवण दृष्टान्तोऽपि तत्रोपात्तः—

"लवणमेतदुदकेऽवधायाय मा प्रादरुपसीदथा इति—सः तथा चकार, तं होवाच यद्दोषा लवणमुदकेऽवाधी, अङ्ग ! तदाहरेति। तद् भावमामृश्य न विवेद, यथा विलीनमेवाङ्ग। अस्यान्तादाचामेति, कथमिति, लवणमिति। मध्यादाचामेति कथमिति—लवणमिति, अन्तादाचामेति, कथमिति—लवणमिति। अभिप्रास्यैतदथ मोपसीदथा इति। तच्च तथा चकार।

[१]भूताणुभिन्नाः पुरुषाश्च खण्डितास्त्रुट्यन्ति नानात्मकतां व्रजन्ति ते।
खण्डाश्च संयुज्य मितिव्यतिक्रमादेकात्मतां यान्ति बृहन् स जायते ॥१९१॥

इत्थं तदल्पाल्पमितिं विलोप्य प्रवृद्धरूपः क्रमशोऽन्ततो यः।
उच्छेदतः सर्वमितेरमात्रोऽवशिष्यते पूर्णरसः स भूमा ॥१९२॥

आपः समुद्राद्रविरश्मिनोत्थिता दिवंगता भूमितलेऽनुवर्षिता।
प्राच्यः प्रतीच्यः परितः प्रवाहिताः समुद्रमेवानुविशन्ति सर्वतः ॥१९३॥

सर्वा हि तास्ताः सरितः समुद्राद्वुद्भूय भूयोऽप्यपियन्ति तस्मिन्।
समुद्रभूता न पृथक् स्वरूपैस्ता लक्षिताः स्युश्च्युतरूपसंज्ञा ॥१९४॥

[२]एवं प्रजाः सर्वविधा हि तास्ता यतः प्रजाता अपियन्ति यत्र।
यत्राप्ययेवाच्युतरूपसंज्ञाः पृथक् स्वरूपैर्न च लक्षिताः स्युः ॥१९५॥

य एष सर्वप्रभवः प्रतिष्ठा परायणं सर्वगतं च सूक्ष्मम्।
यस्मिन् प्रजास्ताः सकला अपीता विवेकमन्तर्न पुनर्लभन्ते ॥१९६॥

[३]यथेह नाना कुसुमाहृता रसा मध्वकृता नात्मविवेकमीशते।
तत्सत्यमात्मा स परः स एषोऽणिमैतदात्म्यं त्विदमस्ति सर्वम् ॥१९७॥

यथेह तोये लवणं विलीयते यावज्जलं तद्विभवत्यलं समम्।
अत्रैव तन्नात्र किलेति नोदके निभालयन्तेऽत्र तथाऽणिमा रसः ॥१९८॥

[४]यथा तरोरस्य रसः स्रवत्ययं मूले च मध्ये च तदग्रके समम्।
रसेन जीवन्नमुना स मोदते तथा रसेनेदमनन्तविश्वकम् ॥१९९॥

शाखां प्रशाखामपि यामयं रसो जीवस्त्यजेत् सा म्रियते विशुष्यति।
तथात्मभूतात्तु रसात् परिच्युतं जगत्यलं कर्मबलं विनश्यति ॥२००॥

---

तच्छश्वत्संवर्तते तं होवाच—अत्र वाव किल सत्सोम्य न निभालयसे, अत्रैव किलेति। स य एषोऽणिमा ऐतदात्म्यमिदं सर्वम्, तत्सत्यं स आत्मा, तत्त्वमसि श्वेतकेतो इति।" (छान्दोग्य उ० ६।१३)। अत्र अणिम्न एव भूमत्वमुक्तम्। एवं कर्पूरदृष्टान्तोऽप्युक्तश्लोकेऽनुसन्धेयः।

[१] भूम्नोऽणिम्नश्चान्योन्यजन्यतां लौकिकैर्दृष्टान्तैरुपपादयति। उपनिषदुक्ता एव दृष्टान्ताः प्रायेणात्र शब्दान्तरैरनूदिताः। स्पष्टार्थान्यत्र प्रकरणे सर्वाणि पद्यानि न व्याख्यामपेक्षन्ते।

[२] लौकिकान् दृष्टान्तान् परमकारणे ब्रह्मणि योजयति।

[३] कुसुमानां रसा मधुन्येकीभवन्तीत्यपरो दृष्टान्तः। सूक्ष्मत्वेनाविज्ञेयतया अयमेवाणिमा इत्युच्यते। सर्वगते प्रलीनत्वात्तु अयमेव भूमेत्युभयोरैक्यमेवानुसन्धेयम्।

[४] यथा रसेन त्यक्तो वृक्षो न जीवति तथा मूलभूतेन रसेन विना बलमपि न जीवितुं शक्नोतीति भावः।

[1]फले वटस्याणुतरा हि धाना धानासु रूपं यवदृश्यमस्ति ।
निभालयन्ते नयमत्र यत्नादेषोऽणिमा तस्य वटः प्रजज्ञे ॥२०१॥

भूमाणिमा स्यादणिमा च भूमा पृथग्बलोऽयं बलमस्ति यस्मिन् ।
स एक एवास्त्यणिमा स भूमा रसः स आनन्द इति प्रतीयात् ॥२०२॥

इति भूमाणिम्नोरुदाहरणम्

## (२४) [2]रसभेदाधिकरणम्

[3]द्विधाऽयमानन्द इहास्ति पाप्माप्रसङ्गतो या परमास्ति शान्तिः ।
स एव मुख्योऽथ रसप्रवेशान्मृत्यावुदेति क्षणिकः प्रसादः ॥२०३॥
[4]आनन्द एवामृतमस्ति यस्मात् संसृज्य तस्माद्रसमेष मृत्युः ।
यावन्तमात्मानमुपैति तावानानन्द आत्मा विभवेषु तेषु ॥२०४॥

---

[1] वटवृक्षफलस्य याः सूक्ष्माधानाः, तास्वपि च सूक्ष्मतममनुस्यूतम्—सोऽणिमा । स एव च क्रमेण जलपृथिव्यादियोगेन महावटरूपतां गच्छतीत्येनमेव भूम्नोऽणिम्नश्च परस्परं परिवर्तनदर्शनादुभयोरैक्यमेवावसीयत इति भावः ।

[2] रसबलयोः स्वरूपं पूर्वस्मिन् प्रकरणे निरूपितम् । इदानीं कंचिद्विशेषं प्रवक्तुं पुनस्तद्भेदानवतारयति । गम्भीरेषु विषयेषु पुनः पुनरनुसन्धानादेव बुद्धिप्रवेश इति नात्र पुनरुक्तिदोषाय भवतीति प्रागेवावोचाम ।

[3] रसः—आनन्दश्चेत्येकार्थौ शब्दावित्यारम्भ एवोक्तम् । आनन्दश्चायं द्विविधोऽनुभूयते—शान्त्यानन्दः, समृद्ध्यानन्दश्च । पाप्मनः—बलस्य यदा रसे लयः—तदा बलं न प्रतीयत एवेति रस एवैकस्तिष्ठति, सोऽयं परमानन्द एव शान्त्यानन्द उच्यते । क्षोभरूपस्य बलस्याभाव एव शान्तिः, सोऽयं स्वरूपभूत आनन्द इति मुख्यः । अयं समाधिसुषुप्त्यादिष्वनुभूयते । अत एव विषयेषु परमानुरक्ता अपि विषयसंग्रहसमर्था अपि च धनिकाद्याः सर्वं विषयानन्दं परित्यज्य सुषुप्तिमभिवाञ्छन्त्येवेति अस्य मुख्यत्वे स्फुटं निदर्शनम् । द्वितीयं समृद्ध्यानन्दमुदाहरति—मृत्यौ—बले, रसस्य प्रवेशात् क्षणिकः प्रसादो य उदेति स समृद्ध्यानन्दः । अयं वृत्त्यात्मकः, अनुभवगोचरः ।

[4] समृद्ध्यानन्दस्य स्वरूपं विव्रियते—रस एको विभुः, न तत्र देशकालकृतः परिच्छेदः । बलं तु अत्यल्पप्रदेशं क्षणिकं चेत्याद्युक्तं प्राक् । तदिदं बलं रसाश्रयेणैव सत्तावद् भवति, तत्रैव बलानां चयनेन अधिकप्रदेशावगाहः, प्रवाहनित्यत्वं चास्य भवतीति जलतरङ्ग दृष्टान्तेन शक्यं बोद्धुम् । तस्मादप्रतिष्ठितस्यापि क्षणिकस्य बलस्य रस एव प्रतिष्ठापकः, तेन रसोऽमृतम्, बलं तु क्षणभङ्गुरत्वान्मृत्युरिति व्यवहृतम् । तदेवाह—यस्मात् कारणाद् आनन्दो रस एवामृतमस्ति, तस्मादेष मृत्युः—बलम्, तेन संसृज्य—यावन्तम् आत्मानम् उपैति शतशो बलानां चयनेन यावन्तं प्रदेशमभिव्याप्नोति, तावति रसप्रवेशात्—तरङ्गेषु जलस्येव रसस्य बलविभूतिसंबन्धेन प्रवेशात् तावानेवानन्दोऽनुभूयते जनैः । यद्यपि मुख्यतया बलस्यैव रसे प्रवेशः, रसस्तु पूर्वमेव सर्वप्रदेशावगाहीति अभिनवप्रदेशावगाहरूपः प्रवेशस्तत्र संभवति, परं बलपूर्वमुत्पन्नम् इति बलावच्छिन्नताभिनवा रसे जातेत्येव प्रवेशपदप्रयोगः । अन्योन्याश्रयतया परस्परप्रवेशो व्यवहारसौकर्याय समुपादीयते । तत्र च परस्परसंबन्धे रस आत्मेति व्यवह्रियते, प्रचितानि

[१]शरीरमादौ वनिता तनूजः क्षेत्रे हिरण्यं पशवो गृहाणि।
हस्त्यश्वदासा महिमात्मनोऽयं यत्रैष आत्मा विभवेद् विजानन् ॥२०५॥
[२]यावद्विजानाति ममेदमेवं वित्तं स तावनहमस्मि चेति।
सा तावती तृप्तिरमुष्य तस्माद्विज्ञानमानन्द इति प्रसिद्धिः ॥२०६॥
[३]विज्ञानमानन्दमितीष्यते वा विज्ञानमानन्द इतीष्यते वा।
न संशयोऽत्र क्रियतामयं यत् क्षरेऽक्षरे चापि परं निगूढम् ॥२०७॥

---

बलानि तु अस्य विभवाः। विभूतिसंवन्धेनात्र रसप्रवेशाद्विभवव्यपदेशः। विभूतिसम्वन्धः सम्बन्धप्रकरणे व्याख्यातोऽत्रानुसन्धेयः।

[१] गद्यमये पुरुषप्रपञ्चाधिकरणे क्षरपुरुषस्याध्यात्मिकाः पञ्च कला व्याख्याताः, बीजचिति, देवचितिः, भूतचितिः, प्रजा, वित्तम्—इति। तत्राद्यास्तिस्रः कारणशरीरम् सूक्ष्मशरीरम्, स्थूलशरीरमित्युच्यन्ते। प्रजायां च पत्नी, पुत्राद्या अन्तर्भवन्ति—हिरण्यम्, पशवः—इत्यादि वित्तस्य विवरणम्। एतत् सर्वं बलस्यैव चितरूपम्। तदेतदात्मा—यदा विजानाति स्वत्वेन परिगृह्णाति—तदा न तस्यैतेषु विभूतिसंवन्धेन प्रवेशः, ततश्च सर्वोऽयमात्मनो विभवो महिमा वोच्यते।

[२] विज्ञानानन्दयोरैक्यमाह—प्रजावित्तादिकं यावन्ममत्वेन न गृह्णाति, तावदस्य न तत्र विभूतिसंवन्धः, न वा तृप्तिः। यदा तु तन्ममत्वेन स्वसम्वन्धित्वेन जानाति, तदा तत्रात्मनो विभूतिसंवन्धात् तृप्तिर्नाम आनन्दो जायते। यावति च वित्तप्रजादौ ममत्वम्, तावत्यधिका तृप्तिरुदेति। सोऽयं बले रसप्रवेशात् समृद्धयानन्दः। अयं च ज्ञानरूपसंबन्धसत्त्व एव। किंचिदभिनवं भूमिहिरण्यादिलब्धमपि यावन्ममत्वेन न ज्ञायते—तावन्नानन्दानुभवः, ममत्वेन ज्ञाते तु आनन्दानुभव इति ज्ञानमेवानन्दरूपतया परिणतं भवति, तस्माद् द्वयोरैक्यमेव। अहन्ता, ममत्व चाप्येकैवेत्यत्र सूचितम्। ममत्वेन ज्ञाने तत्रात्मविभूतिरित्यात्मनि तत्प्रवेशादहन्त्वेनैव ममत्वं परिणतम्। अहं पदार्थे च बहूनां प्रवेशे समुदायेऽहन्त्वप्रसक्तौ प्रत्येकं तदवयवत्वा-न्ममत्वं व्यवह्रियते। शरीरविशिष्टस्यात्मनोऽहन्त्वे शरीरं तदवयव इति ममेदं शरीरमित्यपि व्यवह्रियते—एवं वित्त्यादिष्वपि द्रष्टव्यम्। शरीरे सुदृढात्मविभूतिरिति तत्राहन्त्वसंस्कारः सुदृढ़ः, प्रजावित्तादिषु तु प्रायेण ममत्वप्रत्यय एव सर्वस्य, अहन्त्वप्रतीतिस्तु कदाचिदेवेति दृढ-शिथिल-संस्कारकृत एवायं भेदः। वस्तुतस्तु आत्मनः स्वरूपेऽनुप्रवेशातिरिक्तः कोऽप्यात्म-संबन्धो दुर्वच इति ममत्वमहंकृतिरेव परिणामोऽवसेयः। शरीरे पूर्वमहन्त्वग्रहः, तदनुविशेष-विवेचनेन ममत्वग्रहः, वित्तादौ तु पूर्वं ममत्वग्रहः, ममत्वदार्ढ्ये तु कदाचिदहन्त्वग्रह इति पौर्वापर्यमेव संस्कार कृतम्। वस्तुतस्तु अहन्ता ममता चैकरूपैवेति। यावांश्चात्मनः प्रजावित्तपर्यन्तस्य विस्तारो येन ज्ञायते—तावत्येव तस्य तृप्तिरिति विज्ञानमानन्दश्चैकरूपे एवेति स्पष्टमनेन सिद्धयतीति भावः। अधिकपरिग्रहज्ञानेऽधिका तृप्तिरनुभवसिद्धा। अत एव श्रुत्यापि "यो वै भूमा तत्सुखम्, नाल्पे सुखमस्ति" इत्युक्तम् (छान्दोग्योप० ७ प्रपा० २३ ख० १ क०)।

[३] विज्ञानज्ञानमानन्द ब्रह्म (बृह० ३–९–२८) इत्यादि श्रुतिषु आनन्दमिति नपुंसक-लिङ्गं प्रयुक्तम्, तच्च आनन्द शब्दस्य नित्यपुलिङ्गत्वान्नोपपद्यते। तस्मात्तत्र अर्श आद्यजन्त

विज्ञानमानन्दमितीष्यतेऽवरं विज्ञानमानन्द इतीष्यते परम् ।
[१]ज्योतिस्तु विज्ञानमिदं परं ध्रुवं रसेन भूम्ना न विभिद्यते क्वचित् ॥२०८॥

[२]यतः स आत्मा विभवत्यमीभिर्देह प्रजास्त्रीपशुमेदिनीभिः ।
सम्पद्यते तेन महानयं यत् स्वं वैभवं तन्महिमा च संपत् ॥२०९॥

[३]यतो ममत्वं क्रमते तदेषु तेनात्मनोऽहं कृतिरेषु दृष्टा ।
तेषां तदेकस्य च हानितोऽयमात्माल्पवद् भाति तदस्य दुःखम् ॥२१०॥

तस्मात्तदेकैककलाविनाशक्रमेण यावत् क्रमते विनाशः ।
[४]आत्मार्तिमायाति सतान्तरेणोदरे विभूत्याः स्वमहिम्नि तावत् ॥२११॥

[५]सार्तिः परा या पुनरस्य मृत्युस्ततोऽन्यथाऽऽनन्दकलासमृद्धिः ।
मृत्युर्न चेत्तर्हि मतास्य सत्ता सत्तैव सानन्द इतीष्यते तत् ॥२१२॥

सैवोपलब्धिर्यदिहास्ति यद्वोपलभ्यते यत् तदिहास्ति सत्ता ।
यद्भातिसिद्धास्तिरथाऽस्ति सिद्धा भातीरसस्तूभयसिद्ध एषः ॥२१३॥

---

आनन्द शब्द आस्थेयः । ततश्च विज्ञानरूपे ब्रह्मणि आनन्दधर्मिता सिद्धयति, न तु आनन्दरूपतेति न्यायसिद्धान्तमुक्तावल्यादिपूक्तम् । तदेतत्प्रतिक्षिपति अयं भावः—यथा तत्र विज्ञानमानन्दमित्युपलभ्यते—'तथा आनन्दो ब्रह्मेति व्यजानात्' (तैत्ति० उप० ३।६) इत्याद्यासु श्रुतिषु पुल्लिङ्गोऽप्यानन्द शब्दो ब्रह्मविशेषणतया श्रूयते । तेन आनन्दरूपतापि ब्रह्मणः सिद्धयत्येव । ततश्च द्वयस्याप्युपपत्तिरित्थं कर्तव्या-–यदव्ययपुरुष आनन्दरूपः, तस्यैका कला आनन्द इति प्रागेव पुरुषप्रकरणे विवृतम् । अक्षरः, क्षरश्च आनन्दधर्मिणौ, तत्राव्ययस्यानुप्रवेशात् तत्रानन्दोऽपि धर्मतया प्रविष्ट इति । ततश्च विज्ञानमानन्दमित्यादौ अक्षरः क्षरो वा विवक्षितः । आनन्दो ब्रह्मेत्यादौ तु अव्ययः, एवम्—'आनन्दं ब्रह्मणे विद्वान्' इत्यादौ अवयवतया विवक्षितायाः कलाया भेदने निर्देश इत्येवं सर्वमप्युपपद्यते—तदेतत्पद्यद्वयेनोक्तम् । छन्दसि सर्वेषां शब्दानां लिङ्गस्यानियततया वा समाधेयम् ।

[१] रसः, आनन्दः, भूमा, विज्ञानम् , ज्योतिः—इति समानार्था एव विभाव्याः ।

[२] एतत्सर्वं पूर्वं स्पष्टीकृतम् ।

[३] ममता, अहन्ता चैकत्रैव क्रमेण समाविशेते—इत्युपपादितं प्राक् । प्रजावित्तपर्यन्तमात्मविभूतिः, तत एव संपदादेरपि विनाशे आत्मनोंऽशहानिरित्यात्मनि वैकल्यं भवति-–इति ।

[४] यद्यपि तत्संपदादि परकीयत्वेनाद्यापि स्थितम्—तथापि स्वस्य तस्य चेदानीमन्तरं व्यवधानं जातमिति दुःखमुत्पद्यते—तदेतच्छ्रुत्या श्रावितम् "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" इति (तैत्तिरीय ब्रह्मानन्दवल्ली ७ अ०) ।

[५] मृत्युस्तु परा अर्तिः, तत्राहि भूतचितेरपि वियोगो भवतीति । यतश्च मृत्युः परार्तिरूपा प्रसिद्धा—तत एव तद्वैपरीत्येन समृद्धिरानन्द इति स्पष्टं सिद्धयतीति ।

[१]सैवोपलब्धिर्यदिहास्ति यद्वोपलभ्यते यत् तदिहास्ति सत्ता ।
यद्भातिसिद्धास्ति रथास्तिसिद्धा भाती रसस्तूभयसिद्ध एषः ॥२१४॥

---

[१] रसः सच्चिदानन्दरूपः श्रुतिस्मृतिषु व्याख्यायते—सत्ता, चेतना, आनन्द इति धर्मत्रयं तेन फलति। न इमे सत्ता चेतनानन्दाः परस्परं भिन्ना अभिन्ना वेति विस्तरेण संशय-तदुच्छेदवादे विवेचितम् । तदेवेहापि संक्षेपेण ग्रन्थे संकेत्यते । यद्यपि व्यवहारे सत्ता सतो वस्तुनो धर्मः, ज्ञानं चेतना वा आत्मधर्मः, आनन्दोऽप्यात्मधर्मः, किन्तु ज्ञानादानन्द इति पूर्वापरभावाज् ज्ञानाद्भिन्न एवेति त्रयाणां भेद एव ख्याप्यते—न्यायादिषु दर्शनेष्वपि भिन्नतैवैषां निरूपिता, किन्तु विचार्यमाण एषामविनाभाव एव प्रतीयत इत्याह—यः पदार्थोऽस्ति, स एवोपलभ्यते, न त्वसन्नुपलभ्यते—इत्युपलब्धेः सत्ताश्रितत्वं प्रतीयते । 'यस्माज् ज्ञायते, तस्मादासते,' ज्ञानमन्तरेण न कथमपि सत्ता सिद्ध्येत् इति च सत्ताया ज्ञानाश्रितत्वं प्रतीयते । ततश्चोभयोरन्योन्याश्रितत्वेनाविनाभावरूपतैकता सिद्ध्यतीति पद्य पूर्वार्द्धे उक्तम् । अनयोर्भेद-वादिनस्तु वदन्ति यत् केचन पदार्थाः केवल सत्तासिद्धाः—यथा गहनेऽरण्ये वृक्षेषु स्थिताः सूक्ष्मजन्तुप्रभृतयः न ते केनाप्युपलभ्यन्ते अथापि सन्त्येव । केचित्तु केवलं ज्ञानसिद्धाः, यथा दृश्यमानेषु पदार्थेषु एकत्व—द्वित्वाद्याः संख्याः, दीर्घत्वलघुत्वादीनि परिमाणानि च । एतानि हि पदार्थान्तरापेक्षया मनुष्यैरेव बुद्ध्या प्रकल्प्यन्ते, न तु तेषु वस्तुषु एकत्व—दीर्घत्वादिः कोऽपि धर्मोऽस्ति । यत्तु नैयायिकास्तत्रापेक्षाबुद्ध्या एकत्वादेरुत्पत्तिं मन्यन्ते—तत्केवलम् "असन्न प्रतीयते' इति नियमसंरक्षणाय बालप्रतारणामात्रम्—यावदपेक्षाबुद्धिस्तावदेव तेषां स्थितिरिति बुद्ध्यतिरिक्तकल्पना अपदार्थकल्पनैव । सत्तासिद्धा एव अस्तिसिद्धाः इति ज्ञानसिद्धाश्च भातिसिद्धा इत्यत्र व्यवहृताः । केवलं सन्त्येव न तु ज्ञायन्ते, केवलं भान्त्येव, न तु सन्तीति तदर्थात् । ये तु सन्त्यपि, ज्ञायन्तेऽपि च, ते घटपटाद्या उभयसिद्धाः । तथा च सत्ताया उपलब्धेश्चाविनाभावो न विद्यत इति पृथक्त्वमेवानयोरास्थेयमिति । तदेतत्पद्यस्यो-त्तरार्द्धेन प्रतिक्षिपति ग्रन्थकृत् । यया अस्त्या अर्थात् सत्तया भवद्भिः पदार्थाः साध्यन्ते सा सत्ता स्वयं केवलं भातिसिद्धा । न हि घटपटादिषु अस्माकमस्तिबुद्धिरस्तीत्येतदतिरिक्तः कोऽपि सत्ता नामकः पदार्थस्तेषु द्रव्येषु केनापि दृष्टः । प्रतिक्षिप्ता च विस्तरेण दर्शनान्तरेषु नैयायिकाभ्युपगता सत्तेति तत्रैव जिज्ञासुभिर्निरीक्ष्य संपादनीया तृप्तिः । नैयायिका अपि च सत्तायाः सत्तां नाभ्युपगच्छन्ति—अनवस्थादिभयादिति लभतेऽपि सत्ता न सत्तासिद्धा—अपि तु सिद्धैव । तदुक्तं भगवता कणादेन 'सामान्यं विशेष इति बुद्ध्यपेक्षम्' इति (वै० सू० १ अ० २ पा०) । तदेतदुक्तम्—यद्भातिसिद्धा अस्ति—सत्ता इति । भातिपदेन च यज्ज्ञान-मुच्यते, तदयं त्वात्मनि केवलं सत्ता—न तु ज्ञानस्य ज्ञानान्तरमस्ति । अनवस्थाभिया नैया-यिकाभ्युपगतस्य अनुव्यवसायस्य दर्शनान्तरेषु निराकरणात् । तस्माद् 'अस्तिसिद्धा भातिः' इति सम्यगुक्तम् । ततश्च सत्ताया ज्ञानसिद्धत्वाज् ज्ञानस्य च सत्तासिद्धत्वादुभयोः परस्परा-श्रितत्वरूपोऽविनाभाव एव सिद्ध्यति न तु पार्थक्यमित्येकत्व एव पर्यवसानम् । रसो नामा-नन्दस्तु अस्त्यपि, ज्ञायतेऽपि च, परं न सत्ताज्ञानाभ्यामतिरिच्य ज्ञायते—ज्ञानस्यैवानन्दरूपताया अनुपदमुपपादितत्वात् । तस्मात् त्रयस्यैकरूपतैव सिद्ध्यतीति भावः ।

न[१] भाति पूर्वास्ति रथास्ति पूर्वा न भातिराभ्यां न विनाकृतो वा ।
रसोऽपि लभ्येत मतं तदेकमव्याकृतं व्याक्रियते त्रिधा तु ॥२१५॥

आनन्दविज्ञानरसप्रतिष्ठास्वेकत्वमित्थं यदुदाहरन्ति ।
तच्चाविनाभाववशेन बोध्यं न चान्यदन्येन विनाकृतं स्यात् ॥२१६॥

[२]ज्योतिः प्रतिष्ठा विधृतिश्च भिन्नाः शक्यं न वक्तुं न विचिन्तितुं वा ।
किं स्यादभातं कथमप्रतिष्ठं भायान्नभायादधृतं न च स्यात् ॥२१७॥

[३]एकैव सत्ता प्रथते यदेषां तस्मात्त्रयं तत्पुनरेकमिष्टम् ।
विज्ञानमेषां त्रिविधं पृथक्स्यात् तस्मात्त्रिधा व्याक्रियते तदेकम् ॥२१८॥

[४]सत्ता प्रभिन्ना प्रतिपत्तिभेदतः सत्ता प्रभेदादपि धीः प्रभिद्यते ।
रसस्तु भिद्येत तयोः प्रभेदतस्तथा च सामान्यविशेषसंभवः ॥२१९॥

रसे प्रतिष्ठावशतः पृथक्त्वं क्वचित्तु विज्ञानवशात् पृथक्त्वम् ।
क्वचित् पुनः स्यादुभयोः पृथक्त्वाद्रसे पृथक्त्वं तदिदं निरूह्यम् ॥२२०॥

---

१ पूर्वोक्तमेव स्पष्टयति—सत्ताया उपलब्धेश्च पौर्वापर्यं न बुद्धावुपारोहति—'यस्माज् ज्ञायते–तस्मादस्तीति' यद्यपि व्यवह्रियते—परं ज्ञानानन्तरं यदि सत्ता, तर्हि पूर्वमसदेव कथं ज्ञातम्? तस्माद् भातिपूर्वा अस्तिर्न शक्यते वक्तुम्। यदि तु 'अस्ति इति ज्ञायते' इति सत्तायाः पूर्वत्वमुच्येत—तदपि न सम्यक् ज्ञानातिरिक्तो न कोऽपि सत्तानामकः पदार्थ इत्यनुपदमुक्तत्वात्। तस्मादस्तिपूर्वा न भातिरिति सम्यगुक्तम्। यदपि चोक्तम्—अरण्ये गहनेषु वृक्षेषु स्थिताः कीटाद्याः न केनापि ज्ञायन्ते, अथापि सन्तीति—तदेतदपि न क्षोदक्षमम्। यदि केनापि न ज्ञायन्ते तर्हि सन्तीति कथं वक्तुं शक्यन्ते। अनुमीयन्ते चेत् तर्हि अनुमितिरपि ज्ञानमेवेति भातिसिद्धता समागतैव। प्रत्यक्षेणानुमित्या शाब्देन प्रमाणेनापि च यन्न ज्ञायते तस्य सत्ता नैव व्यवहर्तुं शक्येति। ततश्चेदमेव मतं शिष्टानाम्—यदेकमेव मूलतत्त्वं त्रिधा व्याकृतम् न तु परस्परमेषां भेदोऽस्तीति। एतदेवाग्रिमेणापि पद्येन विवृतम्।

२ ज्योतिः प्रतिष्ठाविधृतीनामप्यैक्यं पूर्वं विवृतं स्मारयति। यद्यपि ज्योतिर्विधृतिप्रतिष्ठानां मनःप्राणवाग्रूपता पूर्वं विवृता, तथापि सत्ता चेतनानन्दरूपतापीदानीं तेषामुच्यते—सर्वेषामेषां रसरूपतया अविनाभावादिति।

३ सर्वेषां सद्रूपेणैकत्वम्, विज्ञानभेदात्तु पार्थक्यमिति भाव्यम्। एकस्यापि विभिन्नै रूपैर्भासनात् प्रकारभेद एव भानेऽनुसन्धेय इत्यर्थः।

४ पूर्वोक्तमेव स्पष्टप्रतिपत्तये विव्रियते—क्वचिज् ज्ञानभेदात् सत्ताभेदो भासते, क्वचित्तु सत्ताभेदादेकस्मिन्नपि ज्ञाने भेद इव भासते। अनयोर्भेदाच्च रसेऽपि भेद इव प्रतीयते। अस्माद्रसे भेदप्रत्ययादेव सामान्यविशेषभावो भवतीत्यर्थः। विभिन्नसत्ताकत्वेऽप्यनन्तानां गोव्यक्तीनामाकृत्यैकतया बुद्धिरेकाकारा भवतीति आकृतिः सामान्यमित्युच्यते। एकस्यामप्याकृतौ शृङ्गकम्बलादि किञ्चिद्वैलक्षण्येन विभिन्नता भवतीति ते विशेषा उच्यन्ते। सोऽयं सामान्यविशेषभावो बुद्धिकृत एव रसे समारोप्यत इति भावः।

[१]उष्णीषवासो वरतन्तुतूलमृद्विज्ञानभेदेऽपि न सत्तया पृथक् ।
सत्तास्वनन्तास्वपि गौरितीष्यते यदेकमेतत् प्रतिपत्त्यपेक्षया ॥२२१॥

[२]तेनाऽत्र धर्मा अमृता इमे त्रयो भिन्ना अभिन्नाश्च परस्पराश्रयाः ।
रूपं यदेकं परमुच्यतेऽमृतं तत्रैष मृत्युर्बहुधैत्य नृत्यति ॥२२२॥

## (२५) अथ दुःखसुखाधिकरणम्

[३]आत्मा सदानन्दमयोऽस्त्ययं वा स सर्वदा दुःखमयोऽस्ति किं वा ।
भयं स दुःखं लभते कथं वा किमस्ति दुःखं किमिदं भयं वा ॥२२३॥

अत्रोच्यते द्वैधमिदं निरुक्तं रसो बलं चेति पृथक् स्वभावम् ।
रसोऽयमात्मा बलमात्मशक्तिः स नित्यमानन्दमयो रसत्वात् ॥२२४॥

---

[१] पूर्वोक्तमदाहरणैर्द्रढयति । उष्णीशेऽनुगतं वस्त्रम्, तत्रानुगतास्तन्तवः, तत्रानुगतं तूलम्, तत्रापि मृदिति सर्वत्र बुद्धिः पृथग्भूता, परं सत्ता त्वेकैव—कारणसत्ता कार्येण गृहीता, मृदः सत्तयैव तूलं सत्तावत्, तत्सत्तयैव तन्तवः—इत्यादि सर्वं विवृतपूर्वम् । इदं सत्तैकत्वेऽपि बुद्धिभेदस्योदाहरणम्, गोः शृङ्गस्तनहस्तादिषु सत्ता पृथग्भूता, गौरिति बुद्धिस्त्वेकेति बुद्ध्येकत्वे सत्ताभेदस्योदाहरणम् ।

[२] उपसंहरति—सत्ताचेतनानन्दास्त्रयोऽपि धर्मा अमृताः—नित्या इत्यर्थः । एते परस्परमविनाभूता इत्यभिन्ना वक्तुं शक्यन्ते, प्रतिपत्तिस्तु भेदेनापि विविधा जायते—यथा पूर्वं विवृतम्—तेन च भिन्ना अपि वक्तुं शक्यन्ते । उभयं कथमुपपद्यते, तत्राह—अमृतं नाम रसः सर्वत्रानुस्यूत इति तदेकत्वादेकत्वम् । मृत्युर्नाम बलं नामरूपाक्रियात्मकं तु नानात्वेनैव नृत्यतीति तत्कृतं नानात्वमिति भावः ।

[३] अथेयं शङ्का समुदेति—यद्यात्मानन्दमयोऽभ्युपगम्यते—तर्हि प्राणिनां या भयप्रतीतिर्दुःखप्रतीतिर्वा, सा कथमुपपद्येत, प्रत्युत दुःखस्यैव लोके बहुलमुपलम्भाद्—आत्मनो दुःखभयत्वमेवानुभवपथमारोहति । लौकिकं सुखमपि दुःखरूपतयैव गणयन्त्यभियुक्ताः परिणामताप—संस्कारदुःखैर्गुणविरोधाच्च दुःखमेव सर्वं विवेकिनः (यो० सू०) इति । बौद्धाश्च दुःखरूपतामेवात्मन आहुः । तदेतद्विवेचनाय प्रकरणमिदमारभ्यते—भयदुःखयोः स्वरूपमपि च विस्तरेणात्र विविच्यते । अत्र यत्प्रतिपाद्यते—तस्यायं सारः—यद्रसबलाख्ये द्वे मूलतत्त्वे प्रतिपादिते—तत्र रस आनन्दरूपः बलसंबन्धात्तु भयं दुःखं वोदेति । मायारूपबलसंबन्धाभावे आत्मनि भयदुःखशोकादिरूपा न काचिदपि विकृतिः संभवति—एकरूपतया विचालित्वात् । मायाख्यबलेन परिच्छिन्ने त्वात्मनि भयदुःखादिकमुदेति, तत्रापि रसप्रधानेऽक्षरपुरुषे न भयकम्पादि संभवः, कर्मप्रधाने क्षरपुरुषे तु भयदुःखादिकं प्रवर्तते । जीवेष्वपि कामकर्मप्रधानेषु भयदुःखादिकं प्रसरति—तेषां कर्मप्रधानतया कर्मात्मत्वात् । ज्ञानप्रधानेषु तु न तत्प्रसरति—अल्पमेव वा प्रसरति—इति । तदेतदात्मनां द्वैविध्यं निष्कल आत्मा, कार्यात्मेति पदाभ्यामत्रोक्तम् । मुख्य आत्मनि न दुःखादि, मायाशबलिते तु तत्प्रसरतीति भावः । कथं तत् प्रवर्तत इति मूल एव स्पष्टैरक्षरैर्व्याख्यायते । सरलान्यत्र पद्यानि न व्याख्यामपेक्षन्ते । तस्मात् क्वचिदेवात्र टिप्पणरूपेण व्याख्या कृता सत्यावश्यकत्वे इति ।

आत्मा द्विधा कश्चिदखण्ड एकः स निष्कलः कर्मभिरस्ति तस्मात् ।
नायं विचाली न भयं न दुःखं तस्यास्ति शोको न जरा न कामः ॥२२५॥
कर्मात्मनाम्ना त्ववरो य आत्मा स सर्वकामः सकलः सकर्मा ।
क्षरोऽक्षरश्च द्विविधः स तत्राऽक्षरोऽविचाली न स दुःखयोगी ॥२२६॥
[1]यः प्रज्ञ आत्मा क्षर एष सोऽयं विचाल्यते कामवशात् स दुःखी ।
तस्यैव दुःखं च भयं च मन्ये प्रज्ञस्य स द्वन्द्वमयो निरुक्तः ॥२२७॥
[2]आत्मा विचाल्येत भयं तदुक्तं या चात्महानिः खलु तन्नु दुःखम् ।
स्वास्थ्यं हि तस्याविचलत्वमुक्तं या स्वात्मवृद्धिः सुखमुच्यते तत् ॥२२८॥
[3]अथाहुरेतन्मतमस्ति रिक्तं यत्कामहान्याह तदात्महानिम् ।
आत्मा हि गृह्णाति जहाति कामं कुतो विहीयेत सकामहान्या ॥२२९॥
[4]अत्रोच्यते काम समर्पितः स्यादासक्त्यनासक्तिवशाद् द्विधाऽयम् ।
काम प्रसक्तस्य सकाम आत्मा कामानुगः काममयस्वरूपः ॥२३०॥
कामात्मनः काममयस्य चात्मा कामेषु तेष्वेव विभक्त आस्ते ।
कामोऽस्य यावानुपहन्यतेऽयं तावांस्तदात्माऽप्युपहन्यतेऽस्य ॥२३१॥
[5]अथापि वा तस्य विभूतिरस्मिन् कामेऽस्तिकामे विहते हता सा ।
आत्मोदरेऽभूदिदमन्तरं यत् कामस्य हान्या तदवैति दुःखम् ॥२३२॥
[6]अप्राप्तकामं यदि कामयेत तत्रापि कामावपनार्थमात्मा ।
संवर्धते तत्र न यावदेति कामं स तावत् समुपैति दुःखम् ॥२३३॥

---

[1] क्षर आत्मैव प्रज्ञा आत्मेत्युच्येत-तत्र कामाः समवयवीति कामात्मापि स एव ।

[2] व्यावहारिकस्य मायावलविशिष्टस्यात्मनोऽवयवानां विचलनं भयमिति व्यवह्रियते, अवयवानां हानिर्दुःखमित्याख्यायते । अविचालित्वं स्वास्थ्यम्, अवयववृद्धिस्तु सुखमित्युच्यते—इति चतुर्णां स्वरूपनिरुक्तिः । अत्र वस्तुत आत्मावयवानां चलनहान्याद्यभावेऽपि तत्र समवेतानां कामानां चलनहान्यादिभिरेप भयदुःखाद्यस्तीत्यभिप्रेतम् ।

[3] अत्र शङ्कते—कामा हि आगन्तुकाः—आत्मा तान् गृह्णाति त्यजति च । ततश्च तेपां हान्या आत्महानिः कथमुच्यत इति । कामहान्या आत्महानि यद् आह—तन्मतं रिक्तम्-अशुद्धमित्यर्थः ।

[4] उक्तां शङ्कां समाधत्ते—कामप्रसक्तोऽपि द्विधा भवति—कामेष्वासक्तः, अनासक्तश्च । य आसक्तः, तेन कामा आत्मन्यारोपिता इति कामास्तस्यात्मरूपतामेव गताः । ततश्च तेपां हान्या आत्महानिः समुचितैव । इयमेवासक्तिर्भगवद्गीतासु सङ्गपदेन व्यवहृता ।

[5] कामा यद्यपि भिन्नाः तथाप्यात्मनो विभूतिसंबन्धस्तेष्वस्त्येव । स संबन्धो यदि व्याहन्यते—तदा कामस्य आत्मनश्च अन्तरं भवति । अन्तरे च भयं प्राग् व्याख्यातमेवोपनिषत् प्रमाणेन ।

[6] प्राप्तस्य धनवनितादेर्वियोगे पूर्वोक्तः प्रकारोऽस्तु नाम अप्राप्तमेवेष्यमाणं यत्र न लभ्यते, तत्रानुभूयमानस्य दुःखस्य कथमुपपत्तिरित्याह—तत्र काम्यमानस्य स्वरूपप्रवेशार्थं-मात्मनो वृद्धिर्जाता । वस्तु तु न प्राप्तमित्यात्मनोंऽशस्य रिक्तत्वाद् दुःखमुदेतीति भावः ।

इत्यात्मनः केवलकामहान्याऽथवापि कामानुगतात्महान्या ।
आसक्तिमान् काममयः स दुःखं भयं च नित्यं लभते सुखं वा ॥२३४॥

[१]भयं नु दुःखेन भयेन दुःखं समन्वितं रूपमुदेति तस्मात् ।
दुःखं न चेन्नास्ति भयं भयं वा न चेन्न दुःखं समुदेति तत्र ॥२३५॥

[२]अथाहुरेतन्मतमस्ति रिक्तं दुःखं न चोदेति भयं विनेति ।
आकस्मिकाघातवशात्स्वहानौ मृतौ च दुःखं क्रमते न भीतिः ॥२३६॥

[३]यदन्नमात्मा यतनेऽशनायया संगृह्यते तत्र सुयोगतः सुखम् ।
अयोगहीनातिविरुद्धयोगतः प्रज्ञापराधास्त्विह दुःखमुद्भवेत् ॥२३७॥

[४]द्वेधात्र तद्दुःखमिह प्रवर्तते प्रज्ञामुपक्रम्य शरीरमेति वा ।
भूतान्युपक्रम्य धियं समेति वा रुजैव तत्रास्ति भयं न दृश्यते ॥२३८॥

प्रज्ञप्रकम्पः प्रथमं हि दुःखं प्रज्ञाङ्गकम्पाद्भयमुग्रदुःखम् ।
प्रज्ञावसादोऽतिशयेन दुःखं दुःखस्य काष्ठा परमात्मनाशः ॥२३९॥

[५]दुःखं चतुः संस्थमिति ब्रुवन्ति तत्र द्वितीयं भयमेव दुःखम् ।
प्रज्ञस्य कम्पे यदि वाऽवसादे शून्यात्मता दुःखमिदं न भीतिः ॥२४०॥

[६]कामावसादस्तु परिव्रताख्यं स्यादात्मकम्पोभयनाम दुःखम् ।
आत्मावसादः किल शून्यदुःखमित्थं त्रिधा केचन दुःखमाहुः ॥२४१॥

[७]अत्रोच्यते नास्ति भयादृते तद्दुःखं न कम्पेन विनाऽवसादः ।
स्यादात्मनोऽथास्ति न कामहानौ चेदात्मकम्पो न तदाऽस्ति दुःखम् ॥२४२॥

---

[१] विचलनं विना अवसादो न भवतीति भयं विना दुःखं न भवतीति ।

[२] अत्र षड्भिः पद्यैः शङ्कामुत्थापयति—भयं विना दुःखं न भवतीति मतं रिक्तम्—अशुद्धमित्यर्थः । यत्राकस्माद् गृहपत्तनादिना आघातो जातः गात्रभयं पूर्वं नानुभूतम्—दुःखमेव सहसानुभूयत इति ।

[३] अन्यदपि भयं विना कृतदुःखस्थलं दर्शयति । अशनायास्वरूपमग्रे विवरीष्यते—अन्नग्रहणेच्छा तावदशनायात्र मन्यताम्—तया आत्मनि आयतने यदन्नादि संगृह्यते-तस्य सुयोगे सुखम्-अयोगे-अप्राप्तौ, हीनयोगे-अल्पप्राप्तौ, अतियोगे-अधिकान्नभोजनादौ, विरुद्धयोगे-अपथ्य-भोजनादौ च दुःखमनुभूयते—न तु तत्र भयमनुभूतमिति ।

[४] प्रज्ञामुपक्रम्य यदा शरीरे दुःखं तत्र भयपूर्वकत्वमनुभूयते । शरीरमुपक्रम्य तु यत्र प्रज्ञायां दुःखम्, तत्र रुजानाम दुःखमेवानुभूयते—न तु भयानुभव इति ।

[५] पूर्वस्मिन् पद्ये यच्चतुःप्रकारकं दुःखमुक्तम्—तत्र द्वितीय एव प्रकारे भयपूर्वकत्व-मनुभूयते, अन्यत्र तु त्रये भयपूर्वकत्वं नानुभूयत एवेति ।

[६] केचित् प्रकारचतुष्टयं त्रिष्वेवान्तर्भावयन्तीति प्रक्रियाभेदमात्रम् ।

[७] इदानीं सर्वत्र दुःखस्य भयपूर्वकत्वं साध्यते—उत्तरार्द्धे श्रूयमाणं 'स्यात्' पदं पूर्वा-न्वयि—कम्पेन विना अवसादो न स्यादिति भयं विना दुःख न संभवतीति युक्तिः । काम-हानावपि यद्यात्मकम्पो न स्यात्—तदा दुःखं नैवोदियादिति ।

[१]किन्त्वात्मनः सप्तपरिग्रहस्थे कम्पे भयस्यानुभवो धियास्ति।
प्रकम्पिते त्वात्मनि न प्रसादो द्रष्टुस्ततो नानुभवो भयस्य ॥२४३॥

[२]तत्कालमृत्यौ तु भयं क्षणेन स्थानेषु सप्तस्वपि सर्प्यमाणम्।
गृह्येत नात्यन्तिकवेगहेतोर्न गृह्यते दुःखमपीह तद्वत् ॥२४४॥

[३]अथास्तु वा दुःखमिदं समस्तं भयस्वरूपं पृथगात्मकं वा।
यथा तथा वास्तु तथापि कामासक्त्यात्मनो दुःखमिदं भयं च ॥२४५॥

[४]कामेष्वनासक्तिमितोय आत्मा न कामघातादयमेति घातम्।
नायं विचाल्येत विचालहेतोरभावतः संस्थितधीरिहोक्तः ॥२४६॥

आत्मास्थिरो यस्य न तस्य दुःखं स्थिरो विचालीति विरुद्धमेतत्।
ततः स्थितप्रज्ञ इह स्ववित्तादिकामहान्यापि न दुःखमेति ॥२४७॥

आसक्तिरज्ञानवशात्तु तस्मिन् प्रवर्तते ज्ञानवशात्त्वसक्तिः।
अज्ञानमेवास्ति भयस्य हेतुर्विज्ञानमेव त्वभयं वदामः ॥२४८॥

[५]कामानुषक्तो हि बलाधिकं यत् पश्यत्यकस्मादगृहीत पूर्वम्।
बिभेति तस्माच्चकितोपसर्पत्यसौ पुनः शान्तिमुपैति बुद्ध्वा ॥२४९॥

अन्तःप्रवेशे नियमं न वेत्ति यो बिभेति धीमान्प्रविशन्नृपालये।
अज्ञातदेशे प्रविशन् बिभेत्यसौ दुर्गेऽपि निःशङ्कमुपैति शिक्षितः ॥२५०॥

भयं ततोऽज्ञानवशात्प्रजायते [१]भयस्य मात्रा तदबोधमात्रया।
प्रशान्तिमात्रापि च बोधमात्रया सर्वत्र दृश्येत विवेकशालिनाम् ॥२५१॥

---

[१] पूर्वं सप्तान्नप्रकरणे ये आत्मनः सप्त अन्नरूपाः परिग्रहा उक्ताः, तत्र यदि कम्पः स्यात्—तदा भयानुभवो भवति। अयमनुभवोऽग्रेऽनुपदं व्याख्यास्यते। यदा त्वात्मन एव प्रकम्पः, तदा द्रष्टुरात्मनः प्रसादः—ग्रहणसामर्थ्यं नास्तीति भयं नानुभूयत। भयं जायते, किन्तु तस्यानुभव न जायत इति भावः।

[२] यदा अकस्मादेव विद्युत्पतनादिना मृत्युर्भवति, तदा भयं दुःखमित्युभयमपि अतिशीघ्रतया प्रसृतं नानुभूयते—किन्तु तद् द्वयं न जातमिति न वक्तुं शक्यते। अतिशीघ्रतया स्पष्टमनुभवो नास्तीत्येव तत्र वक्तव्यम्।

[३] भयदुःखयोः पृथक्त्वं भयेन विनापि दुःखं वा मन्यताम्, न तत्रास्माकमाग्रहः, कामासक्त्यैव भयं दुखं च प्रवर्तत इत्यत्र तु न विवादस्थानम्।

[४] अत एव यः कामेषु अनासक्तिम्—इतः प्राप्तः—अनासक्त इति यावत्, स कामानां पुत्रवित्तादीनां हानेरपि कामानामात्मनि अप्रवेशेन आत्मनि आधारताभावाद् दुःखं न लभते। स एव स्थितिप्रज्ञ इत्युच्यते। स्थिरता चलता च विरुद्धेति स्थिरप्रज्ञे चलनरूपं दुखं न जायते इति भाव्यम्।

[५] इदानीं भयस्याज्ञानजन्यत्वमुपपादयति—स्पष्टार्थानि पद्यानि। अदृष्टपूर्वं दृष्ट्वा—अज्ञानवशाद्बिभेति, ज्ञात्वा तु शान्तिमेतीति। यावती अज्ञानमात्रा तावत्येव भयमात्राप्युदेति, यावच्च ज्ञानं जातं, तावदेव भयं निवर्तत इति।

[१]प्रज्ञा भयेऽस्मिन्विचलत्यवश्यं शान्तौ पुनः सा स्थिरतामुपैति ।
प्रज्ञा यदुत्सीदति चात्मनः सा भयस्य काष्ठा म्रियते तदासौ ॥२५२॥

यदा[२] ऋध्यधिप्रज्ञमुदेति कम्पनं तस्या विभूतिर्विषयेभ्य उत्क्रमेत् ।
नाभौ प्रकम्पात्तमसः प्रसङ्गतः स्युः प्राणवागादिषु विक्रियाः क्रमात् ॥२५३॥

प्राणः सकम्पो भवतीति दुर्बलोऽप्यसौ भयोद्भूतबलात्पलायते ।
वाग्वा सकम्पा भवतीति बिभ्यतो मुखादकस्माद्भयवागुदीर्यते ॥२५४॥

वायुः सकम्पो भवतीति कम्पनं गात्रेऽधिकं श्वास उदेति भूयसा ।
तेजः सकम्पं भवतीति शोषणं मुखेऽनुतप्तश्वसनोष्णवर्ष्मता ॥२५५॥

जलं सकम्पं भवतीति विग्रहः प्रस्वेदपूर्णः सहसाभिजायते ।
[३]मृद्वा सकम्पा भवतीति गौरवात् स्तब्धासृगुत्सन्नगतिश्च मूर्छितः ॥२५६॥

इत्थं चिरायात्र भयोपसर्पणे चिरं विकारक्रमतोऽतिदुर्बला ।
निर्मूलमुत्सन्नतरा यदात्मनः प्रज्ञा भवेत् तर्ह्यचिरान्म्रियेत सः ॥२५७॥

प्रज्ञाल्पमात्राल्पबलाश्लथास्य चेदाभासते तत्र चिदल्पयत्नतः ।
प्रज्ञाल्पमात्राऽविधृताऽप्रतिष्ठिता विचाल्यतेऽज्ञानबलप्रणोदिता ॥२५८॥

[४]विचाल्यमाने जलवन्न भाति चेत्प्रज्ञे चिदात्मा मरणं तदुच्यते ।
प्रज्ञां नितान्तप्रचलान्तरामनु स्युर्नो चिदाभासविभूतयस्तदा ॥२५९॥

प्रज्ञानतोऽल्पे तु भये प्रवर्तिते प्राज्ञानकम्पादुदियन्ति विक्रियाः ।
सा प्राप्य विज्ञानमिह प्रतिष्ठिता तेनैव चालं विधृता प्रसीदति ॥२६०॥

---

[१] भये प्रज्ञा प्रचलति निर्बला, यदा तु प्रज्ञायां विवेकबलं तदा बलवती प्रज्ञा अल्पाघातेन न प्रचलतीति स्थिरप्रज्ञस्य न भयदुःखे । भयस्य परमा काष्ठा तु मरणमिति ।

[२] प्रज्ञायां प्रकम्पने जाते प्राज्ञाया विषयेषु विभूतिरूपः सम्बन्धोऽपि विच्छिद्यते । तेन भीतः स्वत्वमपि जहाति । नाभौ केन्द्रे यत्र यत्र प्रकम्प उदेति तत्र तमोगुणव्यापाराद् विविधा विकारा भवन्ति । प्रज्ञा प्रथम आत्मपरिग्रहः, प्राणाद्याः षट् तु अन्ये तानेवाग्रे दर्शयति ।

[३] भये सति क्वचिद्वेगात्पलायनम्, क्वचित्तु पादनिरोध एव भवति, तत्रोपपत्तिः प्रदर्शिता—यत् प्राणे सकम्पे निर्बलस्य खट्वावस्थितस्यापि पलायनं भवति । शरीरावयवरूपपृथिव्यां प्रकम्पे तु गौरववशात् स्तब्धता भवतीति भावः । मृत्पदेनात्र शरीरावयवानुगता पृथिव्युच्यते ।

[४] भयान् मृत्युः कथं भवतीत्युपपाद्यते । प्रज्ञायामात्मप्रकाशो यावत्, तावज्जीवनमुच्यते । यथा प्रकम्पिते जले न प्रतिबिम्बमानम्—तथैवातिप्रकम्पितायां प्रज्ञायां यदा नात्मप्रकाशः, तदैव मृत्युरुच्यत इति भावः । यदा त्वल्पं भयम्—तदाल्पे प्रज्ञा प्रचलने विक्रिया एव भवन्ति—आत्मप्रकाशस्तु न रुद्धचते—इति न मृत्युः । पुनर्विज्ञानं प्राप्य प्रज्ञा स्थिरा भवतीति । तेनाज्ञानाद् भयम्, ज्ञानात्तु भयनिवृत्तिरिति साधितम् ।

[१]अथाहुरेतन्मतमस्ति रिक्तं भयं यदज्ञानकृतं वदन्ति ।
पश्यामि तु ज्ञानकृतं भयं स्यादज्ञानतो निर्भयतामुपेयात् ॥२६१॥

वटेऽत्र यक्षो वसतीति जानन् बिभेति भूयो वटमागतस्तम् ।
अजानता निर्भयमत्र रात्रौ सुस्थीयते नापि दिवाऽत्र भीतिः ॥२६२॥

राज्ञो गृहे सर्वजनः प्रवेशं नार्हत्यथो साहसिकः प्रविश्य ।
दण्डेन निस्ताडनमर्हतीति जानन्प्रवेशाय बिभेति भयः ॥२६३॥

यो बालिशो दीनजनस्य भूपतेर्गेहान्तरं वेत्ति न वा नृपालये ।
वेत्ति प्रवेशे नियमं स निर्भयं स्वैरं प्रवेशाय मतिं करोति हि ॥२६४॥

तस्माद्भयं ज्ञानत एव संभवत्यज्ञानमस्ति शरणं जडात्मनः ।
[२]ज्ञानाद्भयं चेत्कथमुच्यतेऽमृतं विज्ञानमानन्दमयं किलाभयम् ॥२६५॥

अत्रा[३]हुरज्ञानकृतं न तद्भयं न त्वेव विज्ञानकृतं क्वचिद्भयम् ।
ज्ञानं यदज्ञानवृतं तदागमान्मुह्यन्ति सर्वे भयहेतुरस्ति तत् ॥२६६॥

[४] विज्ञानमात्मा हि यथास्ति यस्य तत्तथैव तिष्ठन्नपहन्यते न तत् ।
अज्ञानकालेऽपि तदप्रणोदितं कथं विचाल्येत कुतो भयं भवेत् ॥२६७॥

विज्ञानमात्मा हि यथास्ति यस्य तत् विज्ञानमन्यत्परिगृह्य वर्धते ।
तदात्मवृद्ध्या रसमश्नुते तथाऽऽनन्दः स तस्मान्न भयं तदा भवेत् ॥२६८॥

[५]ज्ञानं यदज्ञानवृतं भवेत् तदा तदागमादिन्द्रियमार्गतः क्रमात् ।
प्रज्ञाश्लथाङ्गाल्पबलाऽप्रतिष्ठिता च्यवेत चाज्ञानबलावृताऽऽहृता ॥२६९॥

---

[१] अत्र शङ्कते पञ्चभिः पद्यैः । अज्ञानकृतं भयमिति नैतद्बुद्धावुपारोहति ज्ञानादेव तु भयं दृश्यत इत्युपपादयति सरलार्थैः पद्यैः ।

[२] यदोक्तरीत्या ज्ञानादेव भयं सिद्धम्—तदा आत्मा—अमृतम्, विज्ञानम् आनन्दमयं च कथमुच्यत इति शङ्का उपसंहारः ।

[३] अथ समाधत्ते—न केवलं ज्ञानकृतं भयम्, न वा केवलमज्ञानकृतम्, अपि तु ज्ञाने यदा आवरणरूपाज्ञानप्रवेशः, तदा भयं भवतीति । तदुक्तं गीतासु 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति (अ० ५।१५) । उक्तेपूदाहरणेष्वपि 'वटे यक्षः प्रतिवसति' इत्यस्ति ज्ञानम्, तन्निराकरणोपायस्य तु न ज्ञानमित्यज्ञानवृतं ज्ञानम् । एवं 'राजद्वारादौ सहसा न प्रवेष्टव्यम्' इति ज्ञानम्—कथं प्रवेष्टव्यमिति तु न ज्ञानमित्यज्ञानावृतमेव ज्ञानम् । एवं सर्वत्रोह्यम् ।

[४] अथ विभिन्नप्रकृतिकपुरुषभेदेन वैज्ञानिकरीत्या सुखदुःखभयादिकमुपपादयति—यो विज्ञानमात्मत्वेन गृह्णाति, तस्य आत्मरूपं विज्ञानं सदैवेकरूपम्, तस्य विचलताभावान्न तत्र भयादिसंभवः । प्रज्ञागतस्य विज्ञानस्य शिक्षादिना वर्द्धने तु सुखमेव भवति, न तु भयादिकमिति पद्यद्वयेनोक्तम् ।

[५] यस्य तु पुरुषस्य प्रज्ञा श्लथाङ्गी, अल्पबला च, तस्येन्द्रियचक्षुरादिमार्गादज्ञानवृतं ज्ञानागमे अज्ञानेनाहृता प्रज्ञा स्वस्थानाच्च्यवते—अयमेव कम्पो भयहेतुः ।

[1]द्वैधं हि मात्राकृतबन्धने भवेत् क्वचिच्छलथत्वं दृढताऽथवा क्वचित् ।
वज्रेऽस्ति बन्धोऽतिदृढोऽथ तूलके श्लथः स एवं निखिलेषु कल्प्यताम् ॥२७०॥

[2]श्लथः स बन्धो विपुलोऽपि दुर्बलो दृढस्तु कार्श्येऽपि बली घनास्थिवत् ।
बलाधिकश्चेच्छ्लथबन्धनोऽप्ययं काले ध्रुवं स्याद् दृढबन्धनः क्रमात् ॥२७१॥

प्रज्ञस्य बन्धोऽपि शिशोः श्लथः पुरा ततो बिभेत्यल्पविभीषयाऽप्यहो ।
यदा तु विज्ञानमुपार्जितं क्रमात् सहैव तेनात्र विधीयते बलम् ॥२७२॥

यथा यथा ज्ञानवशाद्बलोदयः प्रज्ञस्य बन्धोऽपि बलैर्दृढी भवेत् ।
यावत्तु बन्धे दृढता ततः क्रमात् प्रज्ञो विचाल्येत न वा विभीषया ॥२७३॥

विज्ञानसंगेन बलं यदागतं प्रज्ञं तदा योजयति प्रतिष्ठया ।
अज्ञानसंगेन बलं यदागतं प्रज्ञप्रतिष्ठा च्यवते ततः क्रमात् ॥२७४॥

तदेतदज्ञानकृतो भयोदयोऽन्ततो मतो ज्ञानकृतः शमक्रमः ।
विज्ञानतः प्रज्ञधृतौ बलोदयान्नोद्वेगशोकाकुलतार्तिसंभवः ॥२७५॥

[3]विज्ञानतो बन्धनमुक्तिरिष्यते न बन्धनं क्वापि तथापि संप्रति ।
प्रज्ञस्य विज्ञानवशेन बन्धनं यदुच्यते तन्न च नोपपद्यते ॥२७६॥

[4]विकाशि विज्ञानमिदं विकाशनस्वभावतो बन्धनमोचनं भवेत् ।
तच्चानुगृह्णाति विशिष्य कर्म यत् तदेव विस्फोटयतीति निश्चितम् ॥२७७॥

[5]प्रतिग्रहेणैतदनुग्रहेण प्रवर्ततेऽनुग्रहतस्तमोनुत् ।
प्रतिग्रहादस्य तु मर्त्यकार्यानुयोगयोग्या मलरूपसिद्धिः ॥२७८॥

---

[1] प्रज्ञायां श्लथत्वं दृढत्वं च कथं भवतीत्युपपादयति—संबंधे एव दृढता श्लथता च भवति—बलसंबन्धो रसे दृढः श्लथो वा। यथा वस्तुषु वज्रे हारके तूले च तथैवात्रप्यनुसन्धेयमिति।

[2] मात्रया विपुलोऽपि बन्धो यदि श्लथः तदा दुर्बल एव, मात्रया कृशोऽपि च यदि बन्धो दृढः, तदा बलवान् । अत एव येन बह्वप्यधीतम् परं दृढतया प्रज्ञायां न प्रवेशितम्—तस्य प्रज्ञा श्लथा, येन चाल्पमपि ज्ञातम् परं दृढतया अभ्यस्तम्, तस्य प्रज्ञा दृढेति । श्लथप्रज्ञस्य शीघ्रं भयमुत्तरपद्येन बलदृष्टान्तेन दर्शितम् ।

[3] अत्र शङ्कते—विज्ञानेन बन्धनमोचनं प्राग् व्याख्यातम्—इदानीन्तु विज्ञानेन बन्धस्य दृढता कथमुच्यते—तत्राह—एतन्न उपपद्यते—इति न हि । अर्थादुपपन्नमेव कथमित्याह ।

[4] विज्ञानं विकासशीलम्—विकासे च सति बन्धान्मुक्तिर्भवति, तत्र विज्ञानमक्रियत्वात् स्वयं न मोचकं बन्धकं वा, किन्तु विकासविज्ञानं यत् कर्म गृह्णाति, तत् कर्मैव-बन्धनं स्फोटयति। गृह्यमाणं कर्म तु प्रतिग्रहेण अनुग्रहेण वा प्रवर्तते। आत्माभिमुख्यम्—अनुग्रहः, तेन मोचनं भवति । परागरीत्या कर्मसंबन्धस्तु प्रतिग्रहः—तेन संसाराभिमुखेन संसारव्यवहार—दृढता जायते—न तु मोचनम् । तेन संसाराभिमुखं विज्ञानं बन्धस्य दृढतामेव संपादयतीति ।

[5] अस्य प्रकरणस्यायं भावः—"पराञ्चि खानि व्यतृणत् स्वयम्भूः" इति श्रुत्युक्त्यनुसारमिन्द्रियाणि आत्मनः पराङ्मुखानि, बहिर्मुखानीत्यर्थः । तथा चेन्द्रियजन्यं विज्ञानमपि

18

प्रज्ञस्य विज्ञानमिदं पराङ्मुखं कामान् पराचो हि सदाऽवभासयेत् ।
प्रज्ञे परावर्तितमानसादिदं गच्छेत् तदात्मज्ञतया स मुच्यते ॥२७९॥

विज्ञानमाकाशममुष्य वर्धनादन्नादकोऽन्नं च विसारि जायते ।
विवृद्धमाकाशमनुप्रसारणादन्नस्य बन्धः क्रमशो विहीयते ॥२८०॥

सहैव चान्नेव यदा तु वर्धते विज्ञानमस्मिन्न तदान्नबन्धनम् ।
विशीर्यतेऽन्नस्य च न प्रसारणं तद्वन्धमुक्त्यै तु निरन्नवर्धितम् ॥२८१॥

सहैव चान्नेन यदा तु वर्धते विज्ञानमेतद्विघृतान्न संचयम् ।
प्रज्ञस्य संवर्धयते धृतिं क्रमाद् धृतेश्च मात्रामनु तद्भयक्षयः ॥२८२॥

तथा च विज्ञानमिदं हि बाह्यानर्थान् दधत् प्रज्ञसमर्थतां कृत् ।
अन्तर्मुखं प्रज्ञगतं तु मुक्त्यै तमस्तदुत्साद्य रसं तनोति ॥२८३॥

॥ इति परविद्याध्याये रसाधिकारो द्वितीयः ॥

---

स्वभावेन वहिर्मुखमेवागच्छति, तच्च संसाराभिमुखं कामानेवावभासयति। यदा तु योगेन ज्ञानजनितवासनाक्षयेण वा यत्नेन तद्विज्ञानमात्मभिमुखं क्रियते, तदा संसारात्पराङ्मुखमात्मानमेव सांमुख्येन भासयति। तथा च कामविनिवृत्तौ आत्मभूतस्य विज्ञानस्य मुक्तिः सिद्धयति। प्रकारान्तरेणेदमित्थं विशदीकृतम्—यद् विज्ञानमव्ययपुरुषकलास्वेकतमं व्याख्यातम्। अव्ययपुरुषश्च सर्वालम्बनमाकाशस्थानीय इत्यपि विशदीकृतम्। तथा च विज्ञानमाकाशस्थानीयम्—तत्र निहिताः क्षरकलास्तु प्राणः, आपः, वाक्, अन्नादः, अन्नम्—इति व्याख्याताः। तथा चाकाशस्थानीये विज्ञाने यावत्या मात्रया अन्नादः, अन्नं च निहितम्, विज्ञानवृद्धौ तावदेवान्नं यदि विस्तृत आकाशे प्रसार्येत अन्नजलयोरंशस्याधिकस्थानप्रसारण इव वन्धनशैथिल्यं स्वभावसिद्धमिति क्रमेण मुक्तेराभिमुख्यं जायते। क्रमेण चाल्पतया विलीने बन्धने मुक्तिः सिद्धयति। यदा तु संसाराभिमुखमेव विज्ञानमधिकं प्रविष्टम्—तदा विज्ञानरूपाकाशवृद्धया सहैवान्नस्यापि कामरूपस्य वृद्धिर्जाता इति प्रसारणाभावाद् बन्धशैथिल्यं न भवति। किन्तु अन्नस्य वलरूपत्वाद बलमधिकं प्रविष्टमिति बन्धनदाढर्यमेव संपद्यते। वन्धनदाढर्ये च धृतिर्भवतीति प्रज्ञे धृतिवशेन भयादिकं च निवर्तते। संसारव्यवहारपाटवं चाधिकाधिकं वर्द्धते। तथा च संसाराभिमुखं विज्ञानं प्रज्ञस्यात्मनः संसारव्यवहारपाटवं तनोति—भयादिकं च निवर्तयति। आत्माभिमुखं तु विज्ञानमर्थादात्मविज्ञानं निरन्नवर्द्धनरूपं मुक्तेराभिमुख्यं क्रमेण संपादयति। अन्नस्य वृद्धयभावे संचितस्यान्नस्यैव प्रसारणाद्वन्धशैथिल्यं पूर्वमुक्तमिति। तेन विज्ञानस्य वन्धदृढताकारित्वम्, बन्धमोचकत्वं चेत्युभयमपि युक्त्या सिद्धयति इति सुसूक्ष्मं भाव्यं भावुकैः। उभयथापि तु विज्ञानं शोकदुःखादिकं निवर्तयत्येवेति विज्ञानसिद्धयै यतनीयमवश्यम्। एवं वैज्ञानिक्या प्रक्रियया रसरूपस्यात्मनस्तत्त्वं संक्षिप्य ग्रन्थकृता व्याख्यातम्।

## (२६) अथ मूलबलाधिकरणम्

रसो[१]ऽमृतं ब्रह्म बलं तु मृत्युः कर्मति सामान्यतया यदुक्तम् ।
तयोः पुनर्ब्रह्म निरूपितं प्रागतः परं कर्म निरूपणीयम् ॥१॥

[२]रसप्रधानप्रतिपत्तिशास्त्रं वेदान्त इत्याह हि सोऽन्तवेदः ।
बलप्रधानोऽत्र विचारभागः सांख्यं हि संख्यानमिदं बलानाम् ॥२॥

[३]रसे बले चात्र यथा परस्परस्वरूपसंसर्गत आत्मसृष्टयः ।
तथैतयोरेव पुनः स्वरूपवत् संसर्गतः शक्तिरपीह सृज्यते ॥३॥

[४]यत्रैतदभ्यादधतीह किंचित्सोऽत्ता यदाधीयत एतदन्नम् ।
यदाद्यमत्तोभयमेकभूतमाख्यायतेऽत्तैव तदा न चाद्यम् ॥४॥

[५]रसे न भुक्ते तु बले रसोऽसावात्मा वृषासौ त्रिविधः परादिः ।
बलेन भुक्ते तु रसे बलं तच्छक्तिर्नु योषा महदादिरेषा ॥५॥

---

[१] बलस्य तिस्रोऽवस्था आदावुक्ताः, बलं शक्तिः कर्म चेति । तत्र सर्वमूलभूतं कर्म विशेपविवरणायाधिकरोति । रसः, अमृतम् ब्रह्म इति पर्यायाः, एक एवार्थ एभिरुच्यते । तथैव बलम्, मृत्युः, कर्म इति त्रयः शब्दा अप्येकार्थः ।

[२] एतदुभयनिरूपके शास्त्रे अपि नामतो भिद्यते—रसं प्राधान्येन निरूपयच्छास्त्रं वेदान्त इत्याख्यायते, वेदस्य ज्ञानस्य तत्र अन्तः, न ततः परं किमपि ज्ञातव्यमवशिष्यते । सर्वमूलत्वाद्रसस्य । तस्मात् सोऽन्तवेदः—अन्तिमं ज्ञानमतिवेदान्तशब्दस्य निरुक्तिः । बलं प्राधान्येन यच्छास्त्रं निरूपयति, तत्तु सांख्यम् । यतो हि बलानि अनन्तानि—तेषु संख्या विद्यते—रसस्य तु एकत्वान्न तत्र संख्या । एकत्वं हि न संख्या, तत्तु आधारस्वरूपभूतमिति दार्शनिकानां समयः । तस्मादनन्तानां बलानां पृथक् पृथक् संख्याकरणाद् बलनिरूपकं शास्त्रं सांख्यमिति शब्दनिरुक्तिः ।

[३] रसे स्वरूपसंसर्गेण बलस्य मेलनाद् अव्ययाक्षरक्षरा आत्मानः स्वरूपं लभन्त इति पूर्वं पुरुषनिरूपणे प्रतिपादितम् । एवमेव स्वरूपवदेव रसबलयोः संसर्गविशेषाद्बलप्रधानाः शक्तयः आविर्भवन्तीति भावः ।

[४] द्वयोः स्वरूपसंसर्गे एकः अत्ता, अपरं चान्नं भवति । तत्र यस्य स्वरूपमग्रे व्यवह्रियते—स तावदत्ता, यस्य तु व्यवहारोऽग्रे विलीयते, तदन्नम् । अन्नं हि अत्तारि आधीयते, यत्राधीयते—स आधारभूतोऽग्रेऽवशिष्यमाणः 'अत्ता' । यत्तु आधीयते—यस्य परस्मिन् स्वरूपविलोपो भवति, तदन्नम् । अत्ता वृषा इत्याख्यायते—अन्नं तु योषा इति परिभाष्यते । उभयोरेकीभावानन्तरं अत्तैव व्यवहारो आख्यायते, अन्नं तु तत्र विलीनत्वादनामकं भवतीति ।

[५] पूर्वपदोक्तमेव स्पष्टीक्रियते—यत्र रसेन बलं भुक्तम्—अर्थाद् रसस्वरूपमेवावशिष्टम्—बलं तु विलीनमिव, ते आत्मानः पराक्षरक्षरनामान आख्याताः । यत्र तु बलेन रसो भुक्तः—अर्थाद् बलरूपेणैवाग्रे व्यवहारः प्रवृत्तः, तत्र मिलितयोः शक्तिनाम्ना, योषा नाम्ना च व्यवहारो

[१]बलं हि संसृज्य रसे स्वरूपतो विवर्तते तत्र बलं विलीयते ।
विलक्षणस्तेन रसो बलाशनात् स सर्वकामः स्वशक्तिभिः स्मृतः ॥६॥

[२]रसोऽपि संसृज्य बले स्वरूपतो विवर्तते तत्र रसो न भासते ।
बलं तु तत् प्राश्य रसं विलक्षणं सद्रूपतो भाति युनक्ति चात्मनां ॥७॥

[३]आत्मा यथा ब्रह्मतयेष्यतेऽयं शक्तिस्तथा ब्रह्मतयेव वेद्या ।
ब्रह्म द्विधोदेति वृषा च योषा योषैव शक्तिर्नु वृषा स आत्मा ॥८॥

---

जायत त्यर्थः । यद्यपि सर्वविक्रियारहितस्य रसस्य भुक्तत्वं न संभवति, तथापि वलप्राधान्येन तत्र व्यवहारः प्रवृत्त इति व्यवहारदृष्ट्या भुक्तत्वमुपचरितं द्रष्टव्यम् । एतच्च पूर्वमनेकधा ग्रन्थकृता स्पष्टीकृतम् । सा योषारूपा शक्तिरपि महदादिरूपेण त्रेधा अग्रे व्याख्यायते ।

[१] वलं रसेन संसृज्य यत्र स्वरूपेण विवर्तते—अर्थाद्रसरूपेणैव प्रतीतं भवति, वलस्य पृथग् व्यवहाराभावात्तत्र वलं विलीनमिवाख्यायते—यथा जले तरङ्गाणां विलोक्यते विलयः । अथापि विलीनं तद्वलं रसे किञ्चिद् वैलक्षण्यमिव भासयति । वस्तुतो न रसे वैलक्षण्यं, तस्य सर्वविक्रियारहितत्वात् । यथा निर्विकाराधिकरणे मूल एव सविस्तरं विवृतम् । तथापि बलमेव मायारूपेण तत्र वैलक्षण्यप्रतीतिं जनयति । वैलक्षण्यं विवृणोति स सर्वकाम इति । रसो हि स्वयं निर्विकारः, न तत्र कामः, न वा कर्तृत्वम् । वलविशिष्टस्तु सकामो भवति, कर्ता च । अत एव 'स ऐक्षत' 'सोऽकामयत' इत्यादि वाक्यैः श्रुतिषु यदीक्षणकामादि श्राव्यते—तद्वलविशिष्टस्यैव विज्ञेयम् । एतदेव द्वयं वेदान्तेषु 'शुद्धं ब्रह्म' 'मायाशवलितं विशिष्ट ब्रह्मेति चाख्यायते । शुद्धस्य न कर्तृत्वादि, विशिष्टस्यैव तु कर्तृत्वपालकत्वसंहर्तृत्वादि । अत्र बलं शक्तिरूपतां गतम् । अत एव शक्तिविशिष्ट ब्रह्मेत्यपि श्रुतिस्मृतिषु गीयते ।

[२] यत्र तु रसो वलेन संसृष्टः, अर्थाद्वलप्रधानो यत्र संसर्गः, तत्र रस एव स्वरूपेण विवर्तते । तस्य अभानमेव विवर्तः । यद् आवरणमित्युच्यते । तत्र वलेन रसोऽशित एव निगीर्ण इव । वस्तुतो न रसस्य निगरणम्, तथापि तस्य मायया आवरणमिति न विस्मर्तव्यम् । वलन्तु रसं निगीर्य स्वयं सद्रूपं भवति—तस्य रूपं सत्ता स्वयं गृह्णाति, तत्र वलमेव सदित्युच्यते । किं च तदात्मना युनक्ति, अर्थात् सात्मकं भवति । सैव संसारदशा । संसारे हि वलमैव प्रधानम्, रसस्त्वावृत इवेति ।

[३] आत्मा अर्थाद् रसोऽपि ब्रह्म, शक्तिपदवाच्यं वलमपि च ब्रह्म । तस्माद् ब्रह्मैव योषारूपेण वृषरूपेण च द्विधा भातमित्यर्थः । शक्तिर्योषेत्युच्यते, आत्मा तु वृषेति । तदुक्त-श्रुतौ (वृहदारण्यकोपनिषदि तृतीयाध्याये चतुर्थ ब्राह्मणे) 'आत्मैवेदमग्र आसीत् पुरुषविधः' इत्युपक्रम्य "सहैतावानास, यथा स्त्रीपुमांसौ संपरिष्वक्तौ, स इममेवात्मानं द्वेधा अपातयत्, ततः पतिश्च पत्नी चाभवताम्" इत्यादि । अनन्तरं द्वाभ्यामेव सर्वप्राणसृष्टिरुक्ता ।
भगवद्गीतास्वपि च—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत । (अ० १४–३ इति) ।

तदित्थं शक्तिर्योषा, आत्मा तु वृषा, द्वयमपि च ब्रह्मैवेति सिद्धम् ।

[१]विस्रंसमानो रसदो रसं हि यः प्रदाय भूयः पृथगेव तिष्ठति ।
वृषा स योषा तु रसं निजान्तरे विधार्य कृत्वाऽवयुतिं सृजत्यदः ॥९॥

येनात्मना या तु युनक्ति शक्तिः सा तस्य योषा पुरुषस्य सिद्धा ।
[२]क्षरस्य योषा प्रकृतिश्च योनिः स्यादक्षरस्याथ परस्य माया ॥१०॥

माया च योनिः प्रकृतिश्च दृष्टाः सांकर्यतोऽपि व्यपदिश्य भावाः ।
[३]शक्त्या प्रकृत्या जनितं तु भोग्यं भोक्तात्मना भुक्तमुपक्षिणोति ॥११॥

[४]यानौ भवन्तः क्षरभूतभावाः भोक्तार आत्मान इमे ह्यभोग्याः ।
यन्मायया किञ्चिदुदेति रूपं न भोक्तृ नो भोग्यमिहाक्षरं तत् ॥१२॥

[५]स्वरूपसंसर्ग इहोदितस्त्रिधा बन्धोऽपि योगोऽपि विभूतिरित्यपि ।
तैर्जायते शक्तिरियं त्रिधा तमो रजश्च सत्वं च गुणा इमे त्रयः ॥१३॥

---

[१] किं नाम योषात्वम्, किं च वृषत्वमिति व्याकरोति—स्वरूपभूतं रसं योऽन्यत्र समर्पयति, रसं प्रदाय च स्वयं पृथगेव स्वतन्त्रस्तिष्ठति—स वृषा । विस्रंभमान इति लोक-दृष्टया उच्यते—लोके हि यः स्वात्मभूतं रसं योषायामादधति, स स्वयं विस्रंसते—क्षीणो भवतीत्यर्थः । ब्रह्म तु रसमन्यत्र संक्रामयन्नपि न क्षीणो भवतीति "पूर्णस्य पूर्णमादाय पूर्णमेवा-वशिष्यते" इत्यत्रोक्तम् । योषा तु रसं स्वान्तरे दधाना अवयुतिं कृत्वा—अर्थात् स्वांशमपि तत्र संयोज्य अपत्यरूपेण सृजतीति—लोकदृष्टिः—तद्वदेव रसबलयोरपि भाव्यम् । स्रष्टृ बलमेव, रसं तु स्वात्मनि गृहीत्वैव सात्मकं भूत्वा तत् स्रष्टुं प्रभवतीत्याशयः । रसस्तत्रानुप्रविष्टोऽपि स्वरूपेणाविकृतः, अक्षीणश्चेति निर्विकाराधिकरणे दृष्टान्तैः स्फुटीकृतं प्राक् ।

[२] पुरुषत्रयेण संयुक्तायाः शक्तेरपि नामभेदमाह—क्षरस्य योषाशक्तिः, प्रकृतिरि-त्युच्यते, अक्षरस्य शक्तिः—योनिरिति, परस्य—अव्ययस्य तु शक्तिर्मायेति । परेऽव्यये निर्विकारे सा केवलं मितिमेव भासयतीति मायेत्युच्यते, अक्षरस्तु गर्भं गृहीत्वा क्षरादिकमुत्पादयतीति योनिः, क्षरे तु सा संसृष्टा भूत्वा प्रकर्षेण कार्यं करोतीति प्रकृतिः । एषां च शब्दानां साङ्कर्यम्—सर्वत्र सर्वेषां प्रयोग उपलभ्यत इत्यग्रिमेण पद्येनोच्यते ।

[३] प्रकृतिरूपा शक्तिर्भोग्यं जनयति, तच्च क्षरेणात्मना भुक्तं क्षीयते—प्रकृतावेव विलीयत इति भावः ।

[४] अक्षरस्तु योनौ क्षरं पुरुषमुत्पादयति—स आत्मा भोक्तैव न तु भोग्यम् । माय-योत्पादितन्तु न भोक्तृ, न वा भोग्यम्—अत एव तदक्षरमित्युच्यते ।

[५] स्वरूपसंसर्गस्य बन्धाद्यास्त्रयो भेदाः प्राक् संसर्गप्रकरणे उक्ताः । तैरेव रसप्रधानैः वाक्, प्राणः, मनः इति त्रय आत्मानः प्रादुर्भवन्तीत्युक्तम् । शक्तिप्राधान्ये तु बन्धेन तमः, योगेन रजः, विभूत्या तु सत्त्वं जायत इति भाव्यम् । संसर्गाणां तज्जन्यानां शक्तीनां च व्युत्क्रमेण छन्दोऽनुरोधात्पाठः कृतः । सौक्ष्म्यक्रमेण तु विभूत्या सत्त्वम्, योगेन रजः, बन्धेन तु तमो जायत इत्यनुसन्धेयम् । बले एव बलान्तरस्य संसर्गैरिदं त्रयं भवतीति स्मर्तव्यम् ।

तमो रजः सत्वमयी हि शक्तिः शक्तिर्न सा यत्र न तत्त्रयं स्यात् ।
[१]त्रिधा पुनः सात्मरसानुयोगान्महानहङ्कार उतापि मात्रा ॥१४॥

शुद्धं बलं शुद्धरसं निगीर्य यद्रूपतो व्यक्तिमगान्महान् सः ।
महत्पुनर्यत्र बलानुबन्धिरसं प्रभुङ्क्ते तदहङ्कृतिः स्यात् ॥१५॥

अहङ्कृतिर्यत्रपुनः प्रभुङ्क्ते रसं बलाढ्यं तदुदेति मात्रा ।
मात्रा पुनश्चेद्बलवद्रसं तं भुङ्क्ते ततः स्यात् विविधोऽत्र [२]कायः ॥१६॥

महत्यमुष्मिंश्च गुणान् विदुस्तान् विक्षेपकामावरणप्रभेदात् ।
[३]स्यात्सत्वमिच्छावरणं तमः स्याद्रजस्तु विक्षेपमुदाहरन्ति ॥१७॥

गुणा अहङ्कारगतास्त्रयस्ते ज्ञानं क्रिया चार्थ इति प्रभेदात् ।
द्रव्यं तमोऽर्थः स रजः क्रिया स्याद् ज्ञानं तु सत्त्वं प्रतिपादयन्ति ॥१८॥

मात्रा गतास्ते च गुणास्त्रयः स्युः प्रज्ञा तथा प्राण उतापि भूतम् ।
[४]मात्राभिराभिस्तु पृथक् कृताभिर्मिथोऽन्विताभिः सकलं जगत् स्यात् ॥१९॥

[५]मात्राभिराभिः क्रियते हि रूपं सोऽणुः प्रसिद्धोऽथ तदन्वयेन ।
याः स्युर्महाभूतकला हि तासां स्कन्धोऽयमाभाति विभाति यद्यत् ॥२०॥

[६]न चातिरिक्तं महदादिभिः स्यात् किञ्चित् क्वचित् तत्प्रकृतिस्त्रिधैव ।
त्रैगुण्यमन्यत्तु यदेव दृष्टस्थानेषु चैष्वेव गतं तदाहुः ॥२१॥

---

[१] इयं शक्तिरात्मभूतेन रसेन संयुज्य महान्, अहङ्कारः, तन्मात्राः, इति त्रिरूपा क्रमेण जायत इत्यर्थः। यथा रसप्राधान्ये मनःप्राणवाग्भिरव्ययः, अक्षरः, क्षर इति पुरुषत्रय-प्रादुर्भावो व्याख्यातः, तथा बलप्राधान्ये बलेन रसे निगीर्णे—अर्थाद्रस आवृते बले प्रधाने महदादयो जायन्त इति भावः। एषामुत्पत्तिरग्रे स्पष्टार्थेन पद्यद्वयेन द्रष्टव्या।

[२] मात्राभिः पुनर्निगीर्णे बलवति रसे अर्थान्मात्राणां पुना रसयोगे रसस्यावरणरूपे अप्राधान्ये च कार्यनाम तत्तच्छरीरमुत्पद्यत इति भावः।

[३]महति ये त्रयो गुणाः कामविक्षेपावरणशब्दैराख्यायन्ते—पूर्वत्रच्छन्दोऽनुरोधात्क्रमभङ्गो जातः—तस्मादत्र स्पष्टीकरणायोच्यते—सत्त्वमिच्छा, सैव काम उच्यते, तमः आवरणम्, रजः—विक्षेप इति। एवमेवाग्रे अहङ्कारे मात्रायां च गुणत्रयमग्रे पद्यद्वयेन व्याख्यातम्—तच्च स्पष्टार्थकमेव।

[४] मात्रायाः प्रभेदाः शब्दस्पर्शरूपरसगन्धाः। तैः परस्परं सम्बद्धैः सर्वं जगज्जायते, तच्च पुराणेषु सांख्यदर्शने च सुस्फुटं व्याख्यातं द्रष्टव्यम्।

[५] मात्राः संभूय अणुमुत्पादयन्ति, यो न्यायशास्त्रे सर्वकारणत्वेनाङ्गीकृतः। अणूनां परस्परमन्वयेन संबन्धेन महाभूतकलाः—महाभूतानामवयवा जायन्ते—तदेव जगद् दृश्यत इति भावः।

[६] महान्, अहङ्कारः, मात्राश्चेति त्रितयातिरिक्तं किञ्चिदपि क्वचिन्न दृश्यते। तस्मात्प्रकृतिरियं त्रिधैव द्रष्टव्या। यत्तु मूलप्रकृतिरूपं त्रैगुण्यं सांख्यदर्शनादौ पृथग्

[1]परस्य शक्तिर्महदुच्यते महानसौ गृहीत्वा परतः परं रसम् ।
स्वरूपसर्गाद् द्विविधः स उद्भवत्यात्माऽक्षरः शक्तिरहङ्कृतिस्तथा ॥२२॥

अथाक्षरस्यापि च शक्तिरिष्यतेऽहङ्कारनामा रसमक्षरादसौ ।
प्राप्य स्वरूपेण मिलन् क्षरात्मना तच्छक्तिरूपेण च जायते पृथक् ॥२३॥

परस्य शक्त्येत्यमुदेति सोऽक्षरोऽक्षरस्य शक्तिश्च पृथक् स्वरूपगा ।
तथाऽक्षरस्यापि च शक्तितः क्षरः क्षरस्य शक्तिश्च पृथक् प्रजायते ॥२४॥

[2]परस्य वाक्प्राणमनांसि चात्मनो रूपाणि सन्त्येकबलानि तेन च ।
परोऽयमात्मा त्रिपुटी त्रिकोशवान् त्रिखण्ड एवं त्रिवलश्च कथ्यते ॥२५॥

तथैव चैतन्महतस्त्रयो गुणा भवन्त्यमी सत्त्वरजस्तमोऽभिधाः ।
यतो विभिन्नैकवलास्ततो महानयं त्रिकोशस्त्रिवलश्च भाव्यते ॥२६॥

महत्यमुष्मिंस्त्रिवले परात्मनो रसस्य सर्गात् त्रिबलस्य योऽक्षरः ।
प्रवर्तते तस्य च तानि षड्बलान्येवात्मरूपाणि पृथग् भवन्ति हि ॥२७॥

तेनायमष्टादशखण्ड इष्यतेऽक्षरः स्वरूपानुगतात्मभिस्त्रिभिः ।
अहंकृतिश्चाक्षरवद्धि षड्बलैरष्टादशांशा स्वगुणैस्त्रिभिर्मता ॥२८॥

अहंकृतोऽष्टादशखण्डवत्यथाऽक्षरस्य चाष्टादशखण्डशालिनः ।
सर्गेण रूपाणि भवन्ति चात्मनः षट्त्रिंशदंशानि पृथक् ततः क्षरः ॥२९॥

षट्त्रिंशदंशैस्त्रिभिरात्मभिः कृतः क्षरोऽयमात्माऽष्टशतेन खण्डवान् ।
मात्रापि तद्वत् त्रिभिरात्मनो गुणैः कृता सखण्डाष्टशतेन जायते ॥३०॥

[3]क्षरस्य तावन्मितिशालिनो रसः संसृज्य तावन्मितमात्रया पुनः ।
यद्रूपमुत्पादयतीह तज्जगद्भवेदणुस्कन्धविशिष्टरूपवत् ॥३१॥

---

व्याख्यायते, तत् पृथङ् नोपलभ्यते—एतेषु त्रिष्वेवान्तर्गतं तदुपलभ्यते—तस्मान्मूलरूपेणैवैतत्कथनम्—न तु पृथगुपलम्भरूपेण । अत एव मूलप्रकृतिमभोग्यामेव सांख्या अपि वदन्ति ।

[1] पुरुषत्रयस्य शक्तित्रयेण क्रमेण संबन्धे पुरुषाद्रसं गृहीत्वा प्रकृतिरग्रे पुरुषप्रकृतिक्रमेणोत्पादयतीति स्पष्टीक्रियते । पद्यानि स्पष्टार्थानि । परतः—अर्थादव्ययपुरुषात् ।

[2] एषां पद्यानामभिप्राय एकीकृत्य एकत्रिंशपद्यटीकायां स्पष्टीक्रियते ।

[3] पञ्चविंशं पद्यमारभ्य एकत्रिंशान्तानां पद्यानामाशयः संमिलितरूपेणात्र स्पष्टीक्रियते—अव्ययः पुरुषः परः पुरुष उच्यते, तस्य स्वरूपे मनःप्राणवागाख्याः त्रयोंऽशा अन्तर्भूताः, ते च विशुद्धबलसंबन्धेनैव प्रादुर्भूता इत्येकैकबलविशिष्टा एव । तेन परात्मा—अव्ययपुरुषः त्रिपुटीरूपः मनःप्राणवाग्भिस्त्रिभिः पुटैर्विशिष्ट इत्यर्थः । तैरेव त्रिभिः कोशैश्च त्रिकोशवान् । वाक् प्राणे निविष्टा, प्राणश्च मनसि, मनश्च परात्परे विशुद्धे—इति परस्पराश्रितत्वेन इमे कोशा अप्युच्यन्ते—असिकोशा इव, धान्य कोशा इव वा । एषां त्रयाणां खण्डत्वविवक्षया तु स त्रिखण्डः, त्रिषु च त्रीणि बलानि विशुद्धानि संश्रितानीति त्रिवलोऽपि स उच्यते । एवं

## (२७) [१]मतभेदाधिकरणम्

अथाहुरात्मेव च शक्तिरेषा चतुष्पदी तत्र च मूलशक्तिः।
अव्यक्तरूपा प्रथमोऽस्ति पादस्त्रयोऽन्यपादा महदादयः स्युः ॥३२॥

---

तच्छक्तिभूते महत्यपि सत्त्वरजस्तमांसि त्रयो गुणा इति स त्रिगुणः, ते गुणाः विभिन्नैकबलरूपा एवेति तानपि तमो रजसि, रजः सत्त्वे, सत्त्वं तु विशुद्धे बले—इत्याश्रयाश्रयिभावेनानुध्याय कोशरूपतां मत्वा महानपि त्रिकोशः। त्रिबलत्वं तु स्पष्टमुक्तमेव। अथ मनःप्राणवाक्षु समवेतैस्त्रिभिर्बलैर्विशिष्टस्य त्रिबलस्य सत्त्वरजस्तमोभिस्त्रिबलेन महता सर्गात्—संसर्गात्, योऽक्षरः प्रादुर्भूतः, तत्र परपुरुषस्य त्रीणि, महतश्च त्रीणीति षड्बलानि मातापितृजानीव आत्मभूतानि, इति स षड्बलः। तस्यापि स्वरूपे च मनःप्राणवाचः प्रविष्टा एव, तेषां प्रत्येकमुक्तरीत्या षड्बलत्वेन सोष्टादशबलत्वादष्टादशखण्ड उच्यते। षड्बलानि मनसि, षट् प्राणे, षट् च वाचीत्यष्टादशबलत्वं स्फुटमेव। तथैव तच्छक्तिरहंकृतिरपि मातापितृजैः षड्भिर्बलैरूपेता षड्बला, तत्रापि च सत्त्वे षट्, रजसि षट्, तमसि च षडिति साप्यष्टादशबला। तेन साप्यष्टादशखण्डा। अत्र उनत्रिंशे पद्ये छन्दोऽनुरोधादहंकृतिशब्दस्थाने विवक्षितोऽहंकृदिति शब्दो ग्रन्थे निवेशितः। अष्टादशबलाया अहंकृतेः शक्तेः, अष्टादशबलस्य अक्षरपुरुषस्य च संसर्गेण यः प्रादुर्भूतः क्षरपुरुषः, स मातापितृजैरात्मभूतैः षट्त्रिंशता बलैरात्मवान्। तत्रापि मनःप्राणवाचः समन्विता एवेति तेषां त्रयाणां प्रत्येकं षट्त्रिंशदंशतया सोऽयं क्षर अष्टोत्तर-शतबलविशिष्टः। तथैव तच्छक्तिर्मात्राभिधेयापि अष्टोत्तरशतबलविशिष्टा। अयमेताव-द्बलविशिष्टः क्षरः पुरुष एतावद्बलविशिष्टया स्वशक्त्या संसृज्य यद्रूपमुत्पादयति—तदेव अणु-स्कन्धरूपेण जगद्भवतीति। अत्रापि क्षरपुरुषाद्रसो गृह्यते। मात्रा तु तत्र बलमाधत्ते। एतेनेदं सूचितम्। एतावतां बलानां परस्परं ग्रथनादेव स्थूलता प्रादुर्भवतीति। एतदेव प्राक् प्रथम प्रकरणान्ते २६८, २६९ संख्याङ्किताभ्यां पद्याभ्यामप्युक्तम्—

> षट्त्रिंशदारम्भककर्मजानि क्षरस्य वाक्प्राणमनांसि सन्ति।
> तान्यक्षरे षड्बलितानि तद्वत् परस्य तान्येकबलानि विद्यात् ॥२६८॥
> मात्राप्रवेशात् पृथगात्मशक्त्योः खण्डाः क्षरे त्वष्टशतं भवेयुः।
> तथा क्षरोऽष्टादशखण्ड इष्टः परस्त्रिखण्डोऽथ रसस्त्वखण्डः ॥२६९॥ इति

ते पद्ये अत्र स्पष्टार्थे भविष्यत इति तत्रास्माभिर्न व्याख्याते। अत्रोक्तया रीत्या तयोरर्थोऽनुसन्धेयः।

[१] प्रतिपादिते मते महदाद्यास्तिस्र एव शक्तय उक्ताः, तन्मूलभूतं तु किमपि न प्रतिपादितम्। एतस्मिन् मतभेदे तु इदं प्रदर्श्यते—यथा अव्ययाक्षरक्षरास्त्रयः पुरुषाः, तेषां प्रागवस्था तु परात्परपदेन प्रतिपादिता पुरुषाधिकरणे, तेन चतुष्पादयमात्मा उच्यते—तथैव महदादीनां तिसृणां शक्तीनामपि प्रागवस्था अव्यक्तपदेन व्यपदेश्या गणनीया, ततश्च शक्तिरपि चतुष्पाद् भवतीति। अव्यक्तावस्थाऽवश्यं स्वीकरणीयेत्येवात्र प्रतिपाद्यते। पद्यानि प्रायेण स्पष्टार्थानि। यत्र किञ्चिद्वक्तव्यं तदेवोच्यते।

अव्यक्तमस्तीह[१] रसे बलं ध्रुवं न चेत् किमेतेन रसेन युज्यते ।
किं व्यक्तिमायाति परत्र का पुनः शक्तिः स्वभावः प्रकृतिश्च जायते ॥३३॥

[२]अव्यक्तमेकं बलमिष्यते रसप्रयुक्तमेतत् परतस्त्रिधा भवेत् ।
न चादितस्तत् त्रिविधं पृथक्कृतं स्यान्निर्विशेषे तु रसे प्रसुप्तितः ॥३४॥

[३]युगानि दिव्यानि सहस्रसंख्यया ब्राह्मं भवेत् पुण्यमहस्तथैव ।
रात्रिः सहस्रेण मिता युगानामहस्तु सृष्टिः प्रलयश्च रात्रिः ॥३५॥

अव्यक्ततो व्यक्तय उद्भवन्ति चाहरागमे ताश्च निशागमे पुनः ।
तत्रापि यन्तीत्यवशोऽन्हि संभवो विश्वस्य नाशो निशि चावशो भवेत् ॥३६॥

अव्यक्तमेव प्रभवः प्रतिष्ठा परायणं तज्जगतोऽस्य बीजम् ।
व्यक्तं भवद् विश्वमिदं प्रतीयादव्यक्तमेतस्य परा गतिः स्यात् ॥३७॥

[४]अव्यक्तरूपादिदमक्षरात्स्यात्सर्वं च तत्रैव लयं प्रयाति ।
क्षेत्रज्ञ आत्मा भवतीह देही शरीरभेदादिह भिद्यते यः ॥३८॥

---

[१] रसे शक्तिविकासात् पूर्वमेव अव्यक्तं बलमस्तीति स्वीकार्यम् । यदि मूलं बलं न स्यात्, तर्हि रसेन सह कस्य योगः स्यात् । बलसंसर्गेण च विना कथं पुरुषप्रादुर्भावो भवेत् । शक्तिस्वभावप्रकृतिपदवाच्या च शक्तिः कुतः प्रादुर्भवेत् । विना मूलं कस्यापि प्रादुर्भावासंभवात् ।

[२] यदि उन्मुग्धावस्थमेकं बलं पूर्वं न स्यात्, तर्हि आदावेव सत्त्वरजस्तमो भेदैस्त्रिधा कथं स्यात् । अव्याकृतस्य हिं अनेकधा व्याकरणं भवति, अव्यक्तमेकं विना कस्य व्याकरणं स्यात् । पुरुषसंबन्धादेव त्रिविधत्वं तत्र भवतीति तु न वाच्यम्, पुरुषस्य स्वयं निर्विशेष—तया विशेषाधाने करणत्वासंभवात् । तस्मान्निर्विशेष आत्मनि बलं प्रसुप्तमस्ति, तच्च पुरुषस्य सन्निधिरूपया प्रेरणया उद्बुद्धं पुरुषावयवानां मनःप्राणवाचां संबन्धात् स्वयमपि त्रिविधं भवतीत्येव मन्तव्यमुचितं भवतीति ।

[३] भगवद्गीतास्वपि अव्यक्तादेव सृष्टिरुक्ता—

सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्र विदो जनाः । अ० ८।१७ ।
अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके । ८।१८ । इत्यादि ।

तदेतदर्थतोऽनूद्यात्र पठ्यते ।

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे । ८।१९ ।

[४] एवमव्यक्तादेव जगत उत्पत्तिः, अव्यक्ते एव च लयः, तेनाव्यक्तमेव जगतः परा गतिरित्युक्तम् । परे तु वदन्ति अव्यक्तपदेनाक्षरपुरुष एवोच्यते । तदुक्तं भगवद्गीतासु—

अव्यक्तोऽक्षर इत्युक्तस्तामाहुः परमां गतिम् (८।२१) इति । अक्षर एवाप्रकटत्वादव्यक्त इत्युच्यते । तत एव सर्वमुत्पद्यते तत्रैव च लयं प्रयाति । स एवाक्षरः क्षेत्रज्ञः, आत्मा, देही—इत्यादिभिः पदैरुच्यते । एकोऽपि स शरीरभेदाद् भिद्यत इति ।

[१]पुनः समाजे विदुषां त्रिधाऽभवंस्तर्कक्रमे विप्रतिपत्तयः पुरा ।
आस्ते बलं नास्ति रसोऽथवा बलं बीजं न बीजं तु रसो रसोऽथवा ॥३९॥

व्यक्ति यदव्यक्तमुपैति तस्मादाभाति विश्वं ह्यचरं चरं च ।
[२]देही च नात्मा पृथगस्ति तस्मादव्यक्ततोऽन्यः सुगता वदन्ति ॥४०॥

[३]अव्यक्ततोऽन्यः पुरुषः स आत्मा पृथग्विधोऽस्त्यक्रियनिर्विकारः ।
सचेतनोऽव्यक्तजडस्थितः सन् भोक्ता न कर्ता कपिलोक्तिरेषा ॥४१॥

उक्तं यदव्यक्तमिदं तदेकं स्वतन्त्रमेतज्जनयत्यशेषम् ।
नापेक्षते त्वात्मरसं विसृष्टावसंगिनं कापिलदृष्टिरेषा ॥४२॥

यः [४]प्रत्ययो या प्रकृतिस्तदेतौ भिन्नौ भवेतां हि पृथक्स्वभावौ ।
यतोऽस्य सत्ता प्रकृतिर्मता सा स प्रत्ययो येन तु भातिरस्य ॥४३॥

[५]क्षेत्रज्ञ आत्मा पुरुषो मतस्तैरव्यक्तरूपा प्रकृतिर्हि यस्य ।
परोऽक्षरो वा न च दृश्यते तैरव्यक्तमेवाक्षरसंज्ञमाहुः ॥४४॥

---

[१] तदित्थं मतत्रयं प्रवृत्तमिति आरम्भे पूर्वोक्तमपि पुनः स्मार्यते, अत्र विषये पुरा काले विदुषां समाजे तर्कक्रमे प्रवृत्ते त्रिधा विप्रतिपत्तयः अभवन्—इति संबन्धः। बलमेव सर्वं जगदास्ते, रसो न ततः पृथक् किञ्चिदित्येका प्रतिपत्तिः सौगतापरपर्याणां बौद्धानाम् । अथवा बलं बीजम्—जगत्कारणम्, रसस्तु न बीजम्—कारणम्—इति द्वितीया प्रतिपत्तिः कापिलानाम्—सांख्यानाम् । अथवा रस एव सर्वबीजम्—इति तृतीया प्रतिपत्तिः कृष्णद्वैपायन—प्रभृतीनां वेदान्ताचार्याणाम् । एत एव मतभेदा अत्र मतभेदाधिकरणे विस्तरेण निरूप्यन्ते । पद्यानि प्रायेण स्पष्टार्थानीति क्वचिदेव विशेषो व्याख्यास्यते ।

[२] तस्माद् अव्यक्ततोऽन्यः देही—आत्मा नास्ति-अव्यक्तं बलमेव सन्तानरूपेण प्रवाहि भ्रमेण नित्यात्मरूपेण भासत इति सुगता—बुद्धप्रभृतयो वदन्ति ।

[३] अव्यक्तात् प्रकृतेर्भिन्नः पुरुषपदवाच्यः आत्मा अस्ति चेतनः, परं स निर्विकारः अक्रियश्चेति न कर्ता, अव्यक्ते जडे प्रतिबिम्बरूपेण स्थित एव भोक्ता भवति, न स्वतो भोक्ता—इति कपिलस्य सांख्यकर्तुरुक्तिः । इदमेवाग्रिमेण पद्येन सुस्पष्टं विवृतम् ।

[४] कपिलमतमेव विवृणोति—यथा वैयाकरणनये प्रकृतिः प्रत्ययश्च भिन्नौ भवतः, तथात्र कापिले सांख्येऽपि प्रकृतिप्रत्ययौ पृथक्स्वभावौ सर्वथा भिन्नौ । तत्र अस्य जगतो यतः कारणात् सत्ता; यत्कारणं सत्तारूपेण सर्वत्र प्रविष्टम्, सा प्रकृतिः । प्रत्ययशब्दस्तु ज्ञानार्थकः प्रसिद्धः, तेन जगति भातिः—ज्ञानं यतः प्रवर्तते, स चेतनः पुरुषः ।

[५] एते कापिलाः क्षेत्रज्ञं प्रतिक्षेत्रं भिन्नमेव आत्मानमाहुः अव्यक्तपदेन च प्रकृतिं वदन्ति, सा भिन्न भिन्न पुरुषसंबन्धिनी, पुरुषभेदाद् भिन्ना भासते । तन्मतः पुरुषः क्षरात्मैव । एतद्भिन्नः पर आत्मा अव्ययपुरुषः, अक्षर पुरुषो वा यो व्याख्यातपूर्वः, स तैर्न दृश्यते । अतः ते अव्यक्तमेवाक्षरपदेन वदन्ति । तदुक्तं भगवद्गीतायाम्—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ (अ० ७।२४)

[१]क्षेत्रज्ञभिन्नान्पुरुषान्न ते विदुर्भोक्तॄनकर्तॄनपि तान्प्रचक्षते ।
बीजं यदव्यक्तमिदं तदक्षरं विदुः प्रधानं तु पुमांसमक्षरम् ॥४५॥

[२]परोवरीणैकरसप्रवीणो द्वैपायनः कृष्ण इहान्यथाह ।
प्रधानमव्यक्तमिदं न बीजं बीजं तदव्यक्तमिहाक्षरं यत् ॥४६॥

[३]यदुक्तमैव्यक्तममुष्य पुंसः शक्तिस्ततोऽन्योऽपि पृथङ्निरुक्तः ।
अव्यक्तसंज्ञः पुरुषः स आत्मा सनातनो निष्क्रियनिर्विकारः ॥४७॥

सोऽव्यक्त आत्माऽक्षर इत्युदीरितो नश्यत्सु भूतेष्वपि नैष नश्यति ।
परा गतिः सा परमं च धाम तन्निवर्तते प्राप्य न तं क्वचित्पुनः ॥४८॥

[४]अहं त्वहः स्यां क्रमशस्तदों स्यादव्यक्तमोमक्षरमेव गम्यम् ।
ओंकार एव प्रभवः प्रतिष्ठा परायणं सा परमा गतिर्नः ॥४९॥

[५]क्षेत्रज्ञ आत्मा महतो विशेषो योऽन्यः स उक्थान्महतः क्षरात्मा ।
ततोऽस्ति भिन्नः स परोऽक्षरो वाऽक्षरं तमव्यक्ततया समीक्षे ॥५०॥

---

[१] यदव्यक्तपदेनाक्षरः पुरुषस्तैः प्रतीयत इति मन्येत । तदा ततोऽपरान् कर्तॄन् भोक्तॄन् क्षेत्रज्ञपदवाच्यान् पुरुषान्, न ते जानन्तीति वक्तव्यं स्यात् । यांस्तु अकर्तॄनपि भोक्तॄन् पुरुषांस्ते वदन्ति, ते वस्तुतः क्षरपुरुषा एव—अक्षरस्याभोक्तृताया अत्रोक्तत्वात् । अव्यक्तं सर्वबीजत्वादक्षरपदेनाहुः । पुरुषमपि चाविनाशित्वादक्षरमाहुः । तस्मादक्षरतत्त्वे वास्तविके पूर्वप्रतिपादिते भ्रान्ता एव ते इति भावः ।

[२] अथ द्वैपायनमतं विव्रियते—प्रधानं यदव्यक्तपदेन कापिलैरुक्तम्, तन्न जगद्बीजम्, अप्रकटं रसप्रधानम् यदक्षरम्—अक्षरपुरुषनाम्ना प्राङ्निरुक्तं तदेव जगद्बीजं द्वैपायनमते ।

[३] अव्यक्तं तु तस्य पुरुषस्य शक्तिः, तदाश्रयो रसप्रधानो योऽक्षरो निरुक्तः, स एवात्मा, स च निर्विकारोऽपि शक्तिसङ्गात्सर्वजनक इत्युक्ता प्रक्रिया द्वैपायनमतानुसारिणी। अग्रिमं पद्यमस्यैव स्पष्टीकरणाय विस्पष्टार्थम् ।

[४] इदं पद्यं पूर्वमप्यागतम्—तत्रैवास्माभिर्विस्तरेण व्याख्यातम्—पुनः प्रसङ्गादत्र ग्रन्थे निवेशितम् । व्याख्या पूर्वोक्तैवानुसन्धेया ।

[५] सांख्ये ये पुरुषपदेन स्वीक्रियन्ते—ते तु भोक्तारः क्षेत्रज्ञाः प्रतिक्षेत्रं भिन्ना इति शक्तिविशेषेण महता संपादिताः तद्विशेषाः, ये तु अस्माभिरत्र त्रयः पुरुषा अव्ययाक्षरक्षरा व्याख्याताः, ते तु भोक्तुः क्षेत्रज्ञाद् व्यावहारिक—दृष्ट्या भिन्नाः समष्टिरूपाः उक्थाः जगदुत्पादकाः । तमेव समष्टिभूतमक्षरं सर्वत्राव्यक्तरूपेण प्रविष्टत्वादव्यक्तपदेन समीक्षे—विचारयामि । तमेवाव्यक्तपदेन भ्रमेण सांख्या वदन्तीत्यभिप्रायः ।

१क्षेत्रज्ञभिन्ना अपि ये त्रिपूरुषाः परोऽक्षरो वा क्षर इत्ययं महान् ।
भूतात्मवैश्वानरतैजसास्तथा प्राज्ञश्च शारीरक इत्यमीरसाः ॥५१॥

---

१ क्षेत्रज्ञाद् व्यवहारदृष्टया भिन्ना अपि ये त्रयः पुरुषाः, ततोऽन्योऽपि महान् भूतात्मा, वैश्वानरतैजसप्राज्ञाः, शारीरक आत्मा चेति सर्वे रसाः—रसप्रधानाः रसस्यैव प्रपञ्चोऽयमिति भावः। अन्यत्र वहुत्र पुराणोत्पत्तिप्रसङ्गदेवतानिविदादौ ग्रन्थकृता अष्टादश व्यावहारिका आत्मानो निरूपिताः। त इह केवलेनैकेनैवानेन पद्येन संकेतिताः। ते ज्ञातुमावश्यका इति विभिन्नेषु स्थानेषु ग्रन्थकृदुक्तस्यात्मप्रपञ्चस्य यः सारसंग्रहोऽस्माभिः स्वीये पुराणपारिजातनाम्नि ग्रन्थे कृतः, स इहांशरूपेणोद्धृत्य प्रदर्श्यते। प्राक् पुरुषप्रपञ्चाधिकरण-व्याख्यायामध्यात्मं क्षरकलाः पञ्चवीजचितिः, देवचितिः, भूतचितिः, प्रजा, वित्तमिति नामभिर्व्याख्याताः। तत्र देवचितिः सूक्ष्मशरीरम्, भूतचितिस्तु स्थूलशरीरमित्यपि तत्रोक्तम्। तत्र बीजचितिर्गर्भितायां देवचितौ कारणशरीरगर्भिते सूक्ष्मशरीरे चैतन्याधायकाः पञ्चात्मानः परिगण्यन्ते, भूतचितौ स्थूलशरीरे चैतन्याधायकास्तु नवेति चतुर्दश। चत्वारस्तु परात्परः, अव्ययः, अक्षरः, क्षरः—इति प्राग् व्याख्याता ब्रह्मरूपा मुख्यात्मान इत्यष्टादश शरीरतन्त्रपरिचालका व्यावहारिका आत्मानः। यद्यप्यात्मा एक एवाखण्ड इति विस्तरेणात्र ग्रन्थे प्रतिपादितम्—परं न स कर्ता, न वा भोक्तेति सोपाधिकस्यैव तन्त्रपरिचालकत्वं भोक्तृत्वं च भवतीत्येतदप्यसकृन्निरूपितम्। तादृशोपाधिभेदेनैवेदमष्टादशत्वमपि द्रष्टव्यम्। अधिदैवतस्यैवांशा अध्यात्ममधिभूतं च भवन्तीत्येतदन्यत्र उक्तप्रायम्। तत्राधिदैवतं क्षरकला-रूपेण यानि पञ्चमण्डलान्याख्यातानि स्वयंभूः, परमेष्ठी, सूर्यः, चन्द्रः, पृथिवीति—ईश्वरपक्षे समष्टिभूताक्षरायतन भेदाः। शान्तात्मा, महानात्मा, विज्ञानात्मा, प्रज्ञानात्मा, प्राणात्मेति पञ्च च जीवपक्षे व्यष्टिभूताक्षरायतनभेदाः। आयतनेषु एव च तत् स्वरूपं शक्यते ग्रहीतुमिति तदायतनविशिष्ट एवात्मा ईश्वरपदेन जीवपदेन वा व्यपदेश्यः। समष्टिभूतेश्वरांशा एव जीवायतनरूपेण व्यावहारिकाः पृथक् पृथग् आत्मानः स्व स्व तन्त्रं परिचालयन्ति। तत्र प्राणात्मा तावदिन्द्रिय—तत्परिचालक शक्त्यवच्छिन्न चैतन्यरूपः। विज्ञानात्मा वुद्धच-वच्छिन्नं चैतन्यम्—स एव क्षेत्रज्ञ इत्याख्यायते। महानात्मा ततोऽपि परः, परमेष्ठिनोंऽशभूतः, आकृतिप्रकृत्यहंकृतिनिष्पादकं महदवच्छिन्नचैतन्यम् शान्तात्मा च स्वयम्भूमण्डलस्यांशभूतः सर्वेष्वात्मसु सूत्ररूपेणानुस्यूतोऽन्तर्यामिरूपः। इयमात्मनां परिस्थितिः कठोपनिषदि समाख्याता—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा वुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥ इति (१।३।१०-११)

इह इन्द्रियगोलकेषु स्थितैः शक्तिविशेषैरिन्द्रियैर्गृहीता अर्थाः रूपाद्याः सूक्ष्मरूपेणान्तः प्रविश्य इन्द्रियगोलकेषु इन्द्रियाण्यतिक्रम्य तिष्ठन्तीति तेषामिन्द्रियेभ्यः परत्वमुक्तम्। ततः परं चेन्द्रियप्रेरकस्याणुभूतस्य मनसः स्थितिः। तदनु च वुद्धयादीनां स्वस्वनाम्नैव सन्निवेशः कृतः। अत्र यद्यपि वुद्धिर्महानात्मा चेति व्यष्टिसमष्टिरूपेण भाष्यकृद्भिर्व्याख्यातौ, परं

येनाखिलं विश्वमिदं ततं तथा स्थितानि भूतान्यखिलानि यत्र वा।
परः स आत्मा स परोऽक्षरादपि प्रमाणमेतन्न ततः परं विदुः ॥५२॥

---

व्यष्टिसमष्ट्योरत्र॰ प्रसङ्गाभावान्महानात्मा पृथगेवानुसन्धेयः। स्पष्टीकृतश्चायं महानात्मा श्रीभगवद्गीतासु—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता॥ १४।३–४।

इह हि स्पष्टमाकृतिसंपादकत्वं महदात्मनो विवृतम्। तस्य तस्य भूतस्य यादृशी यादृशी प्रतिनियता आकृतिः सा सर्वापि परमेष्ठिनोंऽशभूतेन महदात्मना संपाद्यते।

"या यस्य प्रकृतिः स्वकर्मजनिता सा किं परित्यज्यते" इत्यादिषु व्यवहृता अन्तरवस्था—विशेषरूपा तत्तत् प्राणिनियता स्वभावापरपर्यायाप्रकृतिश्चाप्यनेनैव महता सम्पाद्यते। सर्वेष्वात्मस्वहंकाररूपेणापि चायमनुस्यूत इत्याकृतिमहान्, प्रकृतिमहान्, अहङ्कृतिमहान् इति त्रेधाऽयं व्याक्रियते, "बुद्धेरात्मा महान् परः" इति श्रुतौ स एवायं समाम्नातः। अहङ्कारोऽत्र पृथङ्न गणितः महत्येवोक्तरूपेणान्तर्भावितः। शान्तात्मा तु अव्यक्तपदेनात्र निर्दिष्टः, यो हि सूत्ररूपतयोपरि व्याख्यातः, सैषा पञ्चधा देवपरिस्थितिरित्युच्यते।

अथ भूतपरिस्थितिर्नवधा व्याक्रियते—आकाशवायुतेजोऽप्पृथिवीनाम्ना पञ्च महाभूतानि प्रसिद्धानि, तेष्वनुस्यूतमात्मचैतन्यं भूतात्मपदेन व्यवह्रियते। तत्र शरीराकार—परिणतेषु वाह्यभूतापेक्षया वैलक्षण्यं दृश्यते। लोष्टप्रस्तरादिषु हि परस्परं वैलक्षण्येन तादृशा विभागाः नाविर्भवन्ति, यादृशाः शरीरे हस्तपादरूपाः परस्परमपरिवर्तमानाः रसरुधिरमांसमेदोऽस्थिमज्जशुक्राण्यन्योन्यरूपेण परिवर्तमानानि धातुपदवाच्यानि च पृथक् पृथगाविर्भवन्ति, तद्वैलक्षण्य सम्पादकमपि—अस्ति किञ्चिदात्मचैतन्यम्, तदेव "शरीरात्मा" इति व्यवह्रियते। सोऽयं शरीरात्मा सर्वविधचेष्टाश्रयः सर्वविधशुभाशुभकर्मकर्ता जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रय विशिष्टश्च। एतत् सहचरोऽन्योऽस्ति हंसात्मा यः पुराणोत्पत्तिप्रसङ्गे श्री गुरुचरणैरेवं व्याख्यातः।

"अथैष हंसात्मा पृथिव्यग्निप्राणोपजनितैरन्नरसमयैर्लोमत्वगसृग्मांसमेदोऽस्थिमज्ज—शुक्ररूपैः शरीरधातुभिरपरामृष्टोऽपि पाञ्चभौतिकवायुशरीरो हिरण्मयेन सूर्य्यज्योतिषा विज्ञानयोगाद् बुद्धिसंपन्नो नक्षत्रमयेन चन्द्रज्योतिषा प्रज्ञानयोगान् मनः संपन्नोऽप्युपपद्यते। किन्तु कर्मजसंस्कारापरिग्रहादेष लोकान्तरं नोपैति। आकल्पं स इहैव पृथ्वीलोके पृथिव्या ऊर्ध्वं चन्द्रादधस्तात् सर्वत्र यथेच्छं पृथिवीं चन्द्रमसं चान्तरा वायुगतो जीवनं धत्ते।" कल्पान्ते च तस्य सर्वविधकर्म्मभोगः क्षणमात्रेणोपसंपद्यते इति केचिन्मन्यन्ते। स एष आत्मा न स्वपिति। सुप्तस्य तु शरीरात्मनः शरीरं परिरक्षितुमन्वीक्षते। यदि दन्दशूकादिः कश्चनघातकः सुप्तपुरुषमाक्रामति, तदाक्रमेण पुरुषोऽकस्मादेव विबुध्यत इति दृश्यते। जागरणसमयमनुसन्धाय सुप्तश्च तस्मिन्नेव समये प्रवुध्यत इति, तदेतत् सर्वं हंसात्मकृतमेव द्रष्टव्यम्। तमेतं हंसात्मानं महर्षिः श्रुतौ दर्शयति—

यः प्रत्ययो या प्रकृतिस्तदेतौ भिन्नौ भवेतामपि नानपेक्षौ ।
न प्रत्ययश्चेदिह युज्यते चेत् ततः स्वरूपं प्रकृतेर्न सिध्येत् ॥५३॥

---

"स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।
शुक्रमादाय पुनरेति स्थानं हिरण्मयः पौरुष एक हंस ॥१॥

प्राणेन रक्षन्नवरं कुलायं वहिः कुलायादमृतश्चरित्वा ।
स ईयते अमृतो यत्र कामं हिरण्मयः पौरुष एकहंसः ॥२॥

एतच्छरीरसंगठनं कुलायो नाम । स कुलायस्त्रयाणामप्येषामात्मनामेक एवोपपद्यते । तत्रैष चित्याग्निमयः शरीरात्मा जीवितावस्थायां स्वकुलायाद् बहिर्गो भवितुं न शक्नोति । हंसात्मा त्वेष भौतिकमर्त्यवायुमयः किञ्चित्कार्यमुद्दिश्य तस्मात् कुलायाद् बहिर्भवन् अशरीर एव वा वायुशरीरो वा चन्द्रमसा कृतात्मत्वादमृतो वायुभूमौ यथेच्छं विहरन् स्थानान्तरतः स्वमभीष्टं शुक्रं गृहीत्वा पुनः कुलायरूपं प्राक्तनं स्वं स्थानमुपैति । स एतत्कुलायाद् वहिर्भवन्नपि सौम्यप्राणसूत्रेण संदधानः स्वमेतत् कुलायं शश्वदेवावधानेन परिरक्षति, नतु कदाचिदेकान्ततस्त्यजति । अपि चैष बहुवत्सरपूर्वमपि कृतं कर्म स्मरन्नेवास्ते । मरणोत्तरं तु कुलाय—विध्वंसादन्यदपूर्वं कुलायं निर्माय तत्र प्रविष्टः कदाचित् प्रत्यक्षो भवति संभाषते च । यथा महाभारतयुद्धोत्तरं मृतपुरुषान् भगवान् वेदव्यासो गान्धारीप्रभृतिभ्यः पाण्डवेभ्यश्च दर्शयामास इति महाभारत आश्रमवासपर्वणि उक्तम् । स एष मनुष्यमरणाद् बहुवर्षोत्तरमपि स्मृतमात्रः कदाचित् केनचिद्बुद्धियोगप्रकारेण प्रत्यक्षः संभवति संभाषणादि लोक—व्यवहारांश्च निर्वाहयति । यथाद्यत्वे तत्र तत्र मण्डल्यामात्मनामाह्वानं प्रचलति तत्रागमनमपि हंसात्मनामेव संभवति ।

शरीरमिदं मर्त्येन चित्याग्निना कृतरूपम् । एतच्छरीरपरिचालकोऽमृताग्निस्तु त्रिभीरूपैरस्मिन् अनुप्रविष्टः वैश्वानरः, तैजसः प्राज्ञश्चेति । वैश्वानरः शरीरावयवान् यथास्थानं संघटयति, अप्रच्युतांश्च रक्षति । सोऽयं लोष्टप्रस्तरादिसाधारण्येन सर्वेष्ववयविष्वभिव्याप्तः, द्वितीयस्तैजसः शरीरं क्रमेण वर्धयति—सोऽयं वृक्षपर्यन्तेषु प्राणिषु स्थितः यत्र यत्र वृद्धिर्दृश्यते । तृतीयस्तु प्राज्ञः ज्ञानेच्छासुखदुःखादीनामाश्रयः ।

त एते त्रयो यज्ञात्मान उच्यन्ते—एतैरेव प्रतिक्षणं शारीरस्य यज्ञस्य सम्पाद्यमानत्वात् । एते च क्रमेणाग्निवायुसूर्याणामंशाः श्रुतिषु प्रतिपादिताः । तत्रायं प्राज्ञः पुनस्त्रेधा भिद्यते—कर्मात्मा, चिदाभासः, चिदात्मा चेति । यत्प्रेरितं शरीरं शुभाशुभानि कर्माण्यनुतिष्ठति, तत्तत्कर्मजनितोऽपूर्वपदेन मीमांसकैराख्यातः पुण्यपापरूपः संस्कारश्च यस्मिन् समवैति स कर्मात्मा नाम । मुख्यस्य चिदात्मनोऽन्तःकरणे प्रतिबिम्बभूतः प्रतिशरीरं भिन्नः शरीरे चैतन्याधायको जीवपदव्यपदिष्टश्चिदाभासः । योऽयं वेदान्तग्रन्थेषु बहुधा विवृतः ।

एतस्मिन् प्रतिबिम्बाधायको बिम्बस्थानीयस्तु चिदात्मा य ईश्वरांशः सर्वप्राणिषु अभिव्याप्त एक एव । अयमेव प्रत्यगात्मेति पदेन वेदान्तिभिर्व्यवह्रियते ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभतानि यन्त्रारूढानि मायया ॥ इति

कृष्णादयो वा कपिलादयो वा यथाहुरेते सुगतादयो वा ।
मतत्रयं तत्र समीक्ष्य मन्मः पश्यन्ति कृष्णादय एव सत्यम् ॥५४॥

---

श्रीभगवद्गीतायाञ्चायमेव प्रतिपादितः । स चायं विभूतिः श्रीः ऊर्गिति त्रिभीरूपै-रभिव्याप्नोति । ईश्वरेण हि—ब्रह्मबलम्, क्षत्रबलम्, विड्बलमिति त्रिविधानि बलान्यादावे-वोत्पादितानि । तत्र ब्रह्मबलं विभूतिरिति, क्षत्रबलमूर्गिति, विड्बलं श्रीरित्याख्यायते । एषां सर्वत्र सद्भावेऽपि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायमवलम्ब्य एकैकस्य प्राधान्येन ब्राह्मणः क्षत्रियो वैश्य इति त्रिधा वर्णविभागः श्रुतिषु स्मृतिष्वाख्यातः । एषामेव च यत्रोत्कर्षः सोऽयमीश्वरविभूतिरीश्वरावतारो वा गण्यते । तदुक्तं भगवद्गीतासु—

यद् यद् विभूतिमत् सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ इति । (१० अ.)

विभूतिमदित्यादावतिशायने मतुब्द्रष्टव्यः । विभूत्यादीनां सर्वप्राणिषु व्याप्तत्वेऽपि अतिशयितविभूत्यादिमान् ईश्वरविभूतिर्वा ईश्वरावतारो वा मन्तव्य इति तात्पर्यम् ।

तदित्थम्—शरीरात्मा, हंसात्मा, वैश्वानरः, तैजसः, कर्मात्मा, चिदाभासः विभूतिः, ऊर्क्, श्रीः, इति नवविधो भूतात्मा व्याख्यातः ।

कर्मात्मानमारभ्य पञ्चविधाः प्राज्ञशब्देनोच्यन्ते । तासु च विभूतिः ऊर्क्, श्रीरिति तिस्रो विधाश्चिदात्मनः । एवञ्च चतुर्धा ब्रह्मपरिस्थितिः, परात्परः पुरुषत्रयमिति । पञ्चधा देवपरिस्थितिः, नवधा च भूतपरिस्थितिरित्याष्टादशात्मविधाः सिद्धाः । एताश्च समष्टिरूपा ईश्वरायतनानि, व्यष्टिरूपाश्च जीवायतनानीति निर्दशितं प्राक् । एता आत्मविधाः संक्षेपेण भगवान् मनुरपि दर्शयामास मनुस्मृतौ द्वादशेऽध्याये—

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् ।
येन वेदयते सर्वं सुखं दुःखञ्च जन्मसु ॥
तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च ।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥

अत्र क्षेत्रज्ञपदेन ब्रह्मपरिस्थितौ व्याख्याताश्चतुर्विधा आत्मानस्तदंशभूतश्चिदात्मा चोक्तः । भूतात्मपदेन च कर्मात्मानः पञ्चधा भूतपरिस्थितितयोक्ता गृहीताः । जीव—संज्ञकान्तरात्मपदेन च चिदाभासो व्याख्यातः । तृतीये पद्ये महानिति पदेन पञ्चधा देव—परिस्थितिः शान्तात्माद्या संगृहीता । तेषां शान्तात्मादीनां पञ्चानामात्मनां पराक्षरादीनां चतुर्णाञ्च भूतात्मसंपर्क उक्त इति सम्यग् विभाव्यतां सुधीभिः ।

इतः परं पद्येनैकेनाव्ययात्मा आवश्यकः स्वीकर्तुमिति पुनः स्मारितम् । व्याकरणो-क्तप्रकृतिप्रत्ययविभागसामञ्जस्यं यत्सांख्यप्रक्रियायां दर्शितपूर्वम्, तत्रापि तयोः परस्परानपेक्षता नास्तीति न तेनापि भवन्मतसिद्धिरिति चैकेन पद्येन स्पष्टार्थेन निरूपितम् । ततश्च द्वाभ्यां कृष्णद्वैपायनादिसिद्धान्त एव समीचीन इति प्रदर्श्य तत्रेयं युक्तिः प्रथमखण्डारम्भ एवोक्ता

न साधु तेषां सुगता विदन्ति न साधु पश्यन्ति च कापिलास्ते ।
परोऽव्ययश्चेन्न रसं प्रदद्यादसत्कथं सद्विधृतं स्फुटं स्यात् ॥५५॥

## (२८) प्रकृत्यधिकरणम्

अथास्य यच्छक्तिबलं परात्मनस्त्रिधा [१]चतुर्धाऽस्य निरूपणं मतम् ।
तत्रैकधेहोदितमेव सांप्रतं त्रिधा क्रमादुत्तरतो निरूप्यते ॥५६॥

ज्योतिः प्रतिष्ठाधृतिभिः सभेदं ब्रह्म त्रिधा व्याक्रियते यथेदम् ।
[२]तमोऽशनायाक्रमणप्रभेदं तथैव कर्मापि मतं त्रिधेदम् ॥५७॥

बलं[३] जले हि त्रिपथानुगं भवेदधश्च तिर्यक् च यथोर्ध्वतश्च खे ।
एवं यदत्र त्रिपथानुगं बलं पश्यन्ति तस्मात्प्रवदन्ति तं रसम् ॥५८॥

[४]बलं यदन्तश्चरमस्ति सर्गतस्ततो रसो याति घनात्मतां क्रमात् ।
संवृत्य संवृत्य पृथक् पृथग्भवेद्रूचुस्तदेवावरणाभिधं बलम् ॥५९॥

बलं प्रवाहि प्लवते यतस्ततो रसे प्रवाहोऽयमुदीक्ष्यते जगत् ।
अनाद्यनन्तोऽयमकोप[५]विग्रहस्तच्चाशनायाभिधमुच्यते बलम् ॥६०॥

---

स्मारिता—यदि अव्ययः सत्तारसं न दद्यात्—तर्हि असत्स्वभावस्य वलस्य—कर्मणः स्थितिरेव कथं स्यात् । प्रकृतिः सांख्याभिमता क्रिया शक्तिरूपा, सौगतैरपि च क्षणिका क्रियैव मुख्या मन्यते । क्रिया च नाश्रयमन्तरेण स्वरूपं धत्ते, इति तस्या आश्रयो रसरूपः सत्पदवाच्योऽभ्युपेय इति ।

[१] इदानीं प्रकृत्यादिशब्दान् स्वाभिमतार्थे योजयति । परात्मनः शक्तिरूपं यद् बलं तत् त्रिविधं भवति, त्रिविधत्वं चास्य चतुर्भिः प्रकारैर्निरूप्यत इत्यर्थः । तत्रैकः प्रकारः सत्वरजस्तमोरूपेण व्याख्यातः । त्रयः प्रकारास्तु अग्रे व्याख्यायन्ते ।

ज्योतिरादिभिः प्रभेदैः ब्रह्म रसो यथा त्रिरूपो व्याख्यातः, तथा बलं कर्मरूपमपि तमः, अशनाया, आक्रमणमिति त्रिभेदं भवतीति त्रिविधत्वस्य द्वितीयः प्रकारः ।

[३] मध्ये रसशब्दस्य ग्रन्थारम्भ एव संज्ञाधिकरण उक्तं प्रवृत्तिनिमित्तं पुनः स्मारयति । पद्यं स्पस्टार्थं पूर्वपठितं च । रस शब्दार्थो जलं प्रसिद्धम्—त्रिपथानुगकर्म तत्रापि दृश्यत इति तत्सादृश्यान्मूलतत्त्वमपि रसशब्देनोक्तमित्यभिप्रायः ।

[४] अथ प्रथमा विधा तमोरूपा आवरणशब्देन तमः पर्यायेणात्र व्याख्यायते । सर्गतः—संसर्गतः—यदा बलम्—अन्तश्चरम् रसेऽनुप्रविष्टं भवति, तदा रसः क्रमेण घनतां याति जलमिव तरङ्गैरन्तःप्रविष्टैः । सैषा घनतैव रसस्यावणम् । एवमावरणंकृत्वा कृत्वा बलं पृथग् भवति—निःसरति । तदावरणकृत् तमोनामकं बलमुच्यत इति भावः ।

[५] अशनायाबलमत्र लक्षितम्—प्रवहणशीलं दृश्यजगदुत्पादकं बलमशनाया, अन्यस्य स्वस्मिन् प्रवेशो येन भवति । इदमग्रे विस्तरेण निरूप्यतेऽनुपदम् । इदन्तु कोषरूपं न भवति, बलान्तरं स्वस्मिन् न आधत्ते—इत्यर्थः ।

रसे[1] विवारोपयिकं यतो बलं विवृण्वदन्ते स्वयमेव नश्यति ।
तदुत्क्रमं नाम बलं प्रचक्षते तदित्थमाहुस्त्रिविधं बलक्रमम् ॥६१॥

तमोऽ[2]मृतस्यावरणं तथेच्छाऽमृतेऽशनायाक्रमणं क्रियाऽस्मिन् ।
स्याज्ज्योतिरन्वावरणं विरुद्धं गतिः प्रतिष्ठामनुभूम्नि कामः ॥६२॥

षट्[3] शक्तयस्ताश्च परात्परं परं विभज्यते तच्च पुनर्द्विधा कृतम् ।
रसत्रयं पूरुष एव कथ्यते बलत्रयं तु प्रकृतिर्निरुच्यते ॥६३॥

बलत्रयोत्पादितमर्थजातं रसत्रयेऽस्मिन्पुरुषेऽनुबद्धम् ।
संतानरूपं भवतीह भोगो[4]बलात्स तस्मात्प्रकृतिर्बलं स्यात् ॥६४॥

[5]कृतेस्तु रूपं प्रथमं रसे यत् स्थितं स भावोऽस्ति तदात्मनः स्वः ।
तेनास्य भोक्तुः पुरुषस्य लग्नं बलं तदाहुः प्रकृतिं स्वभावम् ॥६५॥

## (२९) बलदशाधिकरणम्

बलं हि मृत्युर्मरणस्वभावं न चैकभावेन सदा स्थितं स्यात् ।
क्षणं क्षणं तत्परिवर्तते यत् ततो विचित्रा जगतः स्थितिः स्यात् ॥६६॥

[6]एकैकखण्डे तु बलस्य भेदात् सुप्ताः प्रबुद्धाः पुनरात्मबद्धाः ।
संतानिता चाथ निरात्मता चेत्येवं दशाः पञ्च भवन्ति नित्याः ॥६७॥

---

[1] येन तु रसो विवृतो—विस्तृतो भवति तद् विस्तारोपायभूतं बलम्, आक्रमणम्, उत्क्रमणं वा उच्यत इत्यर्थः ।

[2] अत्र तमः आवरणम्, अशनाया अमृते रसे—इच्छारूपा, आक्रमणं तु क्रिया । ज्योतिरादिषु प्रागुक्तेषु मनः प्राणवाग्रूपेषु ज्योतिर्विरुद्धमावरणम्, ज्योतिरनु-तेन सह तिष्ठति । प्रतिष्ठा विरुद्धा तु गतिः तया सह चरति—क्रियानाम्ना आक्रमणनाम्ना च पूर्वमुक्ता । अशनायारूपा इच्छा तु भूम्नः सहचरी ।

[3] एता ज्योतिराद्याः तिस्रः—आद्यास्तिस्रश्चेति षट् शक्तयः, परम्—अव्ययपुरुषम्—परात्पराद् विभजन्ते, परात्परे एता न सन्ति, परेऽव्यये तु आविर्भवन्तीत्येव तयोर्भेदः ।

[4] उक्तो भोगो बलादेव, तस्माद्बलमेव प्रकृतिशब्दवाच्यम् । भोगायतनस्यैव परैः प्रकृतिपदेनाख्यानात् ।

[5] कृतेः—क्रियायाः प्रथमं रूपं रसे स्थितं स्वमित्युच्यते—रसस्वरूपानुगतत्वात्, तस्मात् प्रथमा कृतिः प्रकृतिरिति व्युत्पत्त्या बलं प्रकृतिपदेनोच्यत इति ।

[6] दृश्यमाने जगतः प्रत्येकं खण्डं भेदाद् भिन्नैः रूपैः, बलं पञ्चधा भिद्यते, ताः पञ्चावस्थाः सुप्तप्रबुद्धाद्याः पद्ये गणिताः । एता दशा, नित्याः काचिदवस्था बलेऽवश्यं तिष्ठतीति भावः ।

बलं प्रसुप्तं रसतो न [१]भिद्यते निर्लक्षणत्वान्न रसोऽवभासते ।
प्रसुप्तमव्यक्तपदेन चक्षते बोधे पुनर्व्यक्तमिदं प्रजायते ॥६८॥

[२]अशब्दमस्पर्शमरूपमव्ययं तथा च नित्यं रसगन्धवर्जितम् ।
अनाद्यनन्तं महतः परं ध्रुवं प्रधानमेतत्प्रवदन्ति सूरयः ॥६९॥

अव्यक्तमेतत्सकलं बलं यत् प्रबोधमायाति महत् तदुक्तम् ।
[३]सा बुद्धिरुद्बोधविशेषहेतोस्तन्मात्रमास्थाय भवन्ति बौद्धाः ॥७०॥

[४]बलप्रबोधः प्रथमः स कम्पो नानाविधं रूपमुदेति कम्पात् ।
नोदो गतिश्चाप्यभवत्सकामस्तमस्तथानेकविधं बलं च ॥७१॥

[५]स्वतन्त्रमेकैकमिदं समस्तं समर्थते नैव बलं विसृष्टौ ।
विनाश्रयं तस्य बलस्य पञ्चावस्था अपि स्युर्न तथोपपन्नाः ॥७२॥

[६]तस्माद्बलं सर्वविधं समेत्य ग्रन्थी भविष्यद्रसतोऽनुगम्य ।
आत्मन्वितामेति विकासयोगाद्भवेदहंकार इति प्रसिद्धम् ॥७३॥

---

[१] रसस्य लक्षणम्—बोधविषयतापादकं बलमेव भवति, शुद्धो रसस्तु स्वयं बोधरूपः, न बोधविषयो भवति। तस्माद्बलस्य स्वापदशायां रसः प्रतीतिविषयो न भवति, बलमप्यव्यक्तम्, तथा च तदा किमपि न भासते—इत्यर्थः। इयमेव प्रलयावस्था। शिष्टं पद्यं स्पष्टार्थम्।

[२] तां प्रसुप्तरूपां बलदशामेव प्रकृतिप्रधानादिशब्दैः सूरयः—सांख्याद्या व्यवहरन्ति, तच्च शब्दादिसर्वप्रत्यक्षगुणरहितम्—महतोऽपि परमावस्थारूपमिति।

[३] बलस्य प्रबोध एव बुद्धिरुच्यते। प्रबोधकारणादेव तस्या बुद्धिरिति नाम। तां बुद्धिमेव परमां मन्यमानाः, ततः परमव्यक्तमात्मानं वा ये न परिचिन्वन्ति, त एव बौद्धा इत्युच्यन्ते। बुद्धेरुपासका बौद्धा इति।

[४] बलस्य प्रबोधे सति कम्पः—अवयवप्रचलनं भवति। बलं हि सावयवमित्युक्तं प्राक्। कम्प एव भयदुःखादिहेतुता तु व्याख्यातपूर्वः। उक्ता कामतमो गत्याद्या अवस्था अपि कम्पादेव भवन्ति—अन्याश्चानेकविधाः कम्पाद् भवन्ति। गतिरपि द्विविधेहोक्ता—नोदः—परप्रेरणम् स्वयं गतिर्देशत्यागश्चेति।

[५] आश्रयं विना बलं न स्वरूपलाभाय न वा परोत्पादनाय भवति—न च तस्येमाः पञ्चावस्था अपि संभवन्ति। आश्रयं विना कुत्र स्वापः, क्ववाप्रबोध इत्याश्रयः पुरुषोऽवश्यमभ्युपेयः।

[६] रसेऽनुगम्य रसतः रससत्तामादायैव बलं सर्वविधं बलं ग्रन्थीभविष्यत्—परस्परग्रन्थनाद् ग्रन्थिरूपेण परिणामं प्राप्तुं योग्यम्—आत्मन्विताम् रसमेवात्मानमवलम्ब्य सात्मकतां प्राप्नोति। इयमेवात्मबद्धतारूपा तृतीयावस्था। तस्यैव महद्रूपस्य विकाशोऽहंकारः।

[१]आत्मन्वि तत् सर्वबलं प्रकुर्वद्रूपं समानादुदितं प्रदेशात् ।
एकत्रभोगं जनयत्यमुष्मिन्नात्मन्यलं कर्म गुणश्च भूत्वा ॥७४॥

[२]महानयं सर्वबलस्तदानीं भवेदहङ्कार इति प्रसिद्धः ।
त्रेधाऽक्षरं तद् व्यपदिश्यतेऽस्मात् तन्मात्र पूर्वाण्यभवन् क्षराणि ॥७५॥

स्याद्वृत्तिसंबन्धवशाद्रसस्थं बलं प्रबुद्धं यदि चेन्महत् तत् ।
बन्धेन योगेन विभूतितोऽहंकारश्च मृत्युः स रसान्वितश्चेत् ॥७६॥

सग्रन्थिकाऽग्रन्थिकभेदतस्ते द्विधा मतायोगविभूतिबन्धाः ।
अग्रन्थिकैस्तै रसगं बलं चेत् ततोऽक्षरं स्यात् क्षरमन्यरूपैः ॥७७॥

[३]प्रतिक्षणोत्पत्तिविनाशनक्रमो यः कर्म संतान इतीर्यते बुधैः ।
एकत्र तत्रात्मनि सोऽक्षरे नवं संस्कारमुत्पाद्य पृथग् विनश्यति ॥७८॥

[४]शैला द्रुमाः पक्षिमृगा मनुष्या ये केचिदन्येऽपि भवन्ति तेषाम् ।
तत्कर्मसन्तानवशेन धारावाहीनिरूपाणि भवन्ति लोके ॥७९॥

[५]एकैकतोऽर्थेषु यदेषु धारावाहीनि रूपाणि पृथग् भवन्ति ।
स कर्मणो ग्रन्थिरनञ्जनेऽस्मिन् रसे समासञ्जनकर्म्ममूलः ॥८०॥

---

[१] सात्मकं वलं कुर्वद्रूपम्—शक्तिरूपतां गच्छद्—आत्मनि कर्मरूपतां क्रमेण गुणरूपतां च गतम् आत्मनि भोगं जनयति । वलस्य शक्तिरूपेण ततः क्रियारूपेण परिणामः । क्रियैव च धारावाहिनी गुणरूपतामाप्नोति । गुणैरेव चात्मा भोक्ता भवतीति भाव्यम् ।

[२] भोगजननकाले महान्—अहङ्काररूपेण परिणमति, अहङ्कारपूर्वक एव हि सर्वत्र भोगः, 'अहं जाने' अहं सुखीत्याद्यनुभवात् । तदेवगक्षरं त्रेधा व्याख्येयम्—अक्षरः पुरुषः, तदुत्पादिका शक्तिर्महानिति ख्यातापि अक्षरपदवाच्या, तज्जनितभोगरूपोऽहङ्कारोऽप्यक्षररूप एव अक्षर—शक्तित्वात्तदभेदं गतस्यास्याक्षरत्वम् । ततः क्षराणि मात्राः । सोऽयं महदहङ्कारतन्मात्रारूपो बलत्रेधाभावस्य तृतीयः प्रकारः । अग्रे पद्यानि स्पष्टार्थानि ।

[३] पूर्वोक्तासु पञ्चावस्थासु सन्तानवृत्तिता व्याख्यायते ।

[४] सर्वेऽपीमे क्रियासन्तानरूपा एवेति सुनिपुणं भाव्यम् ।

[५] शैलद्रुमादीनि पक्षिमृगमनुष्यादिशरीराणि च धारावाहिकर्मसन्तानरूपाण्येवेति पूर्वपद्य उक्तम् । कर्मणां परस्परं ग्रन्थिवशादेव विभिन्नानि स्थूलरूपाणि भवन्तीति बहुधा प्रतिपादितम् । कर्मणां परिवर्तनादेव सर्वेषां वस्तूनां रूपाणि परिवर्तितानि भवन्ति, सच्चिदानन्दरूपो रसस्तु सदैकरस एवेत्यपि अनेकश उक्तम् । कर्मक्रमेण षड्विधा संस्था जनयति—माया, कला, गुणाः, विकाराः, आवरणम्, आसञ्जनम्—इति । पूर्वं स्वयं मितम्—परिच्छिन्नं कर्म अमितस्य मितिं दर्शयति—तरङ्गा इव जलस्येति माया प्रथमं रूपम् । मितिरेव मायेति प्रतिपादितपूर्वम् । सत्यां च मितौ नाना भेदा जायन्ते—इत्यवयवापरपर्याया कला द्वितीयं रूपम् । सावयवतायां च संयोगविभागाद्याः, तज्जन्या स्पर्शरूपाद्याश्च गुणाः प्रवर्तन्त इति तृतीयं रूपम् । गुणानां च परस्परं परिवर्तने विकारा भवन्ति, गुणपरिवर्तनमेवावस्थापरिवर्तनम्, अवस्थापरिवर्तनमेव च विकार इति विकाराश्चतुर्थं रूपम् । विकारैर्मूलभूतं वस्तु

[1]स ग्रन्थिबन्धो भवतीह यावत् तावत् स सर्गः प्रतिपद्यतेऽर्थः ।
एकत्र तत्रात्मनि सृज्यमानतत्कर्म सन्तानज भोग एति ॥८१॥

[2]तत्संचरेण प्रतिसंचरेण प्रवर्तमानं च निवर्तमानम् ।
स्वयं लयं याति बलं रसेऽस्मिन् कृतार्थता साऽस्य निरात्मता च ॥८२॥

[3]सुप्तं बलं शान्तरसे प्रशान्तमेवास्ति तस्मिन्नमृतेऽमृतं तत् ।
तन्मृत्युना तेन वृते रसेऽस्मिन् न किञ्चिदग्रे जगतेतदासीत् ॥८३॥

[4]न किञ्चिदग्रे जगदेतदासीदिति प्रथासीदिह पुष्करेऽस्मिन् ।
एकैक तत्पुष्करसृष्टिहेतुर्जागर्ति निद्रातिबलं स्वतन्त्रम् ॥८४॥

---

आव्रियते—न प्रकाशते—यथा रञ्जिते पटे श्वैत्यं न प्रकाशते—इति आवरणं पञ्चमं रूपम् । तत आवरकं स्वेनैव रूपेण आवृतं वस्तु दर्शयतीति आसञ्जनं षष्ठं रूपम् । स्वयं वस्तुनि आसज्य स्वस्वरूपेण वस्तुनः प्रकाशनमेवासञ्जनं नाम । तदिदमासञ्जनं बलस्यान्तिमावस्था । तदिदमासञ्जनं बल एव बलान्तरस्य, रसस्तु तदालम्बनमात्रम्, परमालम्बनत्वादेव रसोऽप्यन्यान्यरूपेण भासते इत्यत्रोक्तम्—अनञ्जने रसे यद् समासञ्जनरूपं कर्म, तस्य मूलोऽयं कर्मणो ग्रन्थिरित्यन्वयः ।

[1] यावत् कर्मणां ग्रन्थिबन्धो भवति, तावदेव सर्गः अर्थरूपः, अर्थादर्थसृष्टिः प्रतिपद्यते । ग्रन्थिविमोके सोऽर्थोऽपि प्रलीयत इत्यर्थः । तावदेव च तस्मिन्नपि सृज्यमानः तादृश कर्मसन्तानजन्यः भोगः—पूर्वोक्तगुणविकारादिरूपः, एति–प्राप्नोति इत्यर्थः । ग्रन्थिपर्यन्तमेव भोगोऽपि जायत इति ।

[2] एवं ग्रन्थीनामेव सञ्चरप्रतिसञ्चरश्च भवति । ग्रन्थिः, पुनर्ग्रन्थिरिति संचरः, वैपरीत्येन प्रवृत्तौ ग्रन्थिविमोकस्तु प्रतिसंचरः । संचरः प्रवृत्तिः, प्रतिसंचरस्तु निवृत्तिः । अन्ततः निवर्तमानं तत्कर्म रसे एव लयं याति—सुप्तम्—अप्रकटं भवति । सा बलस्य कृतार्थता, यदनेन कर्तव्यमासीत्—तत् कृतमित्यर्थः । इयमेव च निरात्मतारूपा पञ्चमी अवस्था पूर्वमुक्ता ।

[3] बलस्य न किञ्चित् करणमेव स्वापः, अमृते शान्ते रसे सुप्तं तदपि शान्तरूपेण अमृतरूपेणैव च विज्ञायते । तादृशेन शान्तेन बलेनावृते रसे सति सैवावस्था "नैवेह किञ्चनाग्रे आसीत्" इत्यादि शब्दैः श्रुतिस्मृत्योर्व्याख्यायते । यदा नैव किञ्चिदासीदिति श्रुतिस्मृत्योरुच्यते, तदा प्रलयावस्थायामपि रसो बलं चेत्युभयमप्यस्ति, अनयोरभावो न कदापि भवति । बलं सुप्तमेव तदात्वेऽस्तीत्येव विज्ञेयम् । अतएव 'प्रसुप्तमिव सर्वतः (म० स्मृ० १ अ०) इत्येव भगवता मनुना प्रयुक्तम् ।

[4] अनन्तेषु ब्रह्माण्डेषु सर्वत्र प्रलयः स्यादिति न संभाव्यते, तेन भूम्नि–व्यापके रसे सर्वत्र बलसुप्तिर्न कदापि बोध्या । 'नैव किंचनाग्र आसीद्' इत्यादि श्रुतिस्मृत्योः अस्मिन् पुष्करे—ब्रह्माण्डे पुरा किञ्चिन्नासीदित्येवाभिप्रायोऽवगन्तव्यः । पुष्करपदमत्र ब्रह्माण्डबोधकम् । ब्रह्माण्डस्य कर्मत्वरूपेण निरूपणं पुराणादिषु दृश्यते, तत एव पुष्करपदं ब्रह्माण्डार्थकमुपात्तम् । एकैकब्रह्माण्डोत्पादकं बलं पृथक् पृथक् स्वतन्त्रं क्वचिज्जागर्ति, क्वचित् स्वपिति च ।

[१]न सर्वथा भूम्नि रसे समन्ततः प्रसुप्तमेतत्सकलं बलं भवेत् ।
न नोदनाऽस्तीति तथा सति क्वचिद्बलं रसे सुप्तिकरं न जाग्रियात् ॥८५॥

सतीतरस्मिन्नथ पुष्करे तदा रसेन जाग्रद्बलशालिनाऽऽहते ।
रसे प्रबुद्धं बलमत्र पुष्करे लोकत्रयं भावितमेतदीक्ष्यते ॥८६॥

## (३०) बलस्वापप्रबोधाधिकरणम्

[२]बले बलान्यत्र बलान्तराणि पुनर्बलान्यत्र पुनर्बलानि ।
रसे प्रनृत्यन्ति बलानि नानाविधानि तद्विश्वमिदं विभाति ॥८७॥

अनादिकालादमृते रसे बलं सुप्तं क्वचिज्जागीरतं च नृत्यति ।
सुप्तं च जागर्ति मुहुः प्रबोधितं पुनः स्वपित्येव पुनः प्रबोध्यते ॥८८॥

बलं हि शक्तिः प्रथते रसेऽमृते सुप्ता सदा शक्तिघनेऽवतिष्ठते ।
बलस्य सुप्तिर्द्विविधा रसे भवेदघातजा सा प्रतिघातजाऽथवा ॥८९॥

[३]यदेकदेशानुगतिर्न विद्यते सा सर्वदिक्काः बलसुप्तिरिष्यते ।
शक्तेः स्थिता शक्तिमतीह सर्वदा तस्मादियं सुप्तिरघातजामता ॥९०॥

[४]अघातसुप्तिर्द्विविधा रसे स्यात् सुप्तिर्महासुप्तिरिति प्रभेदात् ।
स्वयं निवृत्तिक्रमजा तु साद्या मुमुक्षुतद्यत्नवशेन चान्त्या ॥९१॥

---

[१] यदि तु सर्वस्मिन्नपि भूम्नि बलमेकदा सुप्तं स्यात्, तर्हि नोदकस्य प्रेरकस्य कस्याप्यभावे बलस्य सुप्तस्य जागरणं कथं स्यात् । एकत्र ब्रह्माण्डे प्रसुप्तं तु बलं ब्रह्माण्डान्तरे जाग्रता बलेन नोदनात् पुनर्जागर्तीति इदमेवग्रिमपद्ये स्पष्टीकृतम् ।

[२] बलोपरि बलानां चयनादेव जगदिदं विभातीति विस्तृत्य पद्येऽस्मिन् स्पष्टैरक्षरैरुक्तम् । यद्यपि बलस्य बलान्तराधारता न संभवति, स्वयं क्षणिकत्वेन बलान्तरधारणाय समयस्तेन नाप्यते इति । तथापि रसाधारेण बलं यदा धारावाहि भवति, तदा तत्र बलान्तराधारता संभवति आधेयभतस्य बलस्यापि धारावाहितायां तत्रापि पुनर्बलान्तराधारता संभवतीति प्राग् व्याख्यातम् । एवं बलपरम्परारूपा चितिः संभवतीति । पद्यत्रयमत्र स्पष्टार्थम् ।

[३] बलस्य अघातजां सुप्तिमुदाहरति—यदा बलस्य एकदिगभिमुखीभूता प्रवृत्तिर्न दृश्यते, तदा सर्वदिग्भवा सुप्तिः, सा च अघातजैव संभवतीति भावः । अभिघातेन तु कस्यांचिदेव दिशि सुप्तिः स्याद्, न तु सर्वासु दिक्षु ।

[४] अथ अघातजायाः सुप्तेरपि द्वैविध्यमाह—एका सुप्तिः, एका च महासुप्तिरिति । यत्र पुनर्जागरणं नैव संभवेत्, सा महासुप्तिः । तत्र बलस्वभावेन पूर्वोक्तक्रमेण निवृत्तिर्या जायते—सा सुप्तिः । कदाचित् कार्योत्पादनरूपं जागरणं कदाचिच्च कार्यकरणरूपः स्वाप इति बलस्य स्वभावः । तच्च स्वभावेन सुप्तं बलं पुनरपि जागर्ति—कार्ये प्रवर्तत इत्येषा सुप्तिः । यदा तु मुमुक्षोः—मोक्षमिच्छतः पुरुषस्य, तत्कृतप्रयत्नस्य च योगसमाध्यादेर्निदिध्यासनादेर्वा वशेन सुप्तिर्जायते—सा महासुप्तिः । मुक्त आत्मनि सुप्तं बलं तदात्मावच्छेदेन न कदापि जागर्तीति ।

[१]द्विधा प्रतीघातजसुप्तिरिष्टा सुप्तिर्महासुप्तिरिति प्रभेदात् ।
घातक्षयोत्थाप्य बला तु साद्या महाबलेऽल्पस्य लयस्तु सान्त्या ॥९२॥

[२]यत् सर्वदिश्यानि बलानि चाहितान्याघ्नन्ति चाश्नन्ति परस्परेण सा ।
सुप्तिर्यथा[३] तुल्यबलाश्रितद्वयाकृष्टेर्विरोधान्न पटोऽनुकृष्यते ॥९३॥

[४]महाशिलां यः प्रतिहन्ति हस्ततः सा नोदना शैलबले विलीयते ।

---

तेन मुक्त आत्मा सर्वथा सर्वदा बलविमुक्तो भवतीति भावः । अतएव मुक्तेरनन्ततां घोषयन्ति श्रुतिस्मृतयः । इयं महासुप्तिर्योगसमाधिनिदिध्यासनादिभिः शास्त्रविहितैः पुरुषप्रयत्नैः संपाद्यते । तेन प्रयत्नेन बलस्य लय एव भवति पुनर्जागरणं न संभवतीति तस्य बलस्य महासुप्तिः सा कथ्यते । बलस्यैव कुर्वद्रूपता—कार्यकरणाभिमुख्यं शक्तिरिति आरम्भ एवोक्तम् । तस्माज्जाग्रद्बलवाचकं शक्तिपदमपि प्रकरणेऽस्मिन् ग्रन्थकृता प्रयुक्तम् । इयं चोभयविधापि सुप्तिरप्रतिघातजेत्युक्ता । अत्र बलस्य बलान्तरेण प्रतिघाताभावात् । यद्यपि महासुप्तिः पुरुषप्रयत्नजेत्युक्तम्, तथापि सोऽयं पुरुषप्रयत्नो जीवत्वसंपादकं बलं साक्षान्नाहन्ति—अपि तु तज्जनितामावरणशक्तिमविद्यारूपां निवर्त्य आत्मस्वरूपं प्रकाशयति, तेन स्वकार्यनिवर्तनेन शिथिलीभूतं बलं स्वत एव क्रमेण निवर्तते । तस्मात्पुरुषप्रयत्नसाध्यापि महासुप्तिरप्रतिघातजैव परिगणिता, बलस्य निवृत्तिः स्वाभाविक्येव—पुनर्जागरणमेव पुरुषप्रयत्नसाध्यमिति फलति ।

[१] अथ बलान्तरप्रतिघाताज्जातामेकस्य बलस्य सुप्तिमुदाहरति—सापि सुप्तिः, महासुप्तिरिति द्विधा भिद्यते; घातस्य–प्रतिहन्तुर्बलस्य क्षये यत्र प्रतिहतस्य बलस्य पुनरुत्थानं जायते सा सुप्तिः । घातक्षयेन उत्थाप्यम्—जगरणीयं बलं यत्र सा आद्या—सुप्तिः—इत्यन्वयः । यत्र तु महति बले अल्पस्य बलस्य लयो जायते, न पुनरुत्थानम्—सा अन्त्या महासुप्तिरित्यर्थः ।

[२] केयं सुप्तिरिति व्यख्यायते—सर्वासु दिक्षु प्रेरणया सञ्चरन्ति बलानि परस्परम्, आघ्नन्ति—आघातम्—संघर्षम्, कुर्वन्ति । संघर्षे च प्रबलं बलं दुर्बलमश्नाति—स्वस्मिन् लीनं करोतीति भावः । इयमेव लीनस्य बलस्य सुप्तिरुच्यते, प्रतिघातनिवृत्तौ पुनर्जागरणदर्शनाल्लयो नोच्यते ।

[३] तत्राद्यां सुप्तिमुदाहरति—तुल्यबलौ द्वौ पुरुषौ यदा कञ्चित्पटं विरुद्धदिशोराकर्षतः, तदा द्वयोरपि बलयोः परस्परप्रतिघातेन सुप्तिर्भवति, अतः पटः कस्यामपि दिशि न अनुकृष्यते—स्थिर एव तिष्ठति । तुल्यबलौ पुरुषौ आश्रितं यद् बलद्वयम्—तज्जनिताया आकृष्टेः परस्परं विरोधादिति पद्ययोजना । यदि चैकः पुरुषः पटं परित्यजेत्—तर्हि स द्वितीयाकर्षकपुरुषदिशि तत्क्षणमेव प्रचलेदिति महासुप्तिर्लयो वा नात्राभिधातुं शक्यः । इदं प्रथमाध्याये संसर्गाधिकरणेऽपि बलसामञ्जस्ये उदाहृतम् ।

[४] अथ प्रतिघातजां महासुप्तिमुदाहरति—यः कश्चित् स्वहस्ततः—स्वहस्तं परिचाल्येति ल्यब्लोपे पञ्चम्यन्तात् तसिः । स्वहस्तेन महतीं शिलामाहन्ति, तत्राल्पहस्तबलं महति शिलाबले विलीयते, न च पुनः कदापि जागर्तीति महासुप्तिरियं हस्तबलस्य शिलाबलप्रतिघातकृता ।

[१]कांस्यस्वनो नोदनयाप्रवर्तितोऽवसीदति स्पर्शवशादिहाङ्गुलेः ॥९४॥

[२]अथाशनायावशतस्तु नोदना विस्रस्तभागः प्रतिधीयते यदि ।
तदा न सुप्तिः प्रतिघातसंभवेऽप्यस्यान्यथात्वं तु बलस्य संभवेत ॥९५॥

[३]बलप्रबोधोऽपि तथा द्विधा स्यादाघातजोघातवियोगजो वा ।
धीप्राणभूतेषु बलप्रबोधः सर्वत्र लोके द्विविधोऽपि दृष्टः ॥९६॥

[४]अग्निर्हि पृथ्व्यां दहनानुगं बलं सुप्तं सदा तिष्ठति तत्र तत् पुनः ।
प्रमथ्य संघर्षणतः प्रबोध्यते बलप्रबोधः स हि नोदनाकृतः ॥९७॥

[५]या नोदनोत्सीदति तत् क्रियात्मना तत्राशनाया पृथिवीबलेन यत् ।
विस्रस्तमंशं प्रतिधातुमीहते तेनाऽधरेऽग्नि त्वभियाति नोदना ॥९८॥

---

[१] द्वितीयमुदाहरणम्—यदि कश्चित् स्वहस्तादिना यष्ट्यादिना वा कांस्यपात्रमाहन्ति, तत्र तद्धस्तादिबलेन कांस्येऽनुरणनरूपः शब्दः प्रादुर्भवति। स तु अङ्गुल्या स्पृष्टे तस्मिन् पात्रे निवृत्तो भवतीत्यङ्गुलिस्पर्शेन पूर्वदत्तं बलं सुप्तमिति प्रतीयते। न चास्य पुनर्जागरणमिति महासुप्तिरियम्।

[२] क्वचिद्बलान्तराघातेऽपि बलस्य सुप्तिर्न भवतीत्युच्यते—नोदनया—अन्यबलप्रेरणया विस्रस्तो बलभागो यदि अशनायावशेन प्रतिधीयते—पूर्णीक्रियते, यथा मलरूपेण उदराद् बहिर्गतमन्नं पुनस्तत्राधीयते तथा। तदा प्रतिघातसंभवेऽपि बलस्य सुप्तिर्न भवति, किन्तु बलस्य अन्यथात्वम्—अन्यरूपता जायते। अशनाया अग्रिमेऽधिकरणे व्याख्यास्यते। अत्रोदाहरणमिदं संभवति—यदा कश्चित्पुरुषः स्वहस्तोत्थापितेन तीव्रेण वेगेन कञ्चित् प्रस्तरं संमुखे क्षिपेत्—तत्कयाचिद् भित्त्या प्रतिहतं भवेत्—तदापि हस्तबलस्य सुप्तिर्नजायते—किन्तु अभिमुखगतिस्थाने परावर्तनगतिरूपेण तत्परिणमति। भित्त्या प्रतिहननरूपेण दत्तं तु बलमशनायाबलेन तत् प्राश्नाति। तया अशनाययैव बलस्य विस्रस्तो भागः पुनरत्राहित इति।

[३] अथ बलप्रबोधस्याप्येवमनेकविधता प्रदर्श्यते—धीप्राणभूतेषु इति उदाहरणानि। बुद्धिर्हि निद्रामूर्छादिना प्रतिहन्यते—निद्राद्यपगमे तु प्रबुध्यत इति आघातवियोगजः प्रबोधः। यदि तु मध्य एव केनचिच्छब्दस्पर्शाद्याघातेन जागरणम्—तदा आघातजः प्रबोधः। तथैव प्राणस्यापि मूर्छाद्यपगमे—मध्य औषधादिना जागरणे च द्विविधत्वं भाव्यम्। भूतेषु तु अग्रे उदाह्रियते।

[४] पृथिव्यां काष्ठप्रस्तरादिषु सर्वत्रैवाग्निर्व्याप्तः—'अग्निगर्भा पृथिवी' इति श्रुतिसिद्धान्तात्—तत उत्पत्तिं दृष्ट्वा स्पष्टमनुभवाच्च। तत्र च काष्ठादिगते अग्नौ दहन—शक्तिरप्यस्त्येव, शक्तिशक्तिमतोर्नित्यसंबन्धात्। परं सा शक्तिः प्रसुप्तेति बलरूपैव। तद्बलं काष्ठादिमथनेन प्रस्तरादिसंघर्षणेन वा प्रबोध्यते, तदा प्रस्फुटोऽग्निः काष्ठादिकं प्रत्यक्षं दहति, सोऽयं प्रबोधो नोदनया—मथनसंघर्षणादिजनितबलप्रेरणया जातः।

[५] ननु मथनसंघर्षणादिना बलाघातः काष्ठप्रस्तरादिषु कृतः, तेनाघातेन अग्निगतस्य बलस्य कथं जागरणमिति शङ्कायां तदुपपत्तिमाह—सा मथनसंघर्षणादिना क्रियमाणा नोदना क्रियारूपेण परिणता, उत्सीदति—क्षयं गच्छति। बलजनितायाः शक्तेः क्रियारूपेण परिणतौ

[१]अथ स्थितिस्थापकलक्षणं गुणं यदाहुरेतत् सकलं बलं किल ।
उद्बोध्यते घातवियोगतो यतो नोद्बुध्यते घातबले दृढीकृते ॥९९॥

[२]छदिस्थकीलस्थितलम्बलम्बितग्रावणः स्थितिर्नोदनयोः प्रसुप्तितः ।
तत्रैव हस्ताहितनोदनाबलाज्जागर्ति तिर्यग्गमनानुगं बलम् ॥१००॥

[३]ग्रावास कीलोत्थविरुद्धनोदना वशात्परावृत्य च तावदेजते ।
यावत्तया नोदनया यियासितं दिशोह्लंसेत् सुप्तबलाशनाद् बलम् ॥१०१॥

---

शक्तिक्षय इति पूर्वं प्रतिपादितमेवेति । पृथिव्यां काष्ठादौ स्थितेन बलेन तद्गता अशनायया-विस्रस्तम्—क्षीणतां गतं नोदनारूपं बलं प्रतिघातुम्—प्रपूरयितुमीहते—चेष्टते । क्षीयमाणं मथनादि नोदना बलं काष्ठादिगतेन अशनायाबलेन प्रपूर्यत इत्यर्थः । तेन प्रपूर्यमाणा सा नोदना, अधरे—नीचैः, काष्ठादिष्वन्तःस्थितमग्निमभियाति, तत्रापि नोदना बलं प्रविशति । तेन च अग्नौ स्थितं दहनबलं प्रबोध्यत इत्यभिप्रायः । अशनाया अग्निमेऽधिकरणे विन्नियेते-त्युक्तं प्राक् ।

[१] उदाहरणान्तरमाह—वृक्षशाखादिकं पलाशपत्रादिकं वा यदा वयं हस्तेन मोटयामः, तदा तत् स्वस्थानं जहाति, यदा तु हस्तमपसार्य परित्यज्यते तत्, तदा पुनः स्वस्थाने स्वयमेव गच्छति । सेयं हस्तोन्मुक्तस्य पुनर्गतिः केन हेतुना जातेति तदर्थं सर्वत्र पार्थिवादिपदार्थेषु स्थितिस्थापकसंस्कारं वैशेषिका मन्यन्ते, तेनैव संस्कारेण हस्तोन्मुक्ते शाखापत्रादौ गतिर्जायत इति तैर्निरूपितम् । वस्तुतस्तु तदपि घातवियोगजं बलजागरणमेव । शाखादिषु पलाश-पत्रादिषु वा स्वस्थाने स्थितये बलमस्त्येव, तत एव शाखादिकं स्वस्थाने तिष्ठति पृथिव्या-कर्षणेन नाधो याति । अस्माकं हस्तगतबलेनाघातात् तत् स्थानस्थितिप्रयोजकं बलं प्रसुप्तम्—तेनान्यदेशगतिः शाखादेर्जाता, हस्तस्यापसारणे तु आघातस्य वियोगे तद्बलं जागरणमवाप्य शाखादिकं स्वस्थाने नयतीति । अतएवाघातबले दृढीकृते—अर्थाद्यदि चिरं तच्छाखादिकं मोटितमेव स्थाप्येत; तदा तस्य बलस्य महासुप्तिर्भवतीति न तच्छाखादिकं पुनः स्वस्थाने गच्छति । तत एव कस्यचिद् वृक्षस्य प्रलम्बतामिच्छन्तो मालाकाराद्या इतस्ततः प्रस्रियमाणाः शाखाः केनचिद्यन्त्रेण निरुद्धयोर्ध्वमेव स्थापयन्ति, ततस्ता अवान्तराः शाखा ऊर्ध्वमेव गच्छन्ति, न तु तिर्यक् स्वस्थाने । सोऽयमाघातवियोगज उद्बोधः ।

[२] आघातजस्य बलप्रबोधस्योदाहरणान्तरमाह—छदिः—छादनम्—'छत' इति भाषायां प्रसिद्धम्, तत्र निखातं यत्कीलम्—'कड़ा' इति भाषायां प्रसिद्धम्, तत्र स्थापितं यल्लम्बम्—शिक्यम्—'छींका' इति भाषायां प्रसिद्धम्—तत्र यदि कश्चिद्गुरुभूतो ग्रावा—प्रस्तरो लम्बितः स्यात्, स स्थिर एव तिष्ठति, तत्र द्वे नोदने अधःस्थितपृथिव्याकर्षणजा नीचैर्नेतुं समर्था एका छदिस्थ कलसंपृक्तशिक्यबलसंबन्धाज्जाता पतनं निरुन्धन्ती तु अपरा, तयोर्द्वयोरपि परस्परा-घातात् प्रसुप्तौ ग्रावा स्थिरस्तिष्ठति । यदा तु केनचित् पुरुषेण तच्छनैरपि हस्तेन परि-चाल्यते, तदा हस्ताहितनोदनाबलाद् गतिप्रयोजकं बलं जागर्ति, तं च ग्रावाणं शिक्येन सह तिर्यङ नयति—इतस्ततो भ्रमयतीति आघातरूपया नोदनया बलजागरणस्योदाहरणम् ।

[३] ननु उक्तोदाहरणे प्रसुप्तस्य बलस्य जागरणं किमिति मन्यते, हस्तदत्तया नोदन-यैव प्रस्तरस्य तिर्यग् गतिर्मन्यतामिति चेन्न, प्रस्तरापेक्षयात्यल्पबलेन बालादिहस्तेन कृतेऽपि

[1]छदिस्थकीलस्थितलम्बलम्बितो ग्रावा पतन्नेव न संपतत्यणु ।
कीलाद्विभागे पतनानुगं बलं जागर्ति साघातवियोगजागरा ॥१०२॥

[2]उत्क्षिप्तलोष्टं दिवमेति नोदनोद्भवलघुत्वेन गुरुत्वसुप्तितः ।
घातक्षयोत्थाप्य बलं तु गौरवं प्रबुध्य लोष्टं पुनरत्र पातयेत् ॥१०३॥

[3]अथो यथोद्देशबलं प्रसुप्तं यत्कार्यकालं स बलप्रबोधः ।
बले प्रबुद्धेऽपि बलप्रसुप्तिं बलप्रबोधं पुनरित्थमाहु ॥१०४॥

---

नोदने बहुकालपर्यन्तं तस्य प्रस्तरस्य गतिर्विलोक्यते, न चाल्पबलेन परिचालने गुरुभूतस्य गतिः संभवति, न चाल्पयैव नोदनया बहुकालं गतिः संभवति, तस्मात्पूर्वस्थितं सुप्तमेव बलमल्पया नोदनयोद्बुद्धमित्येव मन्तव्यं स्यात् । तदेतत् स्फुटयन्नाह—पृथिव्याकर्षणजन्यस्य बलस्य हस्तनोदनया जागरणे प्रस्तरोऽधः पतेत्, परं कीलोत्था या विरुद्धा पतनं निवारयन्ती नोदना, तद्वशेन पतनात् परावृत्त्य, स तावत् कालपर्यन्तमेजते—कम्पते—चलति, यावत् तया हस्तनोदनया सुप्तस्य कीलोत्थनिवारकबलस्य अशनात्—स्वान्तर्निगरणाद्, बलम्—पृथिव्याकर्षणजं दिशः विभिन्नासु दिक्षु—तिर्यगिति यावत्, यियासितम्—गन्तुं प्रवृत्तं ह्रसेत्—क्रियामुत्पाद्य क्षीणं भवेत् । हस्तनोदनया प्रबुद्धं पृथिव्याकर्षणबलं कीलोत्थस्थापकबलमश्नाति, परं तदशनेन अस्य अन्यथात्वं जायते । तेन नीचैर्गमनस्थाने तिर्यग् गमनं प्रवर्तते, तच्च तिर्यग् गमनं क्रमेण उद्बुद्धस्य बलस्य ह्रासपर्यन्तं प्रवर्तते । उद्बुद्धबलनिवृत्तौ तु पुनः कीलोत्थबलजागरणे—उभयोर्बलयोः परस्पराघातात् सुप्तौ स्थिरता लभ्यत इत्यर्थः । तदिदं षष्ठ पद्यस्य प्रतिघातेऽपि बलप्रसुप्त्यभावस्याप्युदाहरणं बोध्यम् ।

[1] उक्तोदाहरण एव आघातवियोगजः प्रोद्बोधोप्युदाहार्य इत्याह । पूर्वोक्त छदिस्थ कीलोत्थितलम्बलम्बितो ग्रावा पृथिव्याकर्षणवशात्पतन्नेव कीलोत्थनोदनया निरोधादणु—सूक्ष्ममपि न पतति । कीलाद्विभागे तु पतनप्रयोजकं पृथिव्याकर्षणबलं जागर्तीति झटित्येव पतति । सेयमाघातवियोगजन्या आकर्षणबलस्य जागरा—उद्बोधः—उदाहार्यः ।

[2] यदा केनचित् पुरुषेण लोष्टप्रस्तरादिकमूर्ध्वमुत्क्षिप्यते, तदा तत्र लोष्टप्रस्तरादौ हस्तनोदनया लघुत्वं जागर्ति, तेन विरोधाद् गुरुत्वस्य सुप्तिरिति तल्लोष्टादिकं दिवमेति । गुरुत्वघातकं हस्तबलं तु यदा समाप्तम्, तदा गुरुत्वमुद्बुध्य पृथिव्यामेव तल्लोष्टदिकं पातयति । सोऽयं घातवियोगजो गुरुत्वस्योद्बोधः । गुरुत्वमिदं पृथिव्याकर्षणफलभूतम्, लाघवं तु सूर्याकर्षणफलभूतमिति भाव्यम् । तेनात्रापि गुरुत्वलघुत्वसुप्तिप्रबोधप्रतिपादनमुखेन आकर्षणजनित बलस्यैव सुप्तिप्रबोधावुक्ताविति ध्येयम् ।

[3] अथ प्रबुद्धमपि बलं स्वकार्यधारकपदार्थवियोगे सुप्तमिव प्रतीयते, तादृशपदार्थसन्निधाने तु तत् प्रबुद्धं प्रतीयते । तत्र प्रथमोक्तं यथोद्देशबलम्—द्वितीयं तु कार्यकालमिति वैयाकरणानां यथोद्देशकार्यकालपरिभाषात्र संगमिता । सेयं प्रबुद्धेऽपि बले सुप्तिः, प्रबुद्धस्यैव च जागरणं बोद्धव्यम् । तत्रोदाहरणमग्रिमेण पद्यद्वयेन दत्तम् । अग्नौ प्रबुद्धम्—केनचिदप्रतिबद्धमपि दहनबलं यदि दाह्यस्य काष्ठादेः सन्निधानं न भवेत्, तर्हि कार्यानवलोकनात्सुप्तमिव प्रतीयते । तदिदं यथोद्देशबलम्, प्रबोधेऽपि च सुप्तिरिव । बाह्यवस्तुषु

अग्नौ प्रबुद्धं दहनानुगं बलं शेते यथोद्देशतया सदा स्थितम् ।
तत्रोपसन्नेषु तु दाह्यवस्तुषु प्रबुध्यते तद्दहतीति गम्यते ॥१०५॥

मञ्चे स्थितानां पतनानुगं बलं प्रस्वाप्यते मञ्चवलेन येन तत् ।
स्यान्नित्यमुद्बुद्धमपि प्रसुप्तवन्मञ्चे विधार्याणि न सन्ति यावता ॥१०६॥

## (३१) [1]अशनायाधिकरणम्

[2]अथात्मनीदं प्रथमं प्रबुद्धं महत् सदाऽऽत्मन्वि चिराय तिष्ठत् ।
अनेक रूपेण भवत् त्रिधा स्यादिच्छाविकाराऽऽवरणप्रभेदात् ॥१०७॥

इच्छाऽशनाया च तृषा च कामश्चैते समानार्थतया प्रदिष्टाः ।
[3]अन्नार्थिनी वृत्तिरिहाशनायान्नाकर्षणं स्वात्मनि तत्परस्मात् ॥१०८॥

---

काष्ठवस्त्रादिषु सन्निहितेषु तु तद्बलं प्रबुध्यते सन्निहितं दहतीति तत्कार्यकालम् । तदिदं प्रबुद्धस्यैव जागरणम्—आद्यमग्निदृष्टान्तोऽग्रिमेण प्रथमेन पद्येनोक्तः । तथैव मञ्चे स्थिताः पुरुषा नीचैर्न पतन्तीति पृथिव्याकर्षणजं पुरुषाणां पतनप्रयोजकं वलं मञ्चेन प्रच्यावितमिति सिद्धयति । तेन च मञ्चे पतननिरोधकं वलमस्तीति सिद्धयत्येव । तच्च प्रतिवन्धकाभावान् मञ्चे सदैव प्रवुद्धम् । परं यावता कालेन मञ्चे विधार्यं पुरुषादिकं किमपि न भवेत्, तावति काले तद्बलं प्रसुप्तमिव यथोद्देशवलम्—प्रबोधेऽपि सुप्तिश्च । यदा तु धार्याणि सन्ति, पुरुषा उपविष्टाः, लोष्टादिकं वा मञ्चे धृतम्, तदा तद्विधारकं वलं कार्यकालम्—प्रवोधेऽपि प्रवुद्धं चेति ।

[1] भगवता पाणिनिना "अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु" इति बुभुक्षार्थे अशनाया शब्दो व्युत्पादितः । सा बुभुक्षा, अशनाया चेह वैज्ञानिकभाषायां किं रूपेत्यत्र निरुच्यते ।

[2] रसरूप आत्मपदवाच्ये मूलतत्त्वे प्रथममेव यन् महद्बलं प्रवुद्धम्, यच्च तमेवात्मानमाश्रित्य आत्मन्वि, सदा यत् स्थितम्—पूर्वं सुप्तरूपेण, इदानीं च प्रवोधरूपेण, तद्बलं चिराय-वहुकालम्, तिष्ठद्, अनेकरूपेण भवच्च त्रिधा–त्रिभि रूपैरत्र वैज्ञानिकभाषायां निरूप्यते, इच्छा, विकारः, आवरणमिति । सेयमिच्छैव अशनाया, तृषा, कामशब्दैरुच्यते इत्युत्तरपद्य उक्तम् । तदेतद् वृहदाणयकोपनिषदि आरम्भ एवोक्तम् "नैवेह किञ्चनाग्र आसीद्, मृत्युनैवेदमावृतमासीद् अशनायया, अशनाया हि मृत्युः, तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति" (वृहदा १ अ० २ ब्रा०-१ क) इत्यादि । अग्रे क्रमेण सृष्टिरुक्ता । अत्रश्रुतौ मृत्युपदं वलस्य वोधकम्, अमृतमात्मा, मृर्त्युवलम्—मरणधर्मकत्वादित्यनेकशो व्याख्यातम् । तच्च वलं प्रथममशनायारूपमेवेत्यत्र स्फुटीभवति श्रुतौ ।

[3] न चात्र पाणिनिसूत्रविरोधः शङ्कनीयः, यतो हि पाणिनिना बुभुक्षार्थेऽशनाया शब्द उक्तः, वुभुक्षा च अन्नग्रहणेच्छा, इहापि अन्नग्रहणेच्छैव आशनाया उच्यते इति । यत्परस्मात् स्वात्मनि आकृष्यते, तदेव स्वस्यान्नं भवतीति ।

[१]याचाऽशनाया स हि काम उक्तो भूमारसः कं सुखमुच्यते कम् ।
नान्नात्परं कं गतिरेव तस्मिन्नमस्तदन्नार्थगतिः स कामः ॥१०९॥

[२]इडन्नमुक्तं यदिषे प्रवर्तते सा वृत्तिरिच्छा परकर्षणं हि तत् ।
आकृष्य चाकृष्य परं तदात्मसात् कृत्वात्मरूपाय समर्थयत्यसौ ॥११०॥

[३]यत्पूर्णमासीदमृतं तदल्पवत् प्रजायतेऽल्पक्रमकर्मयोगतः ।
तामस्य चापूर्णदिशां निर्वर्तितुं तत्राशनाया भवतीति मन्महे ॥१११॥

[४]यच्चाश्नुते स्वं तदपूर्णदेशं तदन्नमस्याशनमप्यशो वा ।
अशं तदस्मिन्नयतेऽशनाया सा चाशनायाऽभ्ययते यदन्नम् ॥११२॥

---

[१] इह प्रसङ्गात् शब्दानेव व्युत्पादयति—अशनाया कामशब्देनाप्युच्यते । तत्र कस्य अमः कामः । कं नाम सुखम् । आनन्दरूपत्वादात्मैव 'क' शब्देनोच्यते, तस्य-कस्य, अमः—गतिः, सैव कामः । आत्मनश्च अन्नार्थमेव गतिर्भवति, यतो हि अन्नमपि कमित्युच्यते, अन्नादन्यत्र सुखं न लभ्यत इति ।

[२] इच्छा शब्दस्याप्ययमेवार्थ इत्याह—'इष्' पदमन्नवाचकम्, "इषेत्वा उर्जे त्वा" इति यजुर्वेदारम्भमन्त्रे इष् पदस्य तथैव भाष्यकृद्भिर्व्याख्यातत्वात् इष शब्दस्य निघण्टुषु अन्ननामसु पठितत्वाच्च । 'इष्' ग्रहणार्थं प्रवृत्तिरेव इच्छेत्युच्यते । एवमिच्छया अन्नमादाय, तदात्मसात्कृत्वा—आत्मनिप्रवेश्य आत्मरूपाय समर्पयति—आत्मरूपतां नयतीति ।

[३] ननु सृष्टेरादावेकमेव मूलतत्त्वं रसपदाभिधेयमित्यादित एव व्याख्यातम्, तत्र कः परः ? कस्य वात्मनि प्रवेशः ? कथं वा विभोः परमात्मसात्कर्तुं गतिरिति किमपि नोपपद्यते—इति शङ्कां समाधातुमाह—यदमृतं रसपदाभिधेयं पूर्णमादावासीत्, तन्मायावलेन परिच्छिन्नमल्पवत् प्रज्ञायते—अल्पमिव भवति, यतो हि अल्पक्रमेण—अल्पमात्रेण आक्रमता कर्मणा तस्य योगो जातः, तस्य कर्मण अल्पपरिमाणतया रसोऽपि परिच्छिन्नोऽल्पतां गत इव । स च स्वीयं पूर्णरूपमेव प्राप्तुं सततमिच्छति, यो यस्यांशः स तं स्वमंशिनमेव प्राप्तुं चेष्टते—पृथिवीविकार इव पृथिवीमिति सार्वत्रिको नियमः । तथा च पूर्णतां प्राप्य-तामपूर्णतां दूरीकर्तुमेवाशनाया प्रवर्तते–इत्येव वयं मन्महे । निर्वर्तितुमित्यन्तर्भावितण्यर्थम् । व्यवहारदशायां तथैव व्याख्यातुं शक्यते । वस्तुतस्तु न परिच्छेदो न वा पर इति भावः । अन्येऽपि येंऽशा मायावलेन परिछिद्य कृताः, त एव परे, तान् अयमशनाया बलवानात्मसात्कर्तुं यतते—इत्युपपत्तिः ।

[४] अथाशनाया शब्दं व्युत्पादयति—यत्परम्, तदपि पूर्वोक्तरीत्या मायावलेन अपूर्णदेशम् परिच्छिन्नमेव, तच्चास्याशितुः स्वम्—स्वसंबन्धि, एकस्मादेव पूर्णादुत्पन्नत्वात्, तदस्याशितुरन्नं जातम् । अन्नमेव अशनमिति अशो वा ल्युट् प्रत्ययेन अच्प्रत्यक्षेन वा उच्यते । तम्—अशम्, अस्मिन्नशितरि नयतीत्यशनायाबुभुक्षाबलमुच्यत इति । यद्वा अशनम्—अन्नम्—अयते—तदभिमुखी गच्छतीत्यशनाया ।

[१]अशं तमानीय च तेन यत्स्वं शून्योदरांशं मुहुरश्नुते तत् ।
आख्यायतेऽश्नाति पदेन तत्र प्रपूर्य शून्यं भरते स्वमङ्गम् ॥११३॥

[२]यदाऽत्तुरन्तःप्रविशेदिहान्नं तदोच्यतेऽत्तैव न चैतदन्नम् ।
यदात्मना तत्परिधीयतेऽन्नं तदा तदात्मैव भवेदभेदात् ॥११४॥

[३]यदन्नमश्नाति निजात्मसंमितं तदन्नमात्मानमवत्यशेषतः ।
हिनस्ति तद्भूय इहाद्यते तु यत् तथा कनीयोऽन्नमवत्यलं न तम् ॥११५॥

[४]सर्वं यथा कर्षति वा स्वमन्नं तथा पराग् वा कुरुते क्व चान्नम् ।
द्वयं तदेकं नु निराक्रियाया आकृष्टिरूपान्तरता प्रतीतेः ॥११६॥

[५]तत्राभिवृद्धिर्ह्यशनेऽभिमानोऽथेच्छाऽथ कर्तव्यतया क्रिया च ।
इत्थं नु पञ्चावयवाऽशनाया स्याज्ज्योतिरारभ्य धृतिं नु यावत् ॥११७॥

---

[१] भगवता पाणिनिना व्यवहारार्थम्—'अश भोजने' 'अशू व्याप्तौ' इति धातुद्वयं पठितम् । ययोः 'अश्नाति' 'अश्नुत' इत्यादि रूपभेदः । परं वस्तुगत्या विचारे उभयत्राप्यनुगत एक एवार्थः । यतो हि अन्नं गृहीत्वा तेन स्वीयमुदरम्—रिक्तं भागम्—प्रपूरयति इत्येवान्नग्रहणस्य प्रयोजनम् । तथा च गृहीतमन्नं तं रिक्तमंशं अश्नुते—व्याप्नोति—इति भोजनमपि व्याप्तिरेव । एवम् 'अश्नुते' 'अश्नाति' इत्यत्रैक एवार्थः केवलं स्थूलदृष्ट्या व्यवहारो भिद्यत इत्येतस्य पद्यस्यार्थः ।

[२] यदा अन्नम्—अत्तुः—भोक्तुः, अन्तः प्रविशेत् तदा अत्तैव आख्यायते, न त्वन्नम् । अन्नं स्वे नामरूपे परित्यजति, अत्तैव शिष्यते—इति श्रुत्यंशानुवादः । पूर्वम्—अन्नम्—आत्मना परिधीयते, वस्त्रमिव स्वस्योपरिवेष्टयते, परमन्ततस्तु आत्मनि प्रविष्टं तदन्नमात्मरूपमेव भवति, भेदं जहातीति सर्वानुभवसिद्धोऽर्थः ।

[३] कनीयोऽन्नं भवतीति श्रुत्युक्तमर्थं व्याचष्टे—आत्मनि यावदन्नम्, तदनुरूपमेव यद्यन्नं गृह्यते, तदा तदन्नम्—अशेषतः—सर्वमपि, आत्मानमवति—रक्षति, स्वात्मबलाधिकन्तु भुक्तं हिनस्ति, तस्मात्कनीयः—स्वात्मबलापेक्षया अल्पमेवान्नं बलमवतीति श्रुत्या बोधितमित्यर्थः ।

[४] अधिकन्तु भुक्तमात्मना वमनादिरूपेण परित्यज्यते । तत्र अन्तर्नयनमाकर्षणम्, पराग्—विपरीतं नयनम्—अर्थात् परित्यागस्तु विकर्षणम्—तदाकर्षणं विकर्षणं चैकस्या एव क्रियायाः परिणाम इति द्वयमेकमेव ज्ञेयम् । आकृष्टेः—आकर्षणस्यैव रूपान्तरम् निराक्रिया परित्यागः—विकर्षणमिति प्रतीयते । तस्मादाकर्षणं विकर्षणं चोभयमप्यशनायाबलमेवोच्यत इति भावः ।

[५] अथाशनायायाः पञ्च अवयवा इति व्याख्यायते—ते पञ्चावयवाः—१ अशने अभिवृद्धिः, २ अभिमानः, ३ इच्छा, ४ कर्तव्यता, ५ कर्तव्यताप्रेरिता क्रिया चेति पञ्च अशनायाया अवयवाः । पूर्वं यजु ज्योतिः, प्रतिष्ठा, विधृतिरिति त्रयं व्याख्यातम्, तत्र ज्योतिरारभ्य विधृतिपर्यन्तमिदमशनायाबलं प्रवर्तत इति ।

[१]विस्रस्य तु ज्योतिरिहात्मनश्चेदग्रेऽशनस्याभिमुखं प्रयाति ।
सैषाऽभिवुद्धिस्तमशं ततोऽभिव्याप्नोति तद्रूपतयाऽभिमानः ॥११८॥

तेनात्मविस्रस्त विभागपूर्त्यै या बुद्धिरिच्छा खलु साऽथ यत्नः[२] ।
कर्तव्यताऽऽत्मोदरसक्तिरस्य[३] क्रिया ततोऽन्नं भवतीदमात्मा[४] ॥११९॥

[५]द्विधाशनाया भवतीयमस्यात्मनोऽन्यभुक्तस्यतथाऽन्यभोक्तुः ।
[६]स क्षीण आत्मा तु दरिद्र उक्तो योऽन्येन भुक्तः कलया क्वचित् स्यात् ॥१२०॥

स चाशनाया वशतः स्वहीनां कलां भरत्येष न वृद्धिमेति ।
क्षीणोऽथ यावत् स ततोऽधिकान्नं गृह्णन् पुनर्वृद्धिमुपैति काले ॥१२१॥

अथान्न[७] भोक्ता क्रमशोऽशनायावशादिहान्नं स्ववशे करोति ।
तेनाऽयमात्मा क्रमशोऽभिवृद्धः पुनर्महानेव पुनर्महान् स्यात् ॥१२२॥

रसः[८] समत्वं विषमत्वमस्मिन् बलं तदेतद् द्वयमत्र चिन्त्यम् ।
वैषम्यमायाति बलेन यद्यद् रसेन साम्यं पुनरेति तत्तत् ॥१२३॥

समत्वमात्मा[९] विषमत्ववृत्तेः साम्याय तस्माद् भवति प्रवृत्तिः ।
भरन् विरिक्तं त्वतिरिक्तमंशं समुद्धरन्नेव समीक्रिया स्यात् ॥१२४॥

---

[१] तानि पञ्च क्रमेण व्याचष्टे—यदात्मभूतं ज्योतिः, आत्मनः स्वधनाद्, विस्रस्य पृथग् भूत्वा, अग्रे अशनस्य अन्नस्य अभिमुखं याति, सा अभिवुद्धिरित्युच्यते । तदनन्तरं तज् ज्योतिः, अन्नं यदभिव्याप्नोति, सोऽभिमान इत्युच्यते, अन्नमभि मान—तस्य स्वरूपतया मननमिति व्युत्पत्तेः । अग्रिमं पद्यं स्पष्टार्थम् ।

[२] अत्र कर्तव्यता यत्नपदेनोक्ता ।

[३] आत्मोदरे सक्तिः अन्नस्यासञ्जनम् 'उदररूपतानयनमिति यावत् ।

[४] एवमन्नमात्मनो—भोक्तुरेव रूपं भवतीति ।

[५] आश्रयभेदेन अशनाया द्विविधेत्युच्यते । अन्येन भुक्तो य आत्मा, तत्राशनाया प्रथमा, अन्यस्य भोक्तरि अपि अशनाया भवतीति द्वितीयः प्रकारः ।

[६] प्रथमं प्रकारमाह, सार्द्धं पद्यं स्पष्टार्थम् ।

[७] द्वितीयः प्रकार उच्यते । पद्यं स्पष्टार्थम् । अक्षीणोऽपि स्ववृद्धयर्थमन्नं गृह्णाति, तत्रायं प्रकारः । अत्र सर्वत्रात्मशब्देन बलविशिष्टो रस एवोक्तः ।

[८] रसः सदा सर्वत्र सम इति रस एव समत्वमुच्यते । बलं तु वैषम्यमिति बलमेव वैषम्यमुच्यते । इदं द्वयं सदा विचार्यम् । बलस्य प्रवृत्त्या तेषु तेषु पदार्थेषु वैषम्यमुदेति, रसस्तत्र साम्यं करोति । उक्तेन अशनायाप्रकारेण यदन्नमन्यस्मिन् प्रविशति, तदपि रसबलोभयात्मकमेव स्यात् । तथा च तदन्नगतो रस एव क्षतांशपूर्तिरूपं साम्यं विदधातीति भावः ।

[९] पूर्वोक्तमेव स्पष्टयति । रसो यः समत्वपदेनोक्तः, स एवात्मा । तस्मादात्मप्रेरणया समत्वाय सर्वस्य प्रवृत्तिर्भवति । एष आत्मा विरिक्तम्—शून्यभूतं भरन्, यत्र चातिरिक्तोंऽशः, तमन्नरूपेण ततः समुद्धरन् समीक्रिया—समत्वावस्थासंपादको भवतीत्यर्थः ।

बलस्य[१] मृत्योर्मरणस्वभावाद् भवेत् परेणाहरणाच्च रिक्तम् ।
ऊने स्वभक्ते च समीक्रियार्थात्स्वांशप्रदानाच्च भवेद् विरिक्तम् ॥१२५॥

यावद्रसस्यावरणात्[२] कृतात्मता तावद्बलस्यायतनं नियम्यते ।
स्यात्तत्र चेदायतने विरिक्तता तदाशनाया समतामिटार्पयेत् ॥१२६॥

विरिक्ततायाः[३] अतिरिक्ततायाः अप्यस्ति सर्वायतनेषु सीमा ।
सीमानमुल्लङ्घ्य भवेद् विरेकाऽतिरेकयोरर्थविनाश एव ॥१२७॥

स्वं रिक्तमंशं[४] भरते यदन्यतो बलात् तदन्तर्यमनं समीक्रिया ।
स्वस्यातिरिक्ताच्च परस्य रिक्तकं भरन्नुपांशुः क्रमते समीक्रिया ॥१२८॥

---

[१] ननु रसस्य साम्यरूपत्वे रिक्ततैव कुतो भवतीति शङ्का समाधीयते । न्यून—बलत्वमेव रिक्तता, बलाधिक्यमेव च महत्ता । तत्र बलं मरणस्वभावं स्वभावादेव क्वचिद् विनश्यति, अत एव तन्मृत्युपदेनोच्यते, तेन बलनाशाद्रिक्तता क्वचिद् भवेत् । अन्येन यस्य बलमाहृतम्, तदापि च बलहानं भवति । किं च स्वभक्ते—स्वस्मिन्नाभक्ते स्वसंबन्धितां गतेऽन्यस्मिन् ऊने अल्पबले सति, तस्य समीकरणार्थं स्वांशः—स्वनिष्ठं बलं केनचिदात्मना प्रदीयते, तेनापि स्वस्मिन् बलन्यूनता जायते । इत्थं त्रिभिः प्रकारैर्भवति रिक्ततेति ।

[२] ननु रसो व्यापकः, तत्र रिक्तता तत्पूर्त्या महत्ता वा न संभवति, बलं त्वत्यल्पप्रदेश-मणुमात्रमिति व्याख्यातम्—तत्रापि रिक्तता महत्ता वा कथं स्यात् । ततश्च कस्येयं रिक्तता व्याख्यायते—इति शङ्कां समाधातुमाह । बलविशिष्टो रस एवात्रात्मपदेनोक्तः, तस्यैव रिक्तता महत्ता वा । अणुमात्रमपि पुञ्जीभूतं बलं रसस्य यावन्तमंशमावृणुते, तावानेक-स्यात्मनः प्रदेशो भवति । बलमेव यद्यपि प्रदेशवत्, रसे तु विभौ न स्वतः प्रदेशकल्पना, तथापि पुञ्जीभूतेन बलेन यावदावृतम्, स एव तस्यांश उच्यते । ततश्च बलविशिष्टस्य रसस्यैकैकमायतनम्—प्रदेशो नियतो भवति । तस्माद्विशिष्टस्यात्मनः प्रदेशवत्त्वम् । तत एव सर्वे मनुष्यपशुपक्ष्याद्याः प्राणिनः पर्वतसरिदाद्या अप्राणिनो वा नियतप्रदेशा दृश्यन्ते । नियतात् प्रदेशान् न्यूनतैव रिक्तता, तामेव रिक्ततां तद्गताशनाया अन्यतोऽन्नमादाय पूरयति । यत्र तु वृक्षादीनामिव मनुष्याश्वादीनामिव च वृद्ध्यर्थमेवाशनाया प्रवर्तते, तत्र तान् वर्द्धयति । अन्नेनैवाशनायया नीतेन रिक्तता पूर्तिर्वृद्धिश्च भवतीति ।

[३] पुञ्जीभूतेन बलेनैव रसांशावरणात् सीमा नियम्यते । सीमानमतिक्रम्य विरिक्तता अतिरिक्तता वा न भवति । सीमानमुल्लङ्घ्य जातया रिक्ततया अतिरिक्ततया वा तन्नाम-रूपवतोऽर्थस्य विनाशः, तन्नामरूपहानिरेव भवति, रूपान्तरमेव तदात्मकं वस्तु गच्छति । अत एव सर्वेषां वृक्षादीनां चलानां प्राणिनां वा संनिवेशो नियत एव । नोच्छृङ्खला वृद्धिः, न वाणुरूपता ।

[४] उक्तस्य प्रकारद्वयस्य नामभेदमाह—रिक्त आत्मा यदि स्वस्मिन् स्थितेन अशनायाबलेन स्वमंशं पूरयति, तर्हि तत्पूरणमन्तर्यमनम्—अन्तर्यामो वा श्रुतिषु उच्यते । यदि तु महान् स्वयमेव रिक्तायस्वबलेन स्वांशमर्पयति, तर्हि तदर्पणमुपांशुपदेनोच्यते इति ।

उपांशुरन्तर्यमनं[१] च सर्वदा प्रत्यर्थमस्त्यव्यभिचारतो द्वयम् ।
सर्वेऽपि तस्मात्परतोऽर्थमाहरन्त्यनुक्षणं चाधिकमुत्सृजन्त्यपि ॥१२९॥

[२]सूर्यः समन्तादप आहरत्यथ प्राणं च सर्वस्य यथा हरत्ययम् ।
तथाऽखिलेभ्योऽप्यनिशं ददात्यपः प्राणं च सर्वेषु निवेशयत्सौ ॥१३०॥

[३]चराचरप्राणिशरीरवर्तिनो देवाश्च भूतानि च धीश्च सर्वतः ।
क्षरन्ति चामुत्र सरन्ति संततं प्रतिक्षणं चाददतेऽमुतः समम् ॥१३१॥

[४]उपांशुरन्तर्यमनं च यद्द्वयं प्रत्यात्मदोलायितमित्थमीक्ष्यते ।
तद्दिष्टमस्मिन्नशनायया कृतं त्वस्मिन्परास्मिन्नपि यद्यन्नयत्यशम् ॥१३२॥

[५]उपांशुरन्तर्यमनं च यद् द्वयं द्वयोर्विभेदेन तदर्थयोः क्वचित् ।
क्वचित्पुनः स्यादुभयं तदेककस्यार्थस्य वृत्तिद्वयसंभवादपि ॥१३३॥

द्विष्ठं यदेतद्द्वयमस्ति तर्हि प्राणस्तथाऽपान इति प्रसिद्धिः ।
एकस्थमेतद्द्वयमस्ति तर्हि प्राणस्तथोऽदान इति प्रसिद्धिः ॥१३४॥

---

[१] उपांशुरन्तर्यामश्च पूर्वपद्योक्तावशनायाबलस्यैव रूपे । ते च सर्वेष्वपि दृश्यमानेष्वदृश्यमानेषु च सर्वकालमव्यभिचरतः—नियतरूपेण प्रवर्तेते । तेन परस्मात् किञ्चिदाहरणं स्वस्मिन् स्थितस्याधिकस्य धर्मस्य परत्र प्रदानं चेति दानादाने सदा सर्वत्र व्याप्ते ।

[२] अत्र दृष्टान्ततया सर्वतः प्रधानं सूर्यमेवाह "प्राणः प्रजानामुदयत्येष सूर्यः" इति श्रुत्या सूर्यस्य प्राणरूपता समाम्नाता । बलविधारणे च प्राणशक्ती व्याख्याते । तं बलविधारणात्मकं प्राणं सूर्यः सर्वत्रार्पयति, तत्र तत्र स्थितं चाधिकं पुनः स्वस्मिन्नाकर्षति । अपां त्वाहरणं प्रदानं च सूर्यस्य सर्वत्रोद्घुष्टम्, सुप्रसिद्धं च । सूर्येण सर्वत्र प्राणानांनिवेशनमेव "निवेशयन्नमृतं मर्त्यं च" इति श्रुत्या समाम्नातम् । तदेव स्पष्टैरक्षरैरत्र पद्ये निबद्धम् ।

[३] सर्वत्र चराचरयोः स्थावरजङ्गमयोः शरीरे स्थिता देवाः—इन्द्रियाधिष्ठातारः, भूतानि शरीरस्थानि, धीः—बुद्धिश्च सूर्यस्यांशरूपाणीति सर्वाणि क्षरन्ति—शरीरान्निःसरन्ति । अमुत्र सूर्ये सरन्ति—शरीरान्निःसृतानि सूर्याकर्षणेन सूर्यमण्डले गच्छन्ति, प्रतिक्षणं च नवनवानि अमुतः सूर्यादागत्य सर्वेष्वर्थेषु निविशन्ति, तदेवादनम् । इत्थं प्रतिक्षणं सर्वत्र परिवर्तनं जायते । परं सर्वेषु रस एकरूपोऽन्वित इति परिणाम एवास्मच्छास्त्रेषु मन्यते, न बौद्धाऽभिमतो निरन्वयो विनाश इति स्मर्तव्यम् ।

[४] एवमुपांशुः—परस्मै प्रदानम्, अन्तर्यमनमादानं च पूर्वोक्तं द्वयमशनायाख्येन बलेन क्रियते । अशनाया स्वस्मिन्नपि परस्मिन्नपि च अशम्—अन्नम् योजयति ।

[५] पूर्वोदाहरणे सूर्येण अन्येनान्यत्र प्रदानम्, अन्यैः सूर्येऽर्पणं चोक्तम्, क्वचित्तु एक एवादत्ते, अर्पयति च । यथाऽग्निविस्फुल्लिङ्गः क्वचिन्निहितः स्वयमेवेन्धनमात्मसात्करोति, प्रकाशमन्यत्रार्पयति च । सृष्ट्यादौ त्वेकमेव तत्त्वमिति परस्परादानं परत्रार्पणं च मनागपि नोपपद्यते । तत्रैक एवार्थः स्वांशमेवादत्ते, स्वांशमेवार्पयति च । तत एव पुरुषस्य स्वावयवैरेव यज्ञः श्रुतिपुराणादिषु व्याख्यातः । तत्र प्राणापानोदानसंज्ञाभेदः स्पष्टार्थेनोत्तर—श्लोकेन विवृतः ।

[1]अन्यद्बलं प्राणनवृत्ति यत्स्यादन्यत्तथाऽपाननवृत्ति दृष्टम् ।
अपेक्षते तद्द्वयमत्र मात्रां व्यानस्य तद्ध्यायतनं तयोः स्यात् ॥१३५॥

[2]व्यानस्य चाणुत्वमहत्त्वभेदाद् रिक्तातिरिक्तत्वविशेषतो वा ।
अश्नाति सर्वोऽल्पमनल्पमर्थं तदल्पताधिक्यमितिश्च सिद्धा ॥१३६॥

[3]उक्तं यदत्रायतनं तयोर्द्वयोर्न तद्रसस्यावरणं विना भवेत् ।
तस्मात्तमोमानधृतात्मनि ध्रुवं सदाशनाया भवतीति मन्महे ॥१३७॥

एकं बलं प्राणनवृत्ति यद्भवेत्तदेव लब्ध्वा प्रतिपन्थिनोदनाम् ।
पश्चादिहोदाननवृत्ति जायते गतिर्विरुद्धैकगता ततो भवेत् ॥१३८॥

व्यानस्य नभ्यस्य कृतात्मनः कृता सा नोदनैकस्य गतौ विरोधकृत् ।
तस्मात्तमोरूपधृतात्मनि ध्रुवं सदाशनाया भवतीति मन्महे ॥१३९॥

[4]यथा खलु प्राणिशरीरनिष्ठव्यानेऽल्पकात्मन्यधिकात्मके वा ।
सौरं बलं प्राणनवृत्ति यद्दृष्टं तद्वत्सदापाननवृत्ति भौमम् ॥१४०॥

सौरं बलं प्राणनवृत्ति यत्स्यात्तदेव तु व्यानमुपेत्य भूयः ।
उदानवृत्त्या पुनरूर्ध्वगामि प्रजायते तद्द्वयमत्र दृष्टम् ॥१४१॥

कृमेः पशोः पञ्चजनस्य यच्छिरो यात्यूर्ध्वतः प्राणकृतं तदिष्यते ।
न प्राणिनां वर्ष्म तु विप्रकृष्यते क्वचित्पृथिव्यास्तदपानकर्मणा ॥१४२॥

---

[1] प्राणबलं स्वस्मिन्नादानम्, अपाननं तु परत्रार्पणमिति पूर्वपद्य उक्तम् । तद् द्वयं भिन्नं भिन्नं बलम् । परं कियत्यां मात्रायां प्राणनम्, कियत्तं चापाननमिति मात्रानियमो व्यानेन क्रियते । स हि व्यानः उभयोः प्राणापानयोरायतनम्—आश्रयः । तदुक्तं श्रुत्या—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ इति । (कठोपनिषत् ५ वल्ली ५ म०)

[2] अयं च व्यानो देवरूपस्य वायोरंशो विज्ञेयः । यस्य व्यानो अणुः—अल्पबलः, स रिक्तः, यस्य च महान्—अतिबलः, सोऽतिरिक्तः । व्यानस्याणुत्वे अल्पमश्नाति, महत्त्वे च बहुतरमश्नाति । तदनुसारिण्येव च प्राणापानयोर्वृत्तिर्भवतीति ।

[3] आयतनं न केवलस्य बलस्य संभवति, तस्याणुत्वात् न वा रसस्य, विभुत्वात् । तस्माद्बलेनावृतस्य रसस्यायतनं वोद्धव्यम् । आवरकं च तम इत्युच्यते इत्यग्रे स्फुटं स्यादावरण-प्रकरणे । तस्मात्तमसा आवृत्ते रसे अशनाया भवतीति सारो निष्पन्नः । अग्रे पद्यद्वयं पूर्वोक्तस्यैव स्पष्टीकरणार्थं विस्पष्टाक्षरं च । तत्र व्यानस्य नभ्यत्वम्—मध्यस्थत्वमुक्तम् । नाभिर्नाम मध्यं केन्द्रभूतमिति ।

[4] प्राणिनां शरीरे प्राणापानव्यानाद्याः कोशादौ व्याख्याताः । हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः (इत्यमरकोशे) । सेयं प्राणवृत्तिः सूर्यबलेन, अपानवृत्तिस्तु भूमिबलेन । सूर्यादागच्छद् यद्बलं हृदये प्रतिष्ठितं स सप्राण

प्राणो न चेदत्र भवेत्तदा शिरो न प्राणिनां भूमित उत्थितं भवेत् ।
न चेदपानोऽत्र भवेत्तदा वपुः समुत्थितं सूर्यगतं तदा भवेत् ॥१४३॥

[1]पृथ्वी निजव्याननिबद्धविग्रहा संवत्सरेऽर्केण च संनिकृष्यते ।
क्वचित्पुनस्तेन च विप्रकृष्यते तत्प्राणनापाननवृत्त्यपेक्षया ॥१४४॥

प्राणो न चेदत्र भवेत्तदा मही सूर्यादसंबन्ध [2]वशात्क्वचिद्व्रजेत् ।
न चेदपानोऽत्र भवेत्तदा मही क्षणेन सूर्ये[3] पतितालयं व्रजेत् ॥१४५॥

[4]सूर्योऽप्ययं व्याननिरूढविग्रहः प्राणे न सोमं हरते समंततः ।
अपानतोऽग्निं वितत्यनुक्षणं प्राणन्नपाग्निव तप्यते सदा ॥१४६॥

प्राणो न चेदत्र भवेत्तदा रविर्निर्वाणमेयान्न चिरादनिन्धनः ।
न चेदपानोऽत्र भवेत्तदा रविर्वृद्धोऽपि नाग्निं जनयेदघर्षणः ॥१४७॥

उदान[5] वृत्तिः पुनरत्र सर्वतः साधारणी प्राणमपानमप्यनु ।
यदेति तत्प्राणनमाह तं पुनः प्रेयात्परावृत्य तदित्युदानकम् ॥१४८॥

---

इत्युच्यते, भूमेरागच्छद् यद्बलं गुदमायतनीकृत्य स्थितं, सोऽपान इत्युच्यते । प्राण एव व्यान-मुपेत्य तत्संपर्कादूर्ध्वगामी जायते स उदानः । अपानश्चोर्ध्वमागच्छन् व्यानेन पराहतः समानतां प्रतिपद्य अधः परावर्तते । बालानां मनुष्यपश्वादीनां शिरः पूर्वम् उत्थितम्—ऊर्ध्व-गाम्येव दृश्यते, स एव सौरबलप्रभावः । शिरस्येव सूर्याकर्षणप्रभावो विशेषोक्त इति । भूमिं विहाय सर्वं शरीरमूर्ध्वं न गच्छति, स भूमिबलाकर्षणप्रभावः । एतत्सर्वं बहुभिः पद्यैः स्पष्टा-क्षरैर्व्या- ख्यातं स्वयं बोद्धव्यं विद्वद्भिः ।

[1] यथा प्राणिशरीरे प्राणापानाद्या वृत्तयो व्याख्याताः, तथा पृथिव्यादिष्वपि द्रष्टव्या इति व्याक्रियते—पृथ्व्या अपि मुख्यः प्राणो व्यानस्तस्याः सीमाकृदस्ति । तेन सा विधृता । सा संवत्सरात्मके काले कदाचित्सूर्यसमीपगता सौरप्राणान्—विशेषेणादत्ते, तेन बहुलजलौषध्यादिसंपन्ना भवतीति तस्याः प्राणनवृत्तिः, कदाचित्तु दूरगता स्वमंशं परित्यज्या-ल्पजलौषधिका भवतीति तस्या अपाननवृत्तिः । दूरसमीपगत्वमिह भूभ्रमणमभ्युपेत्य व्याख्यातम् प्राणापानौ तु कथंचित्सर्वैरेवोपपाद्यौ । उत्तरपद्ये एतत्पद्यार्थ एव व्यतिरेकेण विवृतः ।

[2] अनन्त आकाशे क्वचिदपि गच्छेत्—सूर्याकर्षणाभावान्नियते स्थाने न तिष्ठेदित्यर्थः ।

[3] अपाननबलाभावे सूर्याकृष्टा सूर्यपतिता नष्टैव स्यादित्यर्थः ।

[4] सूर्येऽपि द्वयं व्याचष्टे—सोममाहृत्य स्वीयरिक्तांशपूरणं सूर्यस्य प्राणनवृत्तिः । तमेव सोममग्निरूपेण परिणमय्य तस्य सर्वत्र पदार्थेष्वर्पणं त्वपाननवृत्तिरिति । 'अग्नीषो-मात्मकं जगद्' इत्युक्तमेव । तावग्नीषोमावप्येकस्यैव तत्त्वस्यावस्थाभेदेन द्वे रूपे । परिधेः केन्द्राभिमुखमागच्छन् संकुचद्वृत्तिः सोमः: स एव परिणमय्य केन्द्राद्विकासमाप्य परिधिपर्यन्तं गच्छन्नग्निरिति प्राग् व्याख्यातम् । तदत्र परमेष्ठिमण्डलात् सोमोऽनवरतं सूर्यस्य केन्द्राभिमुख-मागच्छति, तमग्निरूपेण परिणमय्य सूर्यः सर्वत्र प्रसारयतीति सूर्यस्य प्राणनापानने अत्र व्याख्याते । उत्तरे पद्ये व्यतिरेकरूपेण ते स्फुटीकृते ।

[5] प्रागुक्तमेवोदानसमानयोः स्वरूपं पुनरत्र प्रकारभेदेन स्फुटीकृतम् ।

22

अपानवृत्तेर्यदुदाननं तत्समानशब्देन वदन्ति वृद्धाः ।
[1]तत्प्राणनं यत् तदपानशब्दं भिन्नोऽत्र शब्दः प्रतिपत्तिहेतुः ॥१४९॥

तदेकतः प्राण उदान एवं तदन्यतोऽपानसमानयुग्मम् ।
व्यानोऽन्तरस्थः क्षमते तदित्थं बलानि सर्वत्र भवन्ति पञ्च ॥१५०॥

[2]उपांशुकान्तर्यमने ग्रहौ स्तो ग्रहे सदोपांशुसवे तृतीये ।
ग्रहत्रयं सर्वगतं यदिष्टं तेनेदमादाय ददाति सर्वम् ॥१५१॥

उपांशुरन्तर्यमनं यतः स्यात्सर्वत्र तस्माद्बलपञ्चकं स्यात् ।
ग्रहौ पुनस्तौ भवतोऽशनायामेकामुपाश्रित्य तदेति चिन्त्य ॥१५२॥

तेनेदमाकर्षति सर्वमन्नं सर्वं परस्मा अशनं ददाति ।
[3]सर्वस्य पुष्टिः कृशता च दानादानाल्पताधिक्य विशेषतस्तः ॥१५३॥

कृशस्य सेच्छायतनप्रपूर्त्यै पुष्टस्य सेच्छायतनप्रवृद्धचै ।
[4]इत्थं द्विधेच्छास्ति रसं ग्रहीतुं तपःश्रमौ चान्यबलं ग्रहीतुम् ॥१५४॥

---

[1] इत्थमेकैव गतिर्व्यवहारसौकर्याय भिन्नैः शब्दैर्व्यवह्रियत इत्यत्र दर्शितम् । अग्रिमं पद्यमपि स्पष्टार्थकं पूर्वोक्तविवरणमात्रम् ।

[2] यावत्र वैज्ञानिकरीत्या उपांश्वन्तर्यामौ व्याख्यातौ, तदनुकरणरूपौ एतन्नामकौ ग्रहौ याज्ञिकप्रक्रियायां प्रसिद्धौ । ग्रहो नाम सोमपात्रम् । यत्र निधाय सोम आहूयते । ते ग्रहा विभिन्ननामानस्तेषु तेषु यज्ञेषु भवन्ति । एतन्नामकास्त्रयो ग्रहा अपि तत्र याज्ञिकप्रक्रियायामाम्नाताः । वैज्ञानिकप्रक्रियायां तु इमे सर्वेषु पदार्थेषु व्याप्ताः । तत एव दानादाने सर्वत्र प्रवर्तते । इमे एव व्याकरणमहाभाष्ये लिङ्गतत्त्वं बोधयितुं स्त्रियामिति सूत्रे 'संस्त्यान प्रसवौ लिङ्गमास्थेयौ' इति संस्त्यानप्रसव शब्दाभ्यां निरूपिते । संस्त्यानम्—परतः प्राप्तस्य संग्रहः, प्रसवः—परत्रार्पणम् । तत्र येषु शब्देषु परत्रार्पणमेव विवक्ष्यते, ते पुल्लिङ्गशब्दाः, येषु तु संस्त्यानं विवक्ष्यते, ते स्त्रीलिङ्गशब्दाः, यत्र तु नोभयं विवक्ष्यते, अर्थस्य स्थितिरेव विवक्ष्यते—ते नपुंसकलिङ्गाः शब्दाः इत्येव संस्कृते शब्दानां लिङ्गव्यवस्था महाभाष्यकृता दर्शिता ।

[3] अनेन दानादानयोरनुमानं प्रमाणमपि दर्शितम् । यदि दानादाने न स्याताम्, तर्हि सर्वे पदार्था जगति एकरूपा एव दृश्येरन् । क्रमेण कस्यचित् पुष्टिः कालान्तरे च कृशता नोपलभ्येत उपलक्षणमेतत् । जडचेतनसाधारण्येन यन्नवत्वं पुराणत्वं च सर्वत्र कालक्रमेण प्रतीयते, तन्न प्रतीयेत । सर्वत्र तु प्रतीयते, तस्मात्परिवर्तनं सर्वत्रानुमीयते । इदन्त्वन्यत्—क्वचित्पर्वतादावतिदीर्घेण कालेन प्रतीयते, क्वचिल्लतावृक्षादौ तु स्वल्पेन कालेन । परं प्रतीयते सर्वत्रैव । तत्परिवर्तनं नैकस्मिन् वर्षे मासे दिने मुहूर्ते घट्यां वा भवतीति प्रतिक्षणमेव मन्तव्यं भवति । तत्रादानस्याधिक्ये दानस्याल्पतायां पुष्टिः । आदानापेक्षया दानस्याधिक्ये तु कृशतेति प्राणापानकृतमेव भाव्यं सर्वत्र ।

[4] पूर्वार्द्धं स्पष्टम् । उत्तरार्द्धे त्विदमुच्यते—शतपथादिब्राह्मणेषु यत्र यत्राभिनवपदार्थोत्पत्तिप्रसङ्गः, स्वस्य पुष्टिप्रसङ्गो वा, तत्र सर्वत्र "स ऐक्षत, स तपोऽतप्यत, सोऽश्राम्यत्" इत्याम्नातम् । तस्यायं भावः—आत्मा तावान्मनोमयः, प्राणमयो वाङ्मय इति बहुधा प्रति-

[१]अथाशनाया द्विविधा परेषामाकर्षणं वा चिरमेकवृत्तिः ।
बलं त्रिधापि क्षणिकं चिरायानुवर्तते तत्तपसा श्रमेण ॥१५५॥
[२]यदिच्छति श्राम्यति तप्यते तपस्ततः क्रिया यज्ञ इति प्रवर्तते ।
यज्ञः स भाति त्रिविधं यदक्षरं न चाक्षरादन्यदिहास्ति किञ्चन ॥१५६॥
[३]प्रजा स यज्ञा खलु सृज्यतेऽखिला यत्सृज्यते यज्ञत एव सृज्यते ।
यथा सः यज्ञोऽयमुदेति सर्वतस्तथाक्षरे कर्म विशिष्य दृश्यते ॥१५७॥

---

पादितम् । तत्र मनसो वृत्तिरिच्छा, प्राणप्रवृत्तिस्तपः, वाचः क्रिया तु श्रम इति पतिपाद्यते, लोकेऽपि मन आदिवृत्तीनामेभिरेव शब्दैर्व्यवहारो दृश्यत इति । तत्र पूर्वं मनसि इच्छावृत्तिर्भवति, तत्प्रेरणया प्राणे तपः, तत्प्रेरणाया च वाचि श्रमः प्रवर्तते । तत्रेच्छा रसग्रहणाय भवति, रसेनैव स्वस्यावस्थितिः, पुष्टिर्वा संभवतीति । तपःश्रमौ तु बलं ग्रहीतुं प्रवर्तेते । प्राणस्य वाचो वा साक्षाद्रूपेण रसे प्रवृत्तिर्न संभवतीति ते स्वव्यापारेण बलमेवोपाददाते, बलन्तु रसविनाकृतं न भवतीति बलस्य परत आदाने तदवच्छिन्नो रसोऽप्यागच्छतीति तेनस्थितिः पुष्टिर्वा संपद्यत इति ।

[१] पूर्वपद्यपूर्वार्द्धोक्तरीत्या क्षीणस्य स्वांशस्य पूर्त्यै या अशनाया—इच्छा, सा चिरमेकरूपता स्थितये भवति, यत्तु पूर्णस्यापि परेषामाकर्षणं तत्पुष्टयै भवतीति द्विविधेच्छा । मे इच्छातपःश्रमा बलस्यैव रूपाणीति तपसा श्रमेण वा बलमेव क्रमेणानुवर्तते । सर्वत्र बलं क्षणिकम्, परं प्रवाहरूपेणानुवर्तत ति पुनः स्मारितम् ।

[२] इमे इच्छातपःश्रमा एवानुवर्तमाना दानादानहेतवो यज्ञपदेनोच्यन्ते । अयं च यज्ञोऽक्षरपुरुषहेतुक इति प्रथमेऽधिकारे पुरुषनिरूपणे व्याख्यातम् । तिस्रो ह्यक्षरस्य हृद्याः कलाः । तत्र विष्णुहेतुकमुपादानम्, इन्द्रहेतुकं परत्रार्पणम्, ब्रह्महेतुका तु स्थितिरिति सर्वं व्याख्यातपूर्वम् । तस्मात्सर्वत्राक्षरमेव विजृम्भते, अक्षरादरिरिक्तं किमपि नास्ति । तदुक्तं भगवद्गीतासु—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥
वं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ इति (३ अ०)

यज्ञः क्रियया जायते, क्रिया च ब्रह्मणा—क्षरपुरुषेण साक्षात् संपाद्यते, परं तद् ब्रह्माक्षरम्—अक्षरात्समुद्भवतीति अक्षरस्य ब्रह्मणो व्यापकतोपसंहृता । इदं चक्रमेव यज्ञः, एतत्परिचालने योगदानं च मनुष्यस्यावश्यकमिति स्पष्टीकृतमेषु गीतावाक्येषु । तदेवात्रापि सम्यग् व्याख्यातम् ।

[३] उदाहृतेभ्यः पूर्वं पठितं गीतापद्यमर्थतोऽनुवदति—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ (भग. गी. ३ अ. १०)

एतद्यज्ञपरिचालनायैव—क्षरे कर्मप्रवृत्तिरिति अन्तिमेन पादेनोपसंहृतम् ।

[1]सदक्षरं तस्य यदस्ति सत्त्वं तदेतदुक्तं विविधैः प्रकारैः ।
इच्छैव शक्तिर्मतमत्र सत्त्वं तयाभवत्सद्भवतीह भूमा ॥१५८॥

## (३२) विक्षेपाधिकरणम्

विक्षेप[2] एवोत्क्रमविक्रमाक्रमा लयः क्षयः कर्म च विक्रिया क्रिया ।
विस्रंसनोच्छित्ति विनाशनिर्गमा गतिः समानार्थतया मता इमे ॥१५९॥

विक्षेप[3]वृत्तिर्जडचेतनस्था तदुद्भवे प्राणमुखाः पुरोक्ताः ।
स्युर्वायवः पञ्चसमं निमित्तं जडेषु भूतेष्वपि चेतनेषु ॥१६०॥

---

[1] 'सदेव सौम्येदमग्र आसीत्, इत्याद्यासु श्रुतिषु अक्षर ब्रह्मैव सत्पदेनोच्यते । तस्य सत्त्वं च बलमेव, तदनेकैः प्रकारैर्व्याख्यातम् । बलेष्वपि प्रधानभूता इच्छैव मुख्यं सत्त्वम् सैव शक्तिः । तया शक्त्या आभवत् समर्थो भवन्—बलविशिष्टो रसो भूमपदेन पूर्वमाख्यातः सत्पदवाच्य इति । इह सदित्यस्य विशेषणत्वं विवक्ष्य आभवदिति नपुंसकलिङ्गनिर्देशः ।

[2] विक्षेपाद्या गत्यन्ताः सर्वे शब्दाः समानार्थाः अत्रोक्ताः । तेन क्रियासामान्यं विक्षेपशब्देनात्र विवरणीयमिति सिद्धम् । इदमत्र ग्रन्थसंगतिबोधाय सावधानमालोच्यम्—यद् बलं शक्तिः क्रिया चेत्येक एवार्थ इत्यादावेव निरूपितं रसबलाधिकरणे । प्रसुप्तावस्था बलम्, कुर्वद्रूपतावस्था शक्तिः, परिणता स्थूला विनश्यदवस्था तु क्रियेति । तत्र बलस्य शक्तिरूपता कथं जायते—इत्यशनायाधिकरणे विवृतम्, अशनाया हि मुख्यं बलम्, सा विभिन्नशक्तिरूपेण कथं कथं दृश्यते, कानि कानि च तस्याः कार्याणीति अशनायाधिकरणे विवृतम् । अथ शक्तिः क्रियारूपेण कथं परिणमतीति अस्मिन् विक्षेपाधिकरणे निरूप्यते । विक्षेपो नाम क्रियाणां पूर्वावस्था, तज्जनिता क्रियास्तत्र तत्रावलोक्यन्ते, तदेव क्रियोत्पादकत्वं विक्षेपस्यात्र व्याख्यास्यते । किं च अस्य तृतीयाधिकारस्यारम्भे मूलबलाधिकरणे महत्पदवाच्यायाः शक्तेस्त्रयो गुणाः सत्त्वरजस्तमः पदवाच्या आख्याताः । तेषां च स्वरूपमिच्छाविक्षेपावरणानीति तत्राधिकरणे सप्तदशे पद्ये उक्तम् । तत्रेच्छा शक्तिः सत्त्वरूपाशनायापदेन पूर्वाधिकरणे निरूपिता । रजो रूपा विक्षेपशक्तिस्त्विह निरूप्यते । रजः परिणतिरूपाः सर्वाः क्रिया इति सांख्यदर्शनविदो विदन्त्येव । ताश्च क्रियाः, तदुत्पत्तिप्रकाराश्च वैशेषिक सूत्रेषु भगवता कणादेन विशिष्य विवृताः । त एते ग्रन्थकृतात्राधिकरणे स्वयुक्तिभिः परिष्कृत्योपनिषदुक्तिभिः समनुगमय्य च समुपनिबद्धाः । एतत्सर्वं मनस्यवधाय प्रकरणमिदं विद्वद्भिरालोच्यम् । अतिविरलसमपीदं प्रकरणं जगदुत्पत्तिं करतलामलकी करोतीति जगदुत्पत्तिक्रमं जिज्ञासमानानामत्युपादेयमिदं प्रकरणमिति ।

[3] सेयं विक्षेप शब्देनोच्यमाना क्रियायाः पूर्वावस्था न केवलं चेतनेषु, अपितु जडचेतनसाधारण्येन प्रवर्तते । क्रियाकारणानि च प्राणाद्याः पञ्च पूर्वोक्ताः, तेऽपि जडचेतन साधारणा एव ज्ञेयाः । पूर्वोक्ताः प्राणापानाद्याः पञ्च चेतनेष्विव जडेष्वपि व्याप्नुवन्तीति भावः ।

[१]तत्कर्मयोनिः खलु पञ्चधा स्याद्विशेषतो जन्तुषु चेतनेषु ।
धृतिश्च श्रद्धा च सुखाशनाया ज्ञानाशनायार्य चयाशनाया ॥१६१॥

[२]धृतिं विना नो लभते बलं क्वचिद् धृतिं विना नैव बलं प्रयोजयेत् ।
धृतिं विना वा न बलेन युज्यते धृतिर्हि विक्षेपणयोनिरिष्यते ॥१६२॥

[३]प्राणं ह्यपानं च निरुध्य मध्ये व्यानो यदा तिष्ठति निश्चलः सन् ।
तदा प्रसादेन परेण धृत्या जीवो लभेतात्मबलं यदिच्छेत् ॥१६३॥

[४]तत्रैव यत्र प्रणिधीयते बलं प्राज्ञेन तच्चेद्विधृतं भवेदलम् ।
तर्त्ताहि विक्षेपबलेन युज्यते न चाधृते वस्तुनि कर्म कल्पते ॥१६४॥

[५]धात्वात्मनः स्याद्विधृतिर्धृतेऽर्थे तामेव निष्ठामिति नारदाय ।
ताण्डश्रुतौ प्राह सनत्कुमारः श्रद्धा हि निस्तिष्ठत एव भाति ॥१६५॥

---

[१] चेतनेषु प्राणिषु तु क्रियायाः करणानि अन्यान्यपि पञ्चविशेषतः सन्ति । ते नामतः पद्योत्तरार्द्धे निर्दिष्टाः, एकैकस्य विवरणं त्वग्रे क्रियते ।

[२] तत्र पूर्वं धृतिं निर्वक्ति—धृतिर्नाम बलस्य धारणम् । उक्तं पूर्वम्—क्षणिकम्, अत्यणुप्रदेशव्यापि च बलं रसे धृतमेव प्रवाहरूपेण स्थिरं भवति, महान्तं प्रदेशं च व्याप्नोति । यदि रसे धृतं न स्यात्, तर्हि क्षणिकस्य बलस्य स्वरूपमेव न गृहीतं स्यात् । तदेवोच्यते—धृतिं विना बलं कश्चिदपि न लभते, धृत्यैव तज्ज्ञानं भवतीत्यर्थः । धृतिं विना तस्य प्रयोगोऽपि न संभवति परत्र । स्थिरतामापन्नमेव परत्र प्रयोक्तुं शक्यत इति । रसेन योगोऽपि धृतिं विना न स्यात्, योगस्य धृति रूपत्वात् । धृतिरेव हि योगः । नान्या योगस्य कापि निरुक्तिः । तस्माद्विक्षेपस्य—कर्मणः, योनिः कारणं धृतिरेवेति मन्तव्यम् ।

[३] धृत्यैव बललाभ इत्यस्य स्थूलं निदर्शनमाह, यदा मनुष्यो भारोत्थापनादि किञ्चिद् बलप्रयोज्यं कार्यं कर्तुमिच्छति, तदा प्राणवायोरुपरिगतिमधोगतिं च निरुद्धय व्यानेन तद्बलकार्यमनुतिष्ठति । धृत्या जनितो यः परः प्रसादः—स्वाभाविकं बलाधिक्यम्, तेनैव जन्तुः सर्वं बलकार्यं कर्तुं शक्नोति, व्यानश्चायं धृति रूप एवेति धृत्यैव सर्वं कर्म कर्तुं शक्यत इति स्पष्टं धृतेः कर्मयोनित्वम् ।

[४] व्यानेन धृतिरूपेण यत्र वस्तुनि बलमाधीयते, तद्वस्तु यदा प्राज्ञेन—बुद्धयवच्छिन्न—चैतन्यरूपेण जीवेन अलम्—पूर्णतया गृहीतं स्यात्, तदैव विक्षेपबलेन तद्वस्तु युज्यते । अधृते—शरीरावच्छिन्नचैतन्येन असंयुक्ते वस्तुनि व्यानोत्थापिता क्रिया न प्रवर्तत एव, तस्मादपि धृतिर्विक्षेपयोनिरिरिति मन्तव्यं भवेत् ।

[५] ताण्डिश्रुतौ ताण्डयमहाब्राह्मणस्यान्तिमे भागे छान्दोग्योपनिषदि सप्तमे प्रपाठके नारदं प्रति सनत्कुमारस्योपदेशे सप्तदशं खण्डमारभ्य सत्यस्य कारणं विज्ञानम्, विज्ञानस्य मतिः, मतेः श्रद्धा, श्रद्धाया निष्ठा, निष्ठाया कृतिः, कृतेः सुखम्, सुखस्य भूमाकारणमिति कार्यकारणपरम्परा समाम्नाता । तत्र निष्ठापदेनेयं धृतिरेवोक्ता—इति पद्यस्याशयः । निस्तिष्ठतः—निष्ठावत एव श्रद्धा जायत इति तत्रोक्तम्—"यदा वै निस्तिष्ठति—अथ श्रद्दधाति, निष्ठात्वेव विजिज्ञासितव्या" इति (ख. २०) तेन निष्ठापदवाच्या धृतिरेव श्रद्धायाः कारणं श्रुत्या श्रावितम् । अतः परैः पद्यैः श्रद्धा विस्तरेण व्याख्यायते ।

[1]क्षेत्रज्ञनामा पुरुषोऽस्ति जीवः स षोडशी चान्द्रमसो निरुक्तः ।
प्रज्ञामयः प्राज्ञ इहास्ति चान्द्री प्रज्ञा ससत्याऽन्यगता हि श्रद्धा ॥१६६॥
[2]श्रद्धा परस्मिन्निहिता द्रवात्मा यतस्ततस्ता उदिता इहापः ।
तत्सत्यमन्तर्यमनाक्षरं यत् स एष विक्षेप बलस्य योनिः ॥१६७॥
[3]श्रद्धामयोऽयं पुरुषोऽस्ति यस्मिन् श्रद्धास्ति यस्यैष भवेत्तदात्मा ।
श्रत्सत्यमुक्तं निजसत्यमस्मिन् धत्तेऽयं सत्ये हितमात्मसत्यम् ॥१६८॥

---

[1] अथ पूर्वोक्तछान्दोग्योपनिषदुक्तसनत्कुमारसंवादगतं कार्यकारणभावं समर्थयमान एव विस्तरेण श्रद्धां निर्वक्ति। स खलु कार्यकारणभावो भूम्नि भगवता सनत्कुमारेण समापित इत्युक्तं प्राक्। स भूमा क्षेत्रज्ञ पुरुष एवेत्यपि तत्र तन्निरूपणदर्शनात् स्पष्टीभवति। स एव जीव इत्युच्यते। जीवब्रह्मणोरैक्यं प्रतिपादयितुमेव स भूमपदेनोक्तः। पूर्वमस्माभिर्व्याकृतेष्वष्टादशसु व्यावहारिकात्मसु सर्वोत्कृष्टो भूतात्मा यः प्राज्ञपदेनोक्तः, स एव व्यावहारिको जीवः। स प्रज्ञाप्रधानत्वादेव प्राज्ञ इत्युच्यते। तस्यां प्रज्ञायामेव चिदात्मनश्चैतन्यं प्रतिविम्बतीति स एव जीवोऽभ्युपेतव्यः। तस्येयं प्रज्ञा च चान्द्री—चन्द्रमण्डलरसभूता। तस्मात्स प्राज्ञोऽपि चान्द्रमस इत्युच्यते। यथा च चन्द्रमाः षोडशकलः, तथायमपि जीवः षोडशकल इति षोडशीत्युक्तः। सर्वमिदं व्याख्यातपूर्वम्। तदिदं कौषीतक्युपनिषदि च आरम्भ एवोपदिष्टम्। सा प्रज्ञा यदि सत्येन सहिता अन्यगता भवति—अर्थादन्यविषयिणी भवति, तदा सा 'श्रद्धा' इत्युच्यते। पुरुषस्य स्वोत्कृष्टगुर्वादिगता आदररूपा प्रज्ञैव श्रद्धेत्युच्यते लोके।

[2] छान्दोग्योपनिषदि पञ्चमे प्रपाठके चतुर्थे खण्डे पञ्चाग्निविद्या प्रकरणे—यदा सूक्ष्मशरीरावच्छिन्नो जीवः स्थूलशरीरान्निष्क्राम्यति, तदा चन्द्रमण्डलं गच्छतीति निरूपणे "असौ वाव लोको गौतमाग्निः। तस्यादित्य एव समित्। रश्मयो धूमः। अहरर्चिः। चन्द्रमा अङ्गाराः। नक्षत्राणि विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति" इत्याम्नातम्। तत्र श्रद्धापदेन कर्मसमवायिन्य आप उच्यन्ते—इति भाष्यकृद्भिर्व्याख्यातम्, तदप्यत्र न विरुद्धमित्युच्यते—यतः श्रद्धा चन्द्ररसत्वाद् द्रवात्मा—द्रवरूपा अस्माभिरुक्ता, तत एव सा अव् रूपा उपनिषद्भाष्यकारैरुक्ता न विरुद्धेति भावः। सा सत्यसहिता परत्राधीयत इति पूर्वपद्य उक्तम्, तत्र सत्यं किमित्याचष्टे—अन्तर्यमनम्—अन्तर्यामिरूपं यदक्षरम्—अक्षरपुरुषकलारूपं तत्सत्यमुच्यते। तदिदं द्वयं श्रद्धासहितमक्षरं विक्षेपस्यकर्मणो योनिः—कारणं भवति।

[3] "श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः" इति भगवद्गीतासूक्तम्—तस्याशयमाह—यस्य पुरुषस्य, यस्मिन्—स्वोत्कृष्टे श्रद्धास्ति, स पुरुषः, तदात्मा—श्रद्धाविषयीभूतपुरुषरूप एव भवति, द्रवरूपया श्रद्धया संश्लिष्योभयोरेकरूपतासंपादनात्। तत एव श्रद्धामयोऽयं पुरुष इत्यादि पूर्वोक्तं वाक्यमुपपद्यते। एकीभावादेव श्रद्धाविषयीभूतस्य महापुरुषस्य दोषाः श्रद्दधानेन न दृश्यन्ते—इति 'दोषदर्शनानुकूलवृत्तिप्रतिबन्धकवृत्तिः श्रद्धा' इति विद्वद्भिर्निरुच्यते। अथ श्रद्धा शब्दं विभज्योत्तरार्द्धेन निर्वक्ति—श्रदित्यव्ययं सत्यार्थकम्—सत्यं च पूर्वोक्तमन्तर्यामिरूपम्, तं स्वस्यान्तर्यामिणं परत्र गुर्वादावर्थे दधाति श्रद्धालुः पुरुषः। तदेवं स्वसत्यस्य परत्र निधानम्, तत्फलभूतं परत्र हितम्—निहितम्—आत्मसत्यमेव वा श्रद्धापदेनोच्यत इति शेषः।

[१]सत्यद्वयं चेदिदमेकभूतं श्रद्धावशात्तर्हि मतं तदस्य ।
[२]मत्वा विजानाति ततोऽस्य सत्यं धत्ते स विज्ञानरसः प्रसादः ॥१६९॥

[३]धृतिः परं स्यात्तदतोऽक्षरं स्वं श्रद्धानमन्तर्यमनाभिधानम् ।
प्रज्ञामतिः सार्थगता निजास्यामर्थस्य विज्ञानमुपैति सत्यम् ॥१७०॥

[४]यत्रैतदन्तर्यमने निजान्तर्यामी धृतिं याति ततोऽवधाय ।
अर्थस्य च स्वस्य च सूत्रतारतम्यं प्रतीयात्कृति साध्यतां च ॥१७१॥

[५]यत्रैतदन्तर्यमने निजान्तर्यामी धृतिं नैति स नैक्यमेति ।
न तत्र विक्षेपबलेन किञ्चित् कर्तुं समर्थोभवतीह कश्चित् ॥१७२॥

[६]यादृक् स्वमन्तर्यमनं ततोऽन्तर्यामी विशिष्टोऽस्ति परस्य यस्य ।
तस्मिन्निजान्तर्यमनप्रयोगः श्रद्धा परा सा च बलोदयाय ॥१७३॥

---

[१] निधातुः निधानाश्रयस्य च सत्यद्वयं यदि श्रद्धासंश्लेषवशादेकीभवति तदा तन्मत-मित्युच्यते। अत एव पूर्वोक्ते सनत्कुमारोपदेशे श्रद्धायामतिकारणत्वमुक्तम् । अत्र मत-पदेनोभयमपि ग्राह्यम्—यदि गुर्वादौ पुरुषविशेषे श्रद्धा, तर्हि स पुरुषो मतो–माननीयो भवति । यदि तु कस्मिंश्चिद् गुर्वादि वाक्ये श्रद्धा, तर्हि तस्य वाक्यस्यार्थो मतो भवति—स्वाभिमतो भवतीत्यर्थः ।

[२] अथ मतिविज्ञानसत्यानां कारणकार्यभावः सनत्कुमारोक्त उपपाद्यते—मत्या पूर्वोक्तमतरूपया विजानाति—विशेषेण स्वरूपज्ञानं धत्ते । स्वस्य श्रद्धाविषयस्य च सम्यक् चित्ते आधानं भवतीत्यर्थः । श्रद्धावशाद्बुद्धिस्तदनुगा जाता, बुद्धौ तस्यार्थस्य प्रवेशश्च विज्ञानम्—विजानाति पदेनोच्यते । ततश्च सत्ये पूर्वोक्तेऽन्तर्यामिभूतसत्येऽपि प्रतिविम्बरूपेण तस्य विज्ञानस्य प्रवेश इति सत्यं धत्ते—इत्युक्तम् । तदिदं सत्यं विज्ञानरसः—विज्ञानस्यापि सारः, यः प्रसादनाम्ना शक्यते निरूपयितुम् ।

[३] श्रद्धाया अपि कारणं निष्ठापदवाच्या धृतिरिति पूर्वोक्तं पुनः स्मारयति—अक्षरे—पुरुषे वलस्य धृत्या–धारणेन स्वं श्रद्धानं प्रवर्तते–यदन्तर्यमनरूपं पूर्वं व्याख्यातम्, श्रद्धया अर्थगता मतिः—प्रज्ञारूपा, निजा-स्वीया, तस्यामर्थप्रवेशो विज्ञानम्—तच्च सत्यमुपैति सत्ये अन्तर्यामिणि प्रतिविम्वतीत्यन्वयः । आशयः पूर्वमुक्तः । अस्मादेव 'श्रद्धया सत्यमाप्यते' इति श्रूयते ।

[४] अथ पूर्वोक्ते सनत्कुमारोपदेशे धृतेरपि कारणं कृतिरुक्ता, तद् व्याचष्टे—अत्र कृतिपदेन धारणप्रयत्नो बोद्धव्यः । पूर्वोक्तरीत्या परस्यान्तर्यामिणि निजान्तर्यामी यदा धृतिं याति, स्वीयया कृत्या–स्वान्तर्यामिगतेन यत्नेन परान्तर्यामिणि संबध्यते, ततः संबद्धस्यार्थस्य स्वस्य च सूत्रतारतम्यम्—प्रावल्यदौर्वल्ये अवधारयति, तेनैव इदं मत्कृतिसाध्यं न वेति निश्चिनोति । प्रवृत्तौ हि इष्टसाधनताज्ञानं कृतिसाध्यत्वज्ञानं च कारणमिति नैयायिका वदन्ति । तज् ज्ञानद्वयं कृतिजन्यया धृत्या जायते—इत्याशयः ।

[५] यत्र तु अर्थस्यान्तर्यामिणा निजान्तर्यामिणो धृतिरूपः संवन्धो न जायते, तत्र विक्षेपबलं न प्रवर्तते, किमपि च कर्तुं प्रवृत्तिर्न जायते ।

[६] यत्र तु तारतम्यज्ञाने धृत्या जातं स्वापेक्षया परस्योत्कर्षमन्तर्यामी जानाति, तदा श्रद्धा जायत इत्यर्थः । तत एव विक्षेपबलोदयः, ततश्च क्रियेत्यादिः क्रमोऽनुवर्तते ।

[१]सुखाशनायैव तु कर्मयोनिः सुखानुबन्धादिह चेतनोऽयम् ।
प्रवर्तते कर्मसु सर्वलोकः सुखं न पश्येन्न कदापि कुर्यात् ॥१७४॥

यत्कर्म कृत्वा सुखमाप्तुमीष्टे यत्कुर्वतो वास्ति सुखानुभूतिः ।
या वा क्रिया या च धृतिः सुखा स्याच्छ्रद्धा सुखा चेत् बलमेति कर्तुम् ॥१७५॥

[२]तज्ज्ञानसिद्धयै क्वचिदर्थसिद्धयै कर्म द्विधैवोभयथाऽपि तत्र ।
सुखोपलब्धिः परमार्थसिद्धिस्तदर्थताज्ञानधनादिषु स्यात् ॥१७६॥

धृत्या[३]दयश्चेतनमात्रनिष्ठा इतीह साध्वी न धृतिः परेषाम् ।
जडेष्वपीमे समवद्भवन्तीन्द्रियाद्यभावात्तु न तत्प्रतीतिः ॥१७७॥

सर्वत्र[४] सत्यं समवत्प्रपद्ये श्रद्धाधृती सत्यकृते भवेताम् ।
मिथोऽनुसाराद्यपसारतो वा संप्रीतिविद्वेषणयोः प्रसिद्धिः ॥१७८॥

---

[१] अथ कृतेरपि कारणं सुखं सनत्कुमारेणोक्तम्—तदाशयं विवृणोति—सर्वस्यापि कर्मणो योनिः कारणं सुखस्याशनाया—सुखप्राप्तेरिच्छेत्यर्थः । तदेतत्स्पष्टैरक्षरैः पद्येऽस्मिन् व्याख्यातम् । अग्रिमेणापि च पद्येन स्पष्टाक्षरेण तदेव स्पष्टीकृतम् ।

[२] स्वीयेन कर्मणा साक्षात् सुखं नाप्यते, अपि तु कर्मणा क्वचिज् ज्ञानसिद्धिः—ज्ञानप्राप्तिः, क्वचिच्चार्थप्राप्तिर्भवति । ज्ञानं चार्थश्चेति प्राणिनो द्वयमपीष्टम् । अज्ञातं ज्ञातुं जीवस्य सदा प्रवृत्तिर्भवति, अलब्धं चार्थं लब्धुं सदा प्रवृत्तिः । उभयथापि इष्टप्राप्त्या सुखं जायते—इति सुखमेव सर्वत्र कृतौ नियोजकम्, सुखार्थतया तु ज्ञानधनादिलाभार्थमपि प्रवृत्तिर्जायते । ततो वित्तैषणा, पुत्रैषणा, लोकैषणेति एषणा त्रयं यद् व्यवहरन्ति; तदत्रैवान्तर्गतं द्रष्टव्यम् । ताः सर्वा अपि सुखार्था एवेति सुखाशनायापर्यायायां सुखैषणाया-मन्तर्भूता इति ।

[३] आरम्भे धृत्यादीनि विशेषेण चेतनक्रियाकारणानीत्युक्तम्—तस्यायमेव भावो यच्चेतने धृतिश्रद्धादीनां स्फुटं प्रतीतिर्जायते । वस्तुतस्तु इमे धृत्याद्याः सर्वेऽपि भावाश्चेतना-चेतनसाधारणा इत्याह—चेतनमात्रनिष्ठाः—इति परेषां धृतिः—निष्ठा न साध्वी । एते भावा जडचेतनसाधारणा एवेति वैदिकः सिद्धान्तः । तर्हि जडेषु प्रतीतिः कुतो न जायते ? तत्रोच्यते— न्द्रियाभावात्—जडेषु इन्द्रियाणामविकसितत्वात् प्रतीतिर्न जायत इति । इन्द्रि-याण्येव प्रत्यायकानि । यत्रेन्द्रियाणि न विकसितानि, तत्र प्रतीतिसाधनाभावादप्रतीतिरिति । सेन्द्रियं चेतनद्रव्यं निरिन्द्रियमचेतनम्—इति चरकोक्तिः पूर्वमुक्तात्रापि स्मर्तव्येति ।

[४] धृत्यादीनां जडचेतनसाधरणत्वमेवोपपादयति—अन्तर्यामिरूपं सत्यं यदाख्यातम्—तस्य सर्वत्र व्यापकत्वे न कस्यापि विवादः, अन्तर्यामिरूपेण चैतन्यं सर्वत्र व्याप्तमिति सर्वेऽपि वैदिका मन्यन्त एव । एष एव भूमपदेन पूर्वोक्ते नारदसनत्कुमारसंवादे उपसंहृतः । तेन च कृत्यादिक्रमेणोत्पादिता निष्ठापरपर्याया धृतिः । तज्जनिता च श्रद्धाऽपि तत्सत्त्वात्सर्वत्र सिद्धैव । कारणसत्त्वेन कार्यस्यापि तत्रोत्पत्तेर्दुर्निवारत्वात् । एवं ययोः परस्परानुसरणरूपः संबन्धः, तत्र प्रीतिर्व्यवह्रियते, ययोस्तु न संबन्धो भवति, तयोर्विद्वेषो व्यवह्रियत इति प्रीतिद्वेषावपि जडचेतनसाधारणौ ।

[१]चिदन्वयाज्ज्ञानमथान्नभोगादर्थाभिसन्धिश्च समं समेषु ।
प्रज्ञान कर्म व्यतिरिच्य सर्वं कर्मैव सर्वत्र समं प्रपद्ये ॥१७९॥

[२]अथ प्रणोदो गति वेग वृत्तयो भावश्च विक्षेपबलानि पञ्चधा ।
महद् गतानि क्षणिकान्यमूनि तैः कृत स्वरूपा बहुधो विताः क्रियाः ॥१८०॥

[३]स्यान्नोदनाऽन्यत्र बलोपधानं संस्कार एवोऽस्ति स पञ्चरूपः ।
घातादनाघातयुतेरदृष्टात् प्राक्कर्मतोऽर्थान्तरपर्य्ययाच्च ॥१८१॥

[४]साघातजा यत्र बलं बलप्रदाद् व्युत्तिष्ठतेऽन्या तु बले समीकृते ।
अदृष्टजा दैवकृताऽथ कर्मणः क्षयोपलब्धावसरा तु कर्मजा ॥१८२॥

[५]संयोग एवोऽस्ति बलाऽभिसंक्रमे हेतुः सहेतुर्यदि शब्दसंभवे ।
संयोगजं कर्म विभागकारणं संयोगिनोश्चेदभिघात उच्यते ॥१८३॥

---

[१] चित्सर्वत्र व्याप्तेति ज्ञानमपि सर्वत्रानुस्यूतमिति स्वीकार्यमेव, चिच्छब्दस्य ज्ञान-पर्यायत्वात् । सर्वं च परतः किञ्चिद् गृह्णातीति अन्नभोगोऽपि जडचेतनसाधारणः । परस्पर—संबन्धरूपा अभिसन्धिरपि सर्वत्रैवास्ति । तदित्थं प्रज्ञानात्मा मनःप्रधानो यो व्याख्यातः, तस्य कर्माणि जडेषु न सन्ति, मनसस्तेषु उद्बुद्धत्वाभावात्, मनः सहकृतेन्द्रियकर्मातिरिक्तानि तु सर्वाण्येव कार्याणि जडचेतनसाधारणान्येवेति । जडेष्वभिव्याप्तस्य सोमस्य मनोरूपेण परिणतौ तु काष्ठादयो जडा एव चेतनघुणादिरूपतां गच्छन्तीति वेदान्तसूत्रेषु विलक्षणत्वाधिकरणे स्पष्टं निरूपितम् ।

[२] अथ विक्षेपबलस्य पञ्चविधत्वं व्याचष्टे—प्रणोदः, गतिः, वेगः, वृत्तिः, भावश्चेति पञ्चविधानि विक्षेपाख्यानि बलानि । महद् यद् व्याख्यातपूर्वं बलप्रधानं प्रथमं रूपम्—तदाश्रितानि क्षणिकानि सर्वाणि बलानि । तैः शक्तिरूपतां गतैरुत्पादिताः क्रियाश्च जगति बहुधा दृश्यन्ते ।

[३] अथ प्रणोदो नाम यः प्रथमो विक्षेपबलस्य भेद उक्तः, स नोदनापदेनाप्युच्यते । स्वसंबन्धेन बलस्यान्यत्र उपधानम्—समर्पणमेव नोदना । स संस्कारपदेनापि व्यवह्रियते । संस्काररूपतानुपदं मूल एव व्याख्यास्यते । तस्या अपि च कारणभेदात् पञ्च भेदाः सन्ति । घाताद्, अनाघातयुतेः, अदृष्टात्, प्राक्कर्मतः, अर्थान्तरपर्ययाच्च नोदना जायत इति कारण-भेदात्सा पञ्चविधेति ।

[४] यत्र संयोगे योगेन एकस्य वस्तुनो बलमन्यत्र संक्राम्यति, पूर्वस्मिन्नाधारे तु बलाभावो भवति, सा आघातजा नोदना । यत्र तु अन्यसंघर्षेण बलमन्यत्रापि गच्छति, पूर्वाधारेऽपि च तिष्ठति, सा अनाघातयुतिजा नोदना । यस्यास्तु नोदनायाः प्रत्यक्षं कारणं न गृह्यते, सा दैवकृता, अदृष्टजा वा उच्यते । एकत्र कर्मणः क्षये सति यया अवसरो लभ्यते, सा चतुर्थी कर्मजा उच्यते ।

[५] अथैतान् भेदान् विवृणोति—यः संयोगो बलस्य अन्यत्र संक्रमणे हेतुः, स एव संयोगो यदि शब्दस्योत्पादनेऽपि हेतुर्भवेत्, अथ च संयोगजं कर्म संयुक्तयोर्विभागस्यापि कारणं भवेत् तदा सोऽअभिघात पदेन उच्यते । यथा काष्ठे कुठारसंयोगः, तेन हि शब्दोऽपि जायते—काष्ठ-

[१]यदन्यदाहन्यत एतदाहिताघातः परस्मिन् परतः समागतः ।
संस्कारधर्मः स विलीयते न चेद् भोगात् क्षयं यात्यभिघातनोदना ॥१८४॥

[२]अथाऽनभीघातज नोदना हि सा संयोगतो यत्र बलं समर्प्यते ।
व्यासज्य वृत्या तु बलप्रदायिना बली बलोदर्कमिहाश्नुते स्ववत् ॥१८५॥

संयोग एषोऽस्ति बलाभिसंक्रमे हेतुर्न हेतुर्यदि शब्दसंभवे ।
संयोगजं कर्म विभाग कारणं न स्यात् तदाऽसौ सहयोग नोदना ॥१८६॥

[३]कुर्वद्बलं कुत्रचिदन्ययोगतो विलुप्यतेऽन्यत्र बलं विलीयते ।
संस्कारनाशात् पतनं गुरुत्वतः क्वचित्तु योगाद् बलिनोः फलान्तरम् ॥१८७॥

[४]अदृष्टमुक्तं यदलौकिकं भवेदद्धा मनुष्यैरनुपाख्यमस्ति यत् ।
तद्दैवसंयोगकृतं क्वचित् क्वचित् सत्यं क्वचित् कर्मजवासनामयम् ॥१८८॥

---

स्यावयवानां संयुक्तानां विभागोऽपि । तदिदं कुठारबलं कुठारसंयोगात् काष्ठउपसंक्रान्तमभिघातजा नोदना ।

१ तेनैव संयोगेन परम्परया यद्यन्योऽपि कश्चित्पदार्थं आहन्यते, तर्हि स आहिताघातः, स च संस्काररूपो धर्मं यदि अन्य स्पर्शादिना न विलीयते, तदा भोगादेव क्षयं याति, यावद्बलप्रभावं तत्र क्रिया भवतीत्यर्थः, यत्र तु अन्य स्पर्शादिना विलीयते—यथा कांस्यादिषु अनुरणनं हस्तस्पर्शेन विलीयते, तदा मध्ये एव विलय इति ।

२ अथ द्वितीयामनाघातनोदनामनभीघातनोदनानाम्ना विवृणोति—आघाताभिघात शब्दौ पर्यायौ । अभिघात शब्दे 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । यया संयोगवशादन्यत्र बलं समर्प्यते, परं बलप्रदे समर्पितबले चोभयत्रापि तद्बलं व्यासज्यवृत्त्या दृश्येत पूर्वं यो बलवानासीत्, सोऽपि बलस्य उदर्कम्—फलम्—यदि स्ववत्—स्वकीयबलरूपेणैव अश्नुते—प्राप्नोति—तदा सा अनभीघातयुतिनोदना उच्यत इति व्यासज्यवृत्त्या—इति नवीनन्यायग्रन्थेषु प्रसिद्धः शब्दः । यदेकमेव वस्तुद्वयमाश्रयति । एकत्र च पूर्णतया न भवति; तद् व्यासज्यवृत्त्या—इत्युच्यते । यथा द्वित्वादिसंख्या द्रव्येषु । अन्यदपि उत्तरपद्ये विवृणोति—एतन्नोदनाजन्यं कर्म शब्दकारणं न भवति, विभागकारणमपि च न भवतीति उदाहरणान्यग्रे समन्वेतव्यानि ।

३ नोदनाजन्यं कुर्वद्रूपम्—शक्तिरूपतामासाद्य क्रियाजननोन्मुखम्, बलं कुत्रचिदन्यवस्तुसंयोगाद् विलुप्यते—यथा केनचित् प्रक्षिप्यमाणोऽपि प्रस्तरादिः कुड्यादि संस्पर्शेन, अन्यदीयहस्तकृतनिरोधेन वा न प्रचलति, तद्बलमन्यत्र कुड्यादौ हस्तादौ वा विलीयते । प्रक्षिप्तस्य प्रस्तरादेस्तु संस्कारनाशाद् स्वनिष्ठगुरुत्वहेतुकं पतनं भवति । द्वयोर्बलवतोर्योगाच्च क्वचित्फलान्तरं भवति, यथा धावतोर्द्वयोर्मेषयोः परस्परसंनिपातेन एकस्य द्वयोरपि वा श्रमः पतनं चेत्यादि ।

४ अत्रादृष्टजाया नोदनायाः स्पष्टैरक्षरैर्विवरणम् । अन्तिमे पादे त्विदमुक्तम्—इदमदृष्टहेतुकनोदनाजन्यं कर्म क्वचिदेव भवति, तत्रापि क्वचित् सत्यं भवति, क्वचित्तु प्राणिनां पूर्वोपार्जितकर्मजन्यया वासनया असदपि प्रतीयते—यथा स्वप्नादाविति । एतत्पद्योक्तसत्यवासनामययोरेव विवरणमुत्तरपद्ये स्पष्टमेव ।

उत्पत्तिशिष्टं प्रतिवस्तु धर्मकं सत्यं तथा स्वेन परेण वा कृता ।
स्यात्कृत्रिमा संस्कृतिरेव वासनाऽथागन्तुको दैवतयोग इष्यते ॥१८९॥

[१]या नोदना क्वापि कृता तदादौ प्रदृश्यते यः पुरुषप्रयत्नः ।
तमन्तरेणैव यदुत्तरं स्यात् सान्तानिकं कर्म च कर्मजं तत् ॥१९०॥

[२]संस्कार एव प्रथमेन कर्मणा भवत्यतस्तूत्तरमुत्तरं क्रमात् ।
संस्कारजं कर्म भवत्यतो विदुर्न कर्मसाध्यं किल कर्म विद्यते ॥१९१॥

[३]अथात्मसंयोगगुरुत्वयत्नतो हस्ते खलूत्क्षेपणकर्म जायते ।
तद्धस्तसंयोगवशात् तथा पुनर्हस्ताहिते स्यान्मुसलेऽपि कर्म तत् ॥१९२॥

[४]यज्ञोऽशनायासहितस्त्विहात्मा तन्नोदितः प्राण इह प्रयत्नः ।
पृथ्वीबलं वस्तुगतं गुरुत्वं वेगः सजातीयबलोच्चयः स्यात् ॥१९३॥

---

[१] अथ पूर्वोक्तां चतुर्थीं कर्मजां नोदनां विवृणोति । पुरुषप्रयत्नेन क्वचिन्नोदनाकृता, अनन्तरं तु पुरुष प्रयत्नं विनैव यत्सन्तानरूपेण उत्तरं कर्म प्रवर्तते—तत्कर्मजं बोध्यम् । अस्योदाहरणं मूसलाघातादि अग्रे ग्रन्थ एव विव्रियेत ।

[२] वैशेषिकसूत्रे "कर्म कर्मसाध्यं न विद्यते" वै. सू. १।१।११ इत्युक्तम्, तेनात्र न विरोध इति व्याचष्टे—पुरुषप्रयत्नादिजनितेन प्रथमेन कर्मणा संस्कारो जन्यते, तेन संस्कारेण तु उत्तरोत्तरं कर्म जन्यते, इति कर्मणा साक्षात् कर्मान्तिरं न जन्यते, इति सूत्राशयः। संस्कार-द्वारकपरम्परया तु जन्यत एवेति । संस्कारश्चायं वेगाख्योवलानां समुच्चयरूप एवेति वक्ष्यते। ततश्च कर्मणः पूर्वावस्थैव संस्कारः। तेनेदं फलितम्—स्थूलेन कर्मणा सूक्ष्मावस्थारूपं बलमन्यत्राधीयते, तेन तत्र पुनः सजातीया क्रिया प्रवर्तते । स्थूलरूपायाः क्रियापदवाच्याया एव कर्मजन्यत्वं कणादेन प्रतिसिद्धमिति ।

[३] वैशेषिकसूत्रोक्तमेव मुसलकर्म दृष्टान्ततयोदाहरति । यदा काचिद् योषिन्मुसलेन धान्यादिकं विशोधयितुं प्रवर्तते—तदा पूर्वं तस्या हस्ते मुसलमुत्क्षेप्तुं क्रियापरपर्यायं कर्म जायते, तस्य कर्मणो हेतवः—आत्मनो हस्तेन संयोगः, हस्तगतं गुरुत्वम्, आत्ममनःसंयोगजनित आत्म-निष्ठः प्रयत्नश्च । तादृशहस्तसंयोगेन नोदनारूपेण मुसले क्रिया जाता। अत्रापि हस्तक्रियया मुसलसंयोगः, संयोगजाता च मुसले क्रियेति कर्मणः साक्षात्कर्मजन्यत्वं नेति भाव्यम् । तदुक्तं भगवता कणादेन "आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म (१) तथा हस्तसंयोगाच्च मुसल कर्म" (२) इति (वै. सू. ५ अ. १ आ.)

[४] पूर्वपद्योक्तानात्मादिशब्दान् विवृणोति—अत्र अशनायया च्छया सहितो यज्ञरूपो भूतात्मैव आत्मपदेनोच्यते, एतदर्थं पूर्वत्रकृतमात्मनां व्यावहारिकाणां विवरणं द्रष्टव्यम् । भूतात्मा यज्ञजनितत्वाद्यज्ञपदेनैवेहोक्तः। तेन भूतात्मना या प्राणे प्रेरणा, सैव यत्नपदेनोच्यते, प्रेरितः प्राण एव वा प्रयत्नः, प्रेरणाया अपि क्रियामूलाया प्राण एवान्तर्भावात् । गुरुत्वना-म्नापि न नैयायिकवद् गुणान्तरं कल्पनीयम्—अपि तु पृथिव्या आकर्षणरूपं यद्बलं वस्तुषु निहितम्—तदेव गुरुत्वमुच्यते । एतच्च पृथिव्या आकर्षणम् "श्रुतिष्वनेकत्राम्नातम् । "आकृष्टिशक्तिश्च मही" इत्यादिना सिद्धान्तशिरोमणौ भास्कराचार्येणापि विवृतम् । तेन

[1]अथाऽभिघाताज्जनिते तु कर्मणि स्यान्मौसलेऽभ्युत्पतने न कारणम् ।
स हस्तयोगो व्यतिरेकदर्शनात् तथात्मयोगोऽपि न हस्तकर्मणि ॥१९४॥

[2]तत्राभिघातान्मुसलानुयोगाद्धस्तेऽस्ति कर्माथ तथात्मकर्म ।
तद्धस्तयोगाच्च तदात्मकर्मसंयोगनाशे पतनं गुरुत्वात् ॥१९५॥

---

वैदेशिकेन न्यूटननाम्नैवेदमाविष्कृतमिति प्रजल्पनमज्ञानविजृम्भितमेव । इदं पृथिव्याकर्षण-बलम् अस्मदादिशरीरेष्वपि प्रसर्पतीति हस्तादावपि शरीरावयवे गुरुत्वं व्यवह्रियते । ईदृशा-कर्षणविशिष्टेष्वेवावयवेषु क्रिया जायते न तु सूक्ष्मनाड्यादीनां रोमादीनां वोत्क्षेपणं कर्तुं शक्यत इति हस्तोत्क्षेपणे गुरुत्वमपि कारणतया ग्रन्थकृता निवेशितम् ।

वेगाख्यः संस्कारो य उत्तरत्र वक्ष्यते—सोऽपि न गुणान्तरम्—अपि तु सजातीयानां बलानां समुदायरूप एव वेग इति । बलमेव रसाधारेण धारावाहिकतां गतं तत्तद्गुणनाम्ना व्यवह्रियते । द्रव्यगुणकर्मपरिभाषा तु नैयायिकानामल्पबुद्धिबालप्रबोधनार्थैवेति सारः । तस्मात् सुष्ठूक्तम्—सजातीयानां बलनामभ्युच्चय एव वेगाख्य संस्कार इति ।

[1] एवं पूर्वोक्तरीत्योत्पादिते मुसलकर्मणि मुसलं यदोलूखले पुनः पुनराहन्यते, तदा तेनाघातेन मुसले वेगाख्यः संस्कारो जायते, हस्तजनितस्य बलस्य उलूखलाघातजस्य च समुच्चयो जायत इति यावत् । तादृशेन वेगेनैव मुसले उत्तरं कर्म प्रवर्तते । इदानीमुत्तरोत्तरं जायमाने कर्मणि मुसलस्योत्पतनरूपे केवलं हस्तकर्म कारणं न भवति । तत्र हेतुमाह—'यतिरेकदर्शनाद्' इति । आरम्भिक हस्तक्रियाजनितमुसलकर्मापेक्षया इदानीं मुसलकर्मणि व्यतिरेकः—विशेषो दृश्यते इति । पूर्वं हस्तजनितं कर्म शैथिल्येन प्रवृत्तमासीत्, इदानीं तु वेगानन्तरं तीव्रं मुसलकर्म दृश्यत इति व्यतिरेकः । योषिता शैथिल्येनापि हस्ते व्यापारिते प्रबलमुत्पतनं दृश्यत इत्यपि व्यतिरेको व्याख्येयः तदुक्तं भगवता कणादेन—"अभिघातजे मुसलादौ कर्मणि व्यतिरेकदर्शनादकारणं हस्तसंयोगः" (वै. सू. ५।१।३) ति । सूत्रव्याख्या-कृतस्तु केचन हस्तव्यापारउपरतेऽपि मुसलस्योत्पतनं क्षणं दृश्यत इति व्यतिरेकमाचक्षते । एव-मिदानीं हस्तोत्थापनायापि आत्मनः प्रयत्नो नापेक्ष्यते वेगवन्मुसलसंयोगादेव हस्तोऽप्युत्पततीति । इदं पूर्वोक्तस्य कर्मजकर्मण उदाहरणं भाव्यम् ।

[2] पूर्वोक्तमेव स्पष्टयति—मुसले प्राप्तो य आघातः, तेन तत्संयुक्ते हस्तेऽपि कर्म जायते । तस्य हस्तस्य योगाच्च पूर्वोक्ते भूतात्मापरपर्याये यज्ञात्मन्यपि कर्म कम्पनरूपं प्रतीयते । हस्तमुसलसंयोगस्तु पूर्वभवेनात्मयत्नेनैवोत्पादित इत्युक्तं प्राक् । तस्यात्मप्रयत्नजस्य हस्तसंयोगस्यात्मप्रयत्नजनितहस्तविभागेन नाशे मुसलस्य गुरुत्वात्पतनं भवति । तदाभिघातजो वेगाख्यः संस्कारोऽपि नश्यतीति भावः । विना नोदनाविशेषं मुसले ऊर्ध्वगमनं तिर्यग्गमनं वा न जायते इत्युत्तरपद्येन सरलेन स्पष्टीकृतम् । एतदपि सर्वं कणादेन सूत्रितम्—"अभिघाता-न्मुसलसंयोगाद्धस्ते कर्म आत्मकर्म हस्तसंयोगाच्च । संयोगाभावे गुरुत्वात्पतनम् । नोदनाविशेषा-भावान्नोर्ध्वं न तिर्यग्गमनम् । प्रयत्नविशेषान्नोदनाविशेषः । नोदनाविशेषादुदसनविशेषः" ( वै० सू० ५-१-५-१० ) वैशेषिकपरिभाषायामात्मनि विभौ कर्म न संभवतीति आत्मशब्देन लक्षणया आत्मशब्दस्यानेकार्थतया वा शरीरमेव व्याख्याकृतो गृह्णन्ति । अर्थान्तरमेव वा सूत्रस्य व्याचक्षते । अस्मन्मते तु व्यावहारिक आत्मा भूतात्मा परिच्छिन्न एवेति तत्रापि कर्मा-

नोद्ध्वं न तिर्यग् गमनं च नोदनाविशेषहीने मुसलेऽभिजायते ।
प्रयत्नभेदात्तु भवन्ति नोदनाभेदास्ततस्तूदसने विशेषता ॥१९६॥
[1]तुल्यं शिशोः कर्म च हस्तकर्मणा विस्फोटने कर्म च दग्धवस्तुनः ।
अया प्रयत्नं चलनं च निद्रितस्यैवं तृणे कर्म च वायुयोगतः ॥१९७॥
[2]मणेस्तु यत् स्याद् गमनं च सूचिकाऽभिसर्पणं चैतददृष्टकारणम् ।

---

सत्येवेति । एवं सूत्रान्तराण्यपि प्रसङ्गान्तरे व्याख्याकृद्भिर्योजितानि । ग्रन्थकृता तु एकत्रैव योजनसंभवे करणान्तरात्तु धावनं व्यर्थं मत्वात्रैव सर्वाणि योजितानीति ।

[1] उक्तं नोदनाजनितं कर्म सादृश्यमन्यत्रापि बोधयति—यथा आत्मप्रेरणया प्रयत्नेन हस्तकर्म जायते, तथैव बालस्याप्यात्मप्रयत्नेन हस्तपादादिविक्षेपणं जायते । अथवा यदा बालमङ्के निधाय माता धात्री वा स्वप्रयत्नेन तं परिचालयति, तदा मात्रादेर्नोदनया तच्छरीरे कर्म जायते—इत्यपि व्याख्यानमत्र संभवति । एवं दग्धे वस्तुनि यद्विस्फोटनं भवति, तदपि वह्निनोदनया । निद्रितस्य पुरुषस्य विना प्रयत्नं च यद्धस्तपदादिविक्षेपणरूपं चलनम्—तत्प्राणकृतया नोदनया जायते । एवं वायुयोगात् तृणादेश्चलनं जायते । एतानि सर्वाणि अप्रतिघातनोदनाजनित कर्मणामुदाहरणानि । एतदपि कणादसूत्रानुसारि, "हस्तकर्मणा दारककर्म व्याख्यातम् । तथा दग्धस्य विस्फोटने । यत्नाभावे प्रसुप्तस्य चलनम् । तृणे कर्म वायुसंयोगात् । (वै. सू. ५-१-११-१४) इति । अत्र सूत्रव्याख्याकृतो दारककर्मणि हिताहितप्राप्तिपरिहारार्थकस्वाभावं पुण्यपापाजनकत्वं च मुसलकर्मसादृश्यं वदन्ति । दग्धविस्फोटने तु दग्धस्य पुरुषस्य प्रत्याघाते पुण्यपाप—जनकत्वं नास्तीति तथाविधायामेव सादृश्यकल्पनायामुपस्कारकृतो वृथा प्रयासः, सूत्राक्षराणामन्यथानयनं चेति विद्वद्भिर्भाव्यम् ।

[2] अथ पूर्वोक्तमदृष्टजं कर्मोदाहरति—मणिविशेषस्य यत्स्वत एव स्थानान्तरपरिसर्पणम्, यद्वा सूच्यादीनां लोहजवस्तूनां चुम्बकपदबोध्यायस्कान्तमण्याद्युपसर्पणम्—तदेतददृष्टकारणमस्ति । अदृष्टकारणशब्दस्य द्वेधाऽपि व्याख्या संभवति, न दृष्टं कारणं यस्येत्येका, अर्थादस्य कर्मणः कारणमद्यावधि केनापि न ज्ञातामिति ऋजु व्याख्या । अथवा अदृष्टम्—भोक्तृ पुरुषगतं धर्माधर्मपदाभिधेयं कारणं यस्येति कल्पनाप्रधाना विदुषां व्याख्या । तेनाभिसर्पणेन यस्य कस्यचित्पुरुषस्य लाभहानिद्वारेण सुखं दुःखं वा जायते, तादृश सुखदुःखजनकेनादृष्टेनैव सा क्रियाप्युत्पाद्यत इति । एतदपि सूत्रानुसारि "मणिगमनं सूच्यभिसर्पणमदृष्टकारणकम्" अत्रोपस्कारकृन्मन्त्रादिना तस्कराद्यभिमुखं प्रेरितस्य मणिकांस्यादेस्तस्करसमीपे गमनं मणिगमनशब्देन गृहीतमिति व्याचष्टे । चन्द्रकान्त तर्कालङ्कारस्तु तृणादीनां तृणकान्तमणिसमीपे गमनमितिव्याख्यातिस्म (वै. सू. ५।१।१५) इति । ननु तत्रापि कश्चित्संयोगविभागादिरेव कर्महेतुत्वेन कल्प्यताम्—अदृष्टकारणत्वाभिधानं कुतः क्रियते मणिविशेषे अभिसर्पणहेतुभूतं बलमस्ति, तच्च कदाचिज्जागर्ति, तदैव स स्थानान्तरमुपसर्पति अयस्कान्तमणौ चाकर्षणमस्ति, तेन सूच्यादिकं तदभिमुखमुपसर्पतीत्यादि संभवतीति । तत्रेदं प्रतिवक्तव्यं स्यात्—यदि मणौ गतिप्रयोजकं बलमस्ति, तर्हि सर्वदैव गतिः कुतो न जायते । कदाचिदेवतस्य बलस्य जागरणेऽभ्युपगते तु जागरणस्य हेतुरदृष्टः कल्पित इति गतिरेवादृष्टहेतुका कुतो न मन्यते । किं च हस्तादिनोदनयापि तादृशे मणौ कर्मान्तरं

[१]तथाद्य कर्मैतदिषोः प्रणोदनात् संस्कारतोऽन्यानि तु कर्म कारितात् ॥१९८॥

[२]कर्मान्यतैषां प्रतिपद्यते यतः संयोगभेदा युगपन्नसन्ति हि ।
संस्कारनाशे पतनं गुरुत्वतो मध्ये विकारः क्व च नोदनान्तरात् ॥१९९॥

[३]कर्म्मोदियान्नोदनतोऽभिघाततः संयुक्तसंयोगवशाच्च पार्थिव ।
तेषामभावे तददृष्टकारितं ततोऽन्यथा कर्म न पार्थिवे क्वचित् ॥२००॥

[४]रज्जौ प्रणोदाद्रथकर्म वर्त्मना तूच्चावचेन प्रहतस्य शब्दवत् ।
भकम्पनाद्येतददृष्टकारितं तदित्थमन्यत्र पृथग् विभावयेत् ॥२०१॥

---

संभवत्येव। यदि मणावपि बलं स्वतन्त्रं मन्येत, तर्हि हस्तनोदनया तस्य मणौ स्थितस्य स्वतन्त्र-बलस्य संघर्षे द्वयोर्योगेन विचित्रा गतिरुदियात्, सा न दृश्यते। चुम्बकादिमणौ च यद्याकर्षणं मन्यते—तर्हि प्रस्तरादेरप्याकर्षणं कुतस्तेन न क्रियते। सूच्यादावेव तस्याकर्षणस्य प्रभाव इति चेत्तादृशे नियमेऽपि अदृष्ट एव हेतुः कल्पनीयः स्यात्। तस्माद् दृष्टहेतुभिर्न निर्वाह इति।

[१] अथ नोदनादाद्यमिषोः कर्म, तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च।१७। संस्काराभावे गुरुत्वात्पतनम्।१८। (वै० सू० ५।१) इति सूत्राण्यनुसरन् प्रक्षिप्तस्य बाणस्य क्रियां विवृणोति—इषोः—बाणस्य आद्यं कर्म प्रणोदात्—नोदनाजन्यम्। आत्मनो यत्नेन हस्ते कर्म, तत्सयोगाद्धनुपि तत्संयोगाच्च बाणे प्रथमं कर्म। अग्रे तु उत्तरोत्तरं कर्म वेगाभिधेन संस्कारेण। हस्तजनितं कर्म वेगमुत्पादयति, तेन चोत्तरं कर्मेति कर्मणः साक्षात्कर्मजनकता नायाति।

[२] दूराद्दूरतरं विभिन्नदेशसंयोगा एकेन कर्मणा तु न संभवन्तीति बहूनि कर्माणि तत्रावश्यमभ्युपगन्तव्यानि तदाह—इषाम् इष्वादीनां कर्मान्यता—विभिन्नकर्माश्रियत्वं प्रतिपद्यते—ज्ञायते, यतो हि भिन्नभिन्नदेशसंयोगा युगपन्न सन्ति। इषुः क्रमेणैव तांस्तानाकाशप्रदेशान् गच्छति न युगपत्। एकं प्रदेशमुलङ्घ्य अग्रिमे गत्यसम्भवात्। यदा चैकेन प्रदेशेन न संयोग उत्पादितः तदा पूर्वकर्म नष्टमिति कर्मान्तरमेवोत्पन्न मन्तव्यम्, कर्मणां चतुर्थं क्षणे नाशाभ्युपगमात्। प्रथमः कर्मण उत्पत्तिक्षणः, द्वितीये विभागोत्पत्तिः, तृतीये पूर्वसंयोगनाशः, चतुर्थे उत्तरदेशसंयोगः। तमुत्पाद्यैव च कर्म विनश्यतीति वैशेपिकप्रक्रिया तदुक्तवैशैपिकसूत्रे "इषावयुगपत्संयोगा कर्मान्यत्वे हेतुः" (वै. सू. ४।१।१६) इति। वेगाख्य संस्कारनाशे गुरुत्वाद्भूमौ पतनं भवति, क्वचित्तु अन्यया प्रेरणया मध्ये एव वेगनाशः—इति सर्वं स्पष्टार्थम्।

[३] उक्तं संक्षिप्योपसंहरति। उक्तेन प्रकारेण पार्थिवेपु लोष्टप्रस्तरादिषु त्रिधैव कर्म संभवति, नान्येन प्रकारेणेति। एतदपि कणादेन सूचितम्। "नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म" "तद्विशेपेणादृष्टकारितम्" इति। (वै. सू. ५।२।१–२

[४] उक्तं सयुक्तसंयोगमुदाहरति—अश्वानां प्रयत्नेन तच्छरीरे कर्म; तत्संयोगाद्बन्धनरज्जौ कर्म, तन्नोदनया च रथे कर्म। उच्चावचवर्त्मनि गच्छतस्तु रथस्य प्रस्तरादिना प्रहतस्य शब्दसहितमपि कर्म जायते—इति तत्र नोदनाभिघातयोः समुच्चयः। कदाचिद्भूकम्पे उदिते तेनापि रथे कम्पनक्रिया जायते, सा अदृष्टजा।

[१]संयोगनाशे पतनं गुरुत्वादपां तथा प्रस्रवणं द्रवत्वात् ।
अपां च संयोगवशाद् विभागात् तडित्वतः स्फूर्जथु संभवः स्यात् ॥२०२॥

[२]संघात एवं विलयश्च तेजो विशेषसंयोगवशादपां स्यात् ।
विस्फूर्जथुः स्पष्टमिहास्ति लिङ्गं महर्षयश्चापि तथा वदन्ति ॥२०३॥

---

१ अथ जले कर्म निरूपयति—वायुसंयोगेन जलानि मेघावस्थायामन्तरिक्षे ध्रियन्ते। स एव पतननिवारको वायुविशेषो वृत्रपदेन वैदिक पौराणिकपरिभाषायामुच्यते। अन्तरिक्षस्य वायुविशेष इन्द्र एव तं सयोगं विघटयतीति स वृत्रहन्ता उच्यते। तथाविध वायुसंयोगनाशे तु गुरुत्वादपां भूमौ पतनम्। गुरुत्वं च भूम्याकर्षणमेवेति प्राग् व्याख्यातम्। द्रवत्वात्तु जलानां भूमौ प्रसरणमिति। द्रवत्वमपि वह्निसंयोगनोदनयेवेत्यग्रिमे पद्ये निरूप्येत। अन्तरिक्षे निरुद्धानां घनीभूतानामपां परस्परसंयोगाद् निविडसंयोगमाप्तानां विभागाद्वा स्फूर्जथोः—विद्युतः तज्जनितवज्रनिर्घोपरूपस्य मेघगर्जनस्योत्पत्तिः संभवेत्।

२ अत्र नवीन नैयायिका जले सांसिद्धिकम्—अर्थात्स्वतः सिद्धम्—स्वाभाविकं द्रवत्वं वदन्ति, करकादौ काठिन्यप्रतीतिं तु भ्रान्तिमाचक्षते, सा तेषां मतिरुपपत्तिविरोधात् सूत्रविरोधाच्च स्वयं भ्रान्तरूपेति व्याचष्टे। अन्यरूपेण तेजः संयोगविशेषेण संघातो भवति, अन्यादृशविलक्षणतेजःसंयोगविशेषेण तु विलयनम्—द्रवणं भवति—इति। यदि तु स्वाभाविकं द्रवत्वम्, करकादिपु काठिन्यप्रतीतिश्च भ्रान्तिरूपा मन्येत, तर्हि स्फूर्जथुः विद्युदादि नर्गजितं च कथं भवेत्। द्रवतामपां पस्परसंपाते तादृशोत्कटशब्दस्यासंभवात्। लोके प्रवहतां जलानां यः शब्दः श्रूयते, सोऽपि घनीभूतपार्थिवपदार्थसंघर्षजः। अन्तरिक्षे सोऽपि न संभवति। तत्र घनीभूतपदार्थान्तराभावात्। तस्माद् घनीभूतानामेव संपाते विद्युत्पत्तिः तादृशः शब्दश्च संभवतीति स्फूर्जथुरपां कठिनतायां लिङ्गम्। उपलक्षणं चैतत् घनत्वेन हिमशिलारूपतां गतानामपां यदि शिरसि विस्फोटः क्रियेत, तदा रुधिरपातेन भ्रान्ति वदतामिव शिरोभ्रान्तिः स्फुटा स्यादिति। सर्वमिदं कणादेन भगवता सूत्रितम्—(वै० सू० अ० ५ आ० २) अपां संयोगाभावे गुरुत्वात् पतनम्।३। द्रवत्वात् स्पन्दनम्।४। नाड्यो वायुसंयोगादारोहणम्।५। नोदनापीडनात् संयुक्त संयोगाच्च।६। वृक्षाभिसर्पणमित्यदृष्टकारितम्।७। अपां संघातो विलयनं च तेजः संयोगात्।८। तत्र विस्फूर्जथुर्लिङ्गम्।९। वैदिकं च।१०। अपां संयोगाद् विभागाच्च स्तनयित्नोः।११। इति। अत्र तेजः संयोगादेव जलानां विलयनमित्यस्य वेदोक्तत्वमपि दशमेन सूत्रेण भगवता कणादेन दर्शितम्। तदेव मूल उक्तम् "महर्षयश्चापि तथा वदन्तीति" "अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवम्" (ऋ० सं० १।२।११) "या अग्निं गर्भं दधिरे" इत्याद्या अप्सु अग्निस्थितिबोधका मन्त्रा अत्रोदाहार्याः। आधुनिका वैज्ञानिका अपि (आक्सिजन्) नाम्ना अग्नेः स्थितिं जले मन्यन्त एव। तदेतत्सर्वविरुद्धं जले सांसिद्धिक द्रवत्वकल्पनं सर्वथाप्यश्रद्धेयमेव। एषु सूत्रेपु ५, ६, ७ संख्याकानि सूत्राण्यग्रे मूले विव्रियन्ते। यत्तु एतानि सूत्राणि व्याचक्षाणेन सूत्रोपस्कारकृता तृतीयसूत्रव्याख्यायां मेघसंयोगस्याभावे सति वर्षणरूपं पतनं भवतीति व्याख्यातम्, तदुपहासास्पदमेव, जलातिरिक्तः को नाम मेघो येन अपां संयोगो मन्येत। मेघो नाम कश्चित् पात्रविशेषः, तत्र जलानि स्थितानि क्रमेण पतन्तीति ग्रामीणानां विश्वासो-

[१]आरोहणं स्यादिह नाड्यवायुसंयोगतो नोदनपीडनाच्च ।
संयुक्तसंयोगवशाच्च वृक्षेऽभिसर्पणं त्वेतददृष्टमूलम् ॥२०४॥

[२]पृथ्वीवदाभाति हि कर्म तेजसो ऽप्यग्नेस्तथोर्ध्वज्वलनं त्वदृष्टतः ।
द्रव्यान्तरेणावरणात्तु तेजसोऽभावस्तमः स त्रिकतो विधर्मि यत् ॥२०५॥

---

ऽत्रानूदितः। तस्य समयस्य विज्ञानशून्यतैवात्रापराध्यतीति कृतं महत्सु 'कटाक्षनिक्षेपेण। यदपि च "अपां संघात इत्याद्यष्टमं सूत्रं व्यचक्षाणेन तेन महानुभावेन जले सांसिद्धिक द्रव—त्वाभिमानं रक्षता व्याख्यातम् "दिव्येन तेजसा प्रतिवन्धादाप्याः परमाणवो द्व्यणुकमारभमाणा द्व्यणुकेषु द्रवत्वं नारभन्ते, ततो द्रवत्वशून्यैरवयवैर्द्व्यणुकादिक्रमेण द्रवत्वशून्या हिमकरकादय आरभ्यन्ते, तेन तेषां काठिन्यमुपलभ्यते, तेजः संयोगेन वलवता हिमकरकारम्भकपरमाणूनां कियातो विभागस्तत आरम्भकसंयोगनाशपरम्परया हिमकरकादि महावयविनाशस्तत्र द्रवत्व—प्रतिवन्धक तेजः संयोगविभागात् त एव परमाणवो द्व्यणुकेषु द्रवत्वमारभन्ते, ततो द्रवत्ववतां हिमकरकादीनां विलयनमिति" तदेतत्सर्वं स्वकल्पना विजृम्भणमात्रम्, परमाणुषु द्रवत्वाभ्युपगमे प्रमाणाभावात्, परमाणुगता धर्माः प्रतिवन्धादवयविनि धर्मान्नारभन्ते, इत्यत्र दृष्टान्ताभावाच्च, अवयविनि जले द्रवत्वं तु तेजः संयोगाज्जातमिति सुवर्णादिवन्नैमित्तिकमेव मन्तुं योग्यम्—यथा सूत्रकृता विलयनं तेजः सयोगादिति स्पष्टमुक्तम्। द्रव्यनिरूपणेऽपि "आपो द्रवा स्निग्धाः' इत्येव सूत्रकृतोक्तम्, तच्च नैमित्तिकद्रवत्वेऽभ्युपगतेऽप्युपपद्यत एव। न तु सांसिद्धिकं द्रवत्वं विशिष्योक्तम्, प्रत्यक्षेण च हिमकरकादीनां विलयनं स्पष्टं दृश्यत इति परमाणुपर्यन्तं विभक्तानां पुनर्द्रुतजलारम्भ इति प्रत्यक्षविरुद्धा कल्पना, यदि हि परमाणुपर्यन्तं हिमकरकादीनां विभागः स्यात्तर्हि परमाणूनां द्व्यणुकानाञ्चादृश्यत्वाद् दर्शकैः केषुचित् क्षणेषु किमपि संमुखेनोपलभ्येत न तु तथा भवति। तस्माद् यथोक्तमेव न्यायमिति।

[१] अपामेवान्यां क्रियां विवृणोति। समुद्रादिगतानामपां नाडीसंवन्धि वायोः संयोगाद् अन्तरिक्षे आरोहरणं भवति। अन्तरिक्षे विकीर्णं जलमेव शरीरस्थनाडीसादृश्याज्जलनाडीति परिभाष्यते ज्यौतिषग्रन्थेषु। तत्र जलं नयन् वायुरेवेह नाड्यवायुरित्युक्तः। सूत्रव्याख्या-कृद्भिस्तु सूर्यरश्मय एव नाडीपदेन गृहीताः 'नाड्योवायुरिति पाठे नाड्य इति प्रथमान्तं मत्वा जलस्यारोहणकुर्वन्तीति क्रियापदमध्याहृतम्। क्वचित्तु पुरुषप्रयत्नकृतादुत्क्षेपणादपि आरोह-रणम्—उपरि गमनं भवति। एवं क्वचित् पीडनाद्—अर्थादग्न्यादिना कृतादवयवविभागादपि सूक्ष्मतामापन्नस्य जलस्योर्ध्वगमनं जायते, यन्त्रादिना यत्र जलमूर्ध्वं नीयते, तत्र तु संयुक्तसंयोग-वशात्। अग्न्यादिनोदनया तत् संयुक्ते यन्त्रे कर्म जायते, तेन संयोगात्तु जले इति। वृक्षादौ सिक्तस्य जलस्य यद् वृक्षावयवेषु सर्पणम्—व्यापनम्, तददृष्टहेतुकम्। अदृष्टहेतुकपदस्य द्विविधा व्याख्या पूर्वोक्ता स्मर्तव्या।

[२] तेजस्यपि अग्न्यादौ कर्म पृथ्वीवदेव पुरुषप्रयत्नजन्यवाय्वादिजन्य नोदनादि हेतुकं वोद्धव्यं। अग्नेरूर्ध्वज्वलनमेवेति तु अदृष्टहेतुकम्। तदुक्तं वैशेषिकसूत्रे "पृथिवी कर्मणा तेजः-कर्म वायुकर्म च व्याख्यातम् ।१२। अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणूनां मनसश्चाद्यं कर्मा-दृष्टकारितम् ।१४।" (वै. सू. ५।२) इति। यदा तेजो द्रव्यान्तरेणाव्रियते, तदा तदभावः तमो रूपेण प्रतीयते। न तु तमो नाम द्रव्यान्तरम्। त्रिकतः—द्रव्यगुणकर्मभ्यो वैलक्षण्यदर्शनात्

[1]पृथ्वीवदाभाति हि कर्म वायोरमुष्य तिर्यक् पवनं त्वदृष्टात् ।
अदृष्टजं कर्म भवेदणूनामाद्यं हि संस्कारजमुत्तरं स्यात् ॥२०६॥
[2]व्योमाऽथ कालोऽथ दिशोऽथवा गुणाः कर्माणि चैतानि तु निष्क्रियाणि हि ।
तुल्यं मनःकर्म तु हस्तकर्मणा तस्यापि कर्माद्यमदृष्टकारितम् ॥२०७॥

---

तमसि। द्रव्यं हि अणोर्महज्जायते। नेमं प्रक्रिया तमसि दृश्यते, तत्रावयवावयविभावा-प्रतीतेः। युगपदेव च तमो विशालं प्राङ्गणंव्याप्नोति, न तु अणुमहत्तारतम्येन तदुत्पत्तिर्दृश्यते। रूपवद् द्रव्यं च स्पर्शवदपि भवतीति प्रायेण लभ्यते। तमसि कृष्णरूपं तु दृश्यते, न तु स्पर्शः कोऽप्यनुभूयते—इति द्रव्यवैलक्षण्यम्। यद्यपि प्रभायामपि युगपद् व्यापनं स्पर्शाभावश्च प्रतीयते, सा च द्रव्यरूपैव काणादैर्मन्यते, तथापि तत्र शुक्लमेव रूपमिति तेजसि तस्याः सन्निवेशः। तमसि तु नीलं रूपं प्रतीयते, नीलं रूपं च पृथिव्यामेव दृश्यते। पार्थिवेषु पदार्थेषु च रूपस्पर्शयोः सामानाधिकरण्यमेवेत्यादि वैलक्षण्यमूहनीयम्। गुणाः कर्माणि च द्रव्याश्रितान्येव भवन्ति, न तु तमस आश्रयभूतं किमपि द्रव्यान्तरं प्रतीयते इति गुणकर्मवैलक्षण्यम्। तदुक्तं वैशेषिकदर्शने—"द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः। तेजसो द्रव्यान्तरेणावरणाच्च।" (वै. सू. ५।२।१९-२०) यद्यपि अन्यत्र जगद्गुरुवैभवादिषु विद्यावाचस्पति महाभागैर्ग्रन्थकृद्भिः 'कृष्णायाः पृथिव्या रश्मय एव तमो रूपेण दृश्यन्ते'—इति निरूपितम्। परमिह वैशेषिकप्रक्रियानुसरणादभावरूपतैव प्रतिपादिता। तत्रापि च 'तेजसोऽभावे सत्येव पृथिवी किरणानां प्रत्यक्षम्, तेजसाभिभूतानां तु न प्रत्यक्षमिति प्रतिपादितमेव। तस्मान्नातीव वैषम्यमिति विभाव्यं सुधिभिः।

[1] उक्तवैशेषिकसूत्रवदेव पृथिवीवन्नोदनादिजन्यं वायुकर्मात्रोक्तम्। एकस्य वायोर्नोदनया अपरस्मिन् वायौ कर्म जायते, तन्नोदनाच्च ततः परस्मिन्निति परम्परास्थेया, वैशेषिका हि परमाणुभ्य एव जगदुत्पत्तिं मन्यन्ते। प्रलये परमाणवः पृथक् पृथक् तिष्ठन्ति, सर्गकाले तु तेषु क्रिया जायते, तया परस्परं संयोगे द्व्यणुकादिक्रमेण जगदारभ्यत इति तेषां प्रक्रिया। तत्र परमाणुषु आद्यं कर्म कुतो जायत इति प्रश्ने 'भोक्तॄणां जीवानां धर्माधर्मरूपमदृष्टमिदानीमुद्बुद्धम् फलप्रदानोन्मुखं जातम्, तस्य फलप्रदत्वं च स्थूलजगदुत्पत्तिं विना न संभवतीति सर्वं जीवानां संहृतं तददृष्टमेव जगदुत्पत्तये अणुषु कर्म जनयतीति' तेषामुत्तरं भवति। तेन परमाणूनामादिक्रियायाम् उद्बुद्धादृष्टपदात्मसंयोगो असमवायिकारणमिति वैशेषिक—प्रक्रिया। सैवात्राप्युक्ता। सूत्रमनुपदमुदाहृतमेव। यद्यप्ययं परमाणुवादो ग्रन्थकृतो नाभिमतः, अत्र रसबलयोरेव जगन्मूलत्वनिरूपणात्। तथापि वैशेषिकप्रक्रियाया अनुवादे प्रसङ्गादिदमपि व्याख्यातम्। अथवा अग्रे क्षरात्मनो जगदुत्पत्तिप्रक्रियायां निरूप्यमाणायां स्थूलपदार्थेभ्यः पूर्वं सूक्ष्माणामणूनामुत्पत्तिरत्राप्यभ्युपगन्तव्या भवत्येवेति तन्मनसि निधायैवाणुकर्मणोऽप्यत्र चर्चा कृता। धर्माधर्मरूपमदृष्टं च सर्वैरेवास्तिकैर्जगदुत्पत्तौ कारणतयाभ्युपगम्यत एवेति न कोऽपि प्रबलो विरोधः। अस्यां ग्रन्थोक्तप्रक्रियायां च प्रलये सुप्तस्य बलस्य जागरणे अदृष्टस्य हेतुता बोद्धव्येत्यपि संकेतितम्। अग्रे तु वेगादिभिः संस्कारैरणुषु कर्मपरम्परा प्रवर्तत एवेति।

[2] वैशेषिकाभ्युपगतेषु नवसु द्रव्येषु पृथिवीजलतेजोवायुमनःसु मूर्तेष्वेव कर्म जायते। आकाशकालदिगात्मसु विभुषु तु कर्म न जायते। द्रव्यातिरिक्तेषु गुणेषु कर्मस्वपि च कर्म न

[1]आत्मेन्द्रियाणां मनसोऽर्थयोगात् सुखं च दुःखं च कृतिश्च बुद्धिः ।
तेषामनारम्भ इहात्मसंस्थे मनस्यलं दैहिकदुःखनाशः ॥२०८॥

[2]सहात्मनो यन्मनसोऽपसर्पणं देहाच्च देहे च तथोपसर्पणम् ।
तत् स्याददृष्टादशितप्रपीतयोः कार्यान्तराणामपि तत्र संगमः ॥२०९॥

[3]अदृष्टनाशादुपसर्पणादिसंयोगनाशोऽनुदयश्च मोक्षः ।
इत्थं परीक्ष्याणि समस्तकर्मस्थानानि सर्वत्र भवेत् प्रणोदः ॥२१०॥

बलं न सुप्तं प्रतिबुध्यते क्वचिद् बलान्तरक्षोदविशेषकं विना ।
कुर्वद्बलं विक्रियते च न क्वचिद् बलान्तरक्षोदविशेषकं विना ॥२११॥

स्थानच्युतिः कम्पनमेव सा गतिः संपद्यते नोदनया ऽथवा क्वचित् ।
यत्कम्पते तेन गतिर्भवेत् तया स्यान्नोदनाऽन्यत्र यदाहितं बलम् ॥२१२॥

गतिस्तु देशान्तरयोगलक्षणा द्विधांशतो वा समुदायगाऽपि वा ।
रथस्य चक्रं शिरसा धृतं यदि प्रणीयते सा समुदायगा गतिः ॥२१३॥

---

जायते—इति सूत्रानुसारि तदप्यत्रोक्तम् । उत्तरार्द्धे मनः क्रियाया विवरणम्—मनः कर्म हस्तकर्मणा तुल्यम् । यथा आत्मप्रयत्नेन हस्तकर्म उक्तम्, तथैवात्मप्रयत्नेनैव मनस्यपि क्रिया जायते । ननु प्रयत्नोऽपि त्वात्मनि मनः सयोगेनैव जायते । आत्मन संयोगश्च मनः क्रिययैव वाच्यः, विभौ आत्मनि क्रियाभावात् । ततश्च मनसि क्रियाभावे आत्ममनः संयोग एव न स्यादिति प्रयत्नोऽपि कथमुत्पद्येत, तत्राह, तस्यापि मनसोऽपि आद्यं कर्म अदृष्टकारितमिति । सद्य उत्पन्नस्य वालस्य, सुप्तोत्थितस्य पुरुषस्य, मूर्छांत उत्थितस्य च मनसि प्रथमं कर्म अदृष्टहेतुकमेव । तत आत्मसंयोगेन प्रयत्नाद्युत्पत्ताविच्छया प्रयत्नेन चात्मा मनः प्रेरयतीति भावः । तदुक्तं श्रीमता कणादेन—"हस्तकर्मणा मनः कर्म व्याख्यातम्" (५।२।१४) अणूनां मनसश्चाद्यं कर्मादृष्टकारितम् (५।२।१३) इति ।

[1] आत्मगुणा ये वैशेपिकैरुक्ताः, स्वमतेऽपि च व्यावहारिकस्यात्मनो भूतात्मनो ये धर्माः; तेपामुत्पत्तिप्रकारं वैशेषिकसूत्रे अस्मिन्नेव प्रकरण उक्तमाह—आत्मनो मनसः इन्द्रियाणां वाह्यार्थानां च संयोगे मनसि सुखदुःखे, वुद्धिः—ज्ञानम्, कृतिः—प्रयत्नः, चकारादिच्छा द्वेपौ च जायन्ते । यदा तु मनः—सुपुप्तौ योगसमाधौ वा आत्मन्येव स्थिरम्, अर्थादक्रियम्—तदा सुखदुःखादीनि नोत्पद्यन्ते । अस्या अवस्थायाः स्थिरत्वसंपादने च देहजन्यस्य दुःखस्य नाश एव भवतीति ।

[2] मरणे जन्मान्तरग्रहणेऽपि च मन एव शरीराच्छरीरान्तरं गच्छति । मनसो गमनादेव तदवच्छिन्नस्य विभोरात्मनोऽपि गमनमुपचर्यते—घटचलने घटावच्छिन्नस्याकाशस्य चलनमिव । तदेतन्मनसः शरीरादपसर्पणं शरीरान्तर उपसर्पणं च अदृष्टेनैव जायते । एवं तत्र तत्र अन्नपानादिलाभोऽप्यदृष्टेनैव ।

[3] अदृष्टस्य धर्माधर्मादिभंगिन नाशे पुनरनुदये, तत्त्वज्ञानेन वा नाशे सर्वमेतन्न जायते इति मोक्षो भवति । अयमपि सर्वो वैशेपिकसूत्राणां तत्प्रकरणस्थानामनुवादः । तदित्थं वैशेपिकदर्शनस्य पञ्चमोऽध्यायः सर्वोऽप्यत्रानूदितः । अग्रे पद्यानि स्पष्टार्थानि । तैरवयवगता समुदायगता चेति द्विविधा गतिर्विवृता ।

रथस्य चक्रं धुरि चेत् स्थिरायामावर्त्यते सा गतिरांशिकी स्यात् ।
रथस्य चक्रं रथसन्नियुक्तं संचाल्यतेऽश्वेन तदोभयी सा ॥२१४॥

[१]प्रसारणाऽऽकुञ्चनयोर्द्वयं तथापक्षेपणोत्क्षेपणयोर्द्वयं पुनः ।
इत्थं चतुर्धा गतिरांशिकी मता नाना विधाऽन्या समुदायगा गतिः ॥२१५॥

[२]प्रसारणाकुञ्चनके तु वाससोऽवक्षेपणं चक्रगतं परं तरौ ।
यत्कम्पनं यश्च नतोन्नतक्रम उत्क्षेपणं त्वेव तथोर्मयोऽपि च ॥२१६॥

[३]अथान्यथा स्यादिह सामुदायिकी सा स्यन्दनस्पन्दनरेचनभ्रमैः ।
ऋज्वी च वक्रान्यविधा च लक्ष्यते योगाद्बलानामिह जायते गतिः ॥२१७॥

---

[१] वैशेषिकैः—उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्मणः पञ्च भेदा उक्ताः, तत्राद्याश्चत्वारोऽवयवगतिरूपाः, पञ्चमं गमनं तु समुदायातिरूपमिति ग्रन्थकृद् विवृणोति । उदाहरणमग्रिमे पद्ये ।

[२] वैशेषिकसूत्रेषु उत्क्षेपणम्, अपक्षेपणम्, आकुञ्चनम्, प्रसारणम्, गमनमिति पञ्च कर्माण्युक्तानि । तत्र व्याख्याकृद्भिर्निबन्धकृद्भिश्च भ्रमणम्, रेचनम्, स्यन्दनम्, ऊर्ध्वज्वलनम्, तिर्यग्गमनमित्येतान्यपि पञ्च कुतो न गणितानीति शङ्कित्वा तेषां गमन एवान्तर्भावं निरूप्य च उत्क्षेपणादीनामपि तर्हि कुतो गमन एव नान्तर्भाव इति शङ्कायां कैश्चित् क्लिष्टकल्पनया समाहितम्, कैश्चित्तु मुनेः स्वतन्त्रेच्छतैव शरणीकृता । तत्र ग्रन्थकृद्विलक्षणया रीत्या कणादस्याभिप्रायमाह । गतिर्द्विविधा भवति—समुदायगता अवयवगता च । यत्र समुदायस्य तत्केन्द्रविन्दोर्वा न देशत्यागः, तत्र केवलावयवगतिरेव मन्यते, यत्र तु केन्द्रविन्दोः समुदायस्य चापि देशत्यागः तत्र समुदायगतिर्बोद्धव्या । तत्र केवलावयवगतेरुत्क्षेपणादयश्चत्वारो भेदा उक्ताः, समुदायगतिस्तु गमनशब्देनैवोच्यत इति पूर्वपद्य उक्तम् । अवयवगतौ चतुरो भेदानिदानीं संगमयति । वस्त्रादेः प्रसारणम्, आकुञ्चनं च यद् दृश्यते—तत्र स्पष्टैव केवलावयवगतिः, समुदायस्य तत्केन्द्रविन्दोर्वा देशत्यागाभावात् । चक्रं करे गृहीत्वा स्वस्थान एवाङ्गुल्या कश्चिदूर्ध्वमधो वा भ्रमयति, तत्र उत्क्षेपणमपक्षेपणं च । तत्रापि समुदाये केन्द्रे वा गत्यभावान्न गमनम्, केवलमवयवगतिरेव । तरौ-वृक्षे च वायुसंयोगेन कम्पने, या नतिरूर्ध्वंगतिर्वा शाखापत्रादीनां भवति, साप्युत्क्षेपणमपक्षेपणं च केवलावयवगतिरूपत्वाच्छक्यते वक्तुम् । जलस्योर्मिषु—तरङ्गेषु च या जलावयवानाम् ऊर्ध्वगतिरधोगतिश्च साप्यत्रोदाहार्या, तत्रापि समुदायगत्यभावादिति ।

[३] समुदायगा गतिस्तु गमनशब्देनोच्यते । तत्र च न केवलं भ्रमणाद्या एव भेदाः, अपि तु जलादेः स्यन्दनम्, भूमिकम्पादौ च शयनासनादीनां स्पन्दनम्—चलनम्, रेचनम्—मलादेरधःपतनम्, भ्रमणम्—नृत्यादावेकस्मिन्नेव स्थाने परिवर्तनम्, तत्रापि केन्द्रगति सत्त्वाद्गतावेव तदन्तर्भाव्यम् । सरला गतिर्हंसादीनाम्, वक्रा गतिः सर्पादीनाम्, अन्यविधा च तिर्यगादि गतिरित्यनेके प्रकारास्तत्र संभवन्ति । ते न गणयितुं शक्यन्ते । तस्मात्सामान्येन गमनशब्देनैव समुदायगतिः सूत्रकृताभिहितेति । सर्वे चेमे भेदा विभिन्नानां बलानां योगेन जायन्ते ।

[१]आकर्षणं सिध्यति चाशनायया विक्षेपतः स्यात्तु विकर्षणं पृथक् ।
तयोस्तु योगादिह जायते गतिः स्तम्भस्तथा चक्रगतिश्च वक्रता ॥२१८॥

[२]बलं हि मात्राकृतरूपमिष्यते तदुद्भवेत् खण्डसमुच्चयात्मना ।
कम्पे प्रसारेऽथ गतौ तथा पृथग् भूत्वा तदैकैकमिवाथ लुप्यते ॥२१९॥

[३]कम्पो गतिस्तेन कृतस्वरूपं बलं रसे भूम्नि कृतावतारम् ।
विकासयोगात् पृथगेकमेकमात्राणु भूत्वैव लयं प्रयाति ॥२२०॥

[४]कम्पस्य धारा यदि नाभिमेकं संश्रित्य तस्माच्च बहिर्मुखी स्यात् ।
सा मण्डलीभूय बहिश्चरन्ती काष्ठासु गत्वा विलयं प्रयाति ॥२२१॥

कम्पस्य धारा यदि नाभिमेकं संश्रित्य चान्तर्मुखतामुपेयात् ।
सा मण्डलीभूय तदन्तरन्तर्गत्वैव नाभौ विलयं प्रयाति ॥२२२॥

[५]कम्पस्य धारा बलवत्प्रवृद्धा परस्परेण प्रतिहन्यते चेत् ।
नोच्छिद्यते चेदितरेतरेण भुक्तं भवेदावरणं तदिष्टम् ॥२२३॥

---

[१] पूर्वोक्तमेव स्फुटयति—अशनायाबलेन व्याख्यातपूर्वेण आकर्षणं भवति, तादृशबलवतोऽभिमुखं वस्त्वन्तरमागच्छति। विक्षेपबला विकर्षणम्—तादृश बलवतः परागदिशि वस्तूनां गमनं भवति। तयोर्विपरीतादनुकूलाद्वा योगाद् गतिस्तम्भः, चक्रगतिः, वक्रता चेत्याद्या विशेषा जायन्ते। तत्सर्वं सावधानं विद्वद्भिः परीक्ष्यम्। सर्वेषामुदाहरणानि ग्रन्थविस्तरभयान्नोपात्तानि।

[२] इदानीं पुनः स्फुटीकर्तुं बलस्य स्वभावान् विविधानाह—बलं परिच्छिन्नमत्यल्पप्रदेशं भवति। रसाधारतया धारावाहित्वमापद्य तस्य समुच्चयोऽपि भवतीत्यसकृन्निरूपितम्। क्वचित् खण्डरूपेण क्वचित्समुदायरूपेण च तस्याविर्भावः। तच्च कम्पं प्रसारं गतिं वोत्पाद्य समुदायाद्विभक्तं पृथक् पृथग् भूत्वा एकैकं खण्डश एव लुप्यते।

[३] पूर्वोक्तस्यैव स्पष्टीकरणम्। कम्प एव गतिरित्युच्यते। तेनैव बलस्वरूपं कुर्वद्रूपतया अनुमीयते। तद् भूम्नि-व्यापके—अपरिच्छिन्ने रसे, अवतारं—स्वरूपप्रवेशं कृत्वा परस्परयोगाद् विकासं गच्छति, एकैकं पृथग् भूत्वा तु छिन्नाभ्रमिव लयं प्रयाति।

[४] बलोत्पादितस्य कम्पस्य धारा नाभिम्—केन्द्रम्, एकं संश्रित्य तत्रैव प्रथमं प्रादुर्भूय, तस्मात् केन्द्रस्थानाद् यदि बहिर्मुखी भवति, तदा मण्डलीभूय चक्ररूपेण प्रसरन्ती विभिन्नासु दिक्षु गत्वा लयं याति। यथा जले केनचित्पाषाणादौ प्रक्षिप्ते केन्द्रात्कम्प उत्तिष्ठते, तस्य च बहिर्मुखो बहुप्रदेशं यावन्मण्डलाकार एव प्रसारो दृश्यते, यावद्बलं तु गत्वाग्रे लयः। यदि तु कम्पधारा अन्तर्मुखी भवति, सा अप्रकाशमेवान्तश्चरन्ती केन्द्रमेवागत्या लीना भवतीत्युत्तरपद्येनोक्तम्।

[५] बलस्य प्रबोधमनुसृत्य यदि तज्जन्यस्य कम्पस्यापि परस्परविरुद्धा धारा परस्परमुपहता स्यात्, संघर्षेण परस्परमुपभुक्ता उच्छिन्ना च न स्यात्, तदा आवरणरूपेण परिणमति, यदावरणमग्रे व्याख्यास्यते।

[१]एष स्वभावो विदितः परन्तु प्रवेशतोऽन्यस्य बलस्य मध्ये ।
स्थिताशनायां लभतेऽशनं चेत् प्रतिक्षणोच्छिन्नमपि स्थितं स्यात् ॥२२४॥

[२]कम्पक्रमनोत्पन्नमपि क्षणेनोत्सन्नं निरन्नं बलमत्र वीक्षे ।
क्वचित् पुनः सान्नमिदं चिरायानुवर्तमानं विकृतं तदीक्षे ॥२२५॥

तत्रोपपत्त्यर्थममुष्य भेदस्यास्मिन् बले द्वैतमिदं प्रकल्प्यम् ।
येयं गतिस्तद्वलमन्यथा स्याद् या चाशनाया बलमन्यथा तत् ॥२२६॥

यत्पाप्मनोविक्रमणं गतिः सात्मन्वीह पाप्मा चरति स्वतोऽर्चन् ।
तत्रार्चता विक्रमणे घनत्वं वेगोऽतिशेते म्रियते च काले ॥२२७॥

[३]यथायथा तत्र बलप्रयोक्तुः स्याद्विप्रकर्षोऽथ तथा तथा स्यात् ।
वेगाल्पता तत्र घनत्वहान्या वेगोऽधिकत्वेन तु संनिकर्षात् ॥२२८॥

[४]अत्युच्चतः पातित वस्तुनि स्यात्क्रमेण वेगाधिकता ह्यनुन्ने ।
उत्क्षिप्यते लोष्टमिदं यदा खे तदास्य वेगो ह्रसति क्रमेण ॥२२९॥

---

[१] पूर्वोक्तरूपेण धारारूपतां गत्वा विच्छिन्नस्य बलस्य लय इति स्वभावो ज्ञातः। परं तद्बलं अन्यस्य बलस्य मध्ये प्रविष्टं स्यात्, तत्र च तद्गताशनाया अशनम्—अन्नम्—बलान्तररूपम् यदि लभेत, तर्हि उच्छद्यमानस्यापि बलस्य स्थिरता भवति ।

[२] इत्थं च द्वेधा बलस्वभावोऽवलोक्यते, क्वचित्कम्पात्मकक्रियारूपेण प्रकटीभूतमपि निरन्नं क्षणमात्रेण नष्टं भवति, क्वचिच्च अन्नं भुञ्जानं बहुकालपर्यन्तमनुवर्तमानं भवति, अनेकान् विकारांश्च जनयति । अस्य भेदस्य उपपादनार्थं बले जातिद्वयं कल्प्यते । एकं बलं गतिरूपम्, अपरं च अशनायारूपमिति । पाप्मनः बलस्य यद् विक्रमणम्—बलान्तराश्रयणम्, विलयनं वा सा गतिः । यत्तु बलमात्मन्वि आत्मानं रसमाश्रित्य स्थितम्, तदर्चन् चरति—ऊर्ध्वाधोभागक्रमेण प्रसरति । 'एतदेव अर्चन् श्राम्यन् चरति' इति बृहदारण्यकोपनिषद्युक्तम्, तच्च पूर्वं व्याख्यातम् । अर्चनरूपेण विक्रमणे बलस्य घनता निबिडत्वं स्थिरत्वं च भवति, वेगश्चातिशयेन भवति, तच्चिरं स्थित्वा काले म्रियते—नश्यतीति पद्यत्रयस्य व्याख्या ।

[३] बलप्रयोक्तुः यथा यथा विप्रकर्षो-दूरत्वं भवति, अर्थात् येन बलप्रयोगः कृतः, तदपेक्षया दूरं बलवद्वस्तु यदा गच्छति, तदा बलस्य घनत्वं हीयते, शैथिल्यं जायत इत्यर्थः । तथा तथैव च वेगोऽप्यल्पो भवति । बलप्रयोक्तुः संनिकर्षे सामीप्ये तु अधिकतया वेगो दृश्यते । उदाहरणमग्रिमे पद्ये ।

[४] पूर्वोक्तवैपरीत्यमपि स्थलविशेषे दृश्यते । यथा उच्चस्थानात् पर्वतादेः प्रक्षिप्ते लोष्टादौ क्रमेण वेगाधिकता भवति, यावद्दूरं पतति, तावदेवाधिकवेगो भवतीति दृश्यते अनुन्ने—प्रेरणान्तरमप्राप्तेऽपीत्यर्थः । नीचैः स्थानादुपरि प्रक्षिप्ते तु लोष्टादौ प्रथमं प्रबलो वेगः, अग्रे तु क्रमेण ह्रसतीति ।

[१]गतौ बले वेगबलं हितं स्याद्बलप्रयोक्तात्ववधार्यतेऽयम् ।
वेगे प्रकर्षाभिमुखेऽस्य वेगापकर्षस्तु वैमुख्यदिशि प्रतीतः ॥२३०॥

उत्पद्यते यत्र बलं पुनः पुनः पूर्वानुवृत्तं न निवर्तते बलम् ।
तत्रास्य वेगः परिवर्धते क्रमात् निम्नं यतां कन्दुकपाथसां यथा ॥२३१॥

[२]बलस्य वृत्तिर्द्विधा प्रसिद्धा स्यात्संचरः स्यात्प्रतिसंचरो वा ।
प्रवर्तनं संचरमाहुरार्या निवर्तनं तु प्रतिसंचरः स्यात् ॥२३२॥

[३]द्वयोस्तु योगात्परिवर्तनं स्यात्प्रवृत्तमन्यच्च निवृत्तमन्यत् ।
रूपं निवृत्तं कटकं ततोऽन्यद् रूपं प्रवृत्तं रुचकं सुवर्णे ॥२३३॥

[४]उक्थात्तदुद्गीथमनुप्रवृत्तिस्तूत्थानमेतद्बलसंचरः स्यात् ।
उद्गीथतोऽन्यत्र परायणं तु गतिर्निवृत्तिः पतनं तदन्यत् ॥२३४॥

[५]सत्तारसानुग्रहणं बलस्य यत् तां भावनां भावपदेन चक्षते ।
भावस्त्रिधोत्पत्तिरिह स्थितिः क्षयः सत्ता ग्रहो जन्म ततोऽन्यथा क्षयः ॥२३५॥

---

[१] एवं भेदे कारणमाह—नीचैर्गतिरुपरि स्थितानां पार्थिवानां जलादीनां च स्वाभाविकी, पृथिव्याकर्षणात् । तेन उच्च स्थानात् पातिते लोष्टादौ स्वाभाविके नीचैर्गतिप्रयोगके बले पुरुषप्रयत्नेन बलान्तरं हितम्—स्थापितम्, तेनोभयसमुच्चयाद् वेगो जातः । स वेग एव वेगप्रकर्षाभिमुखे बले बलप्रयोक्ता—बलवर्धकः, अवधार्यते । वैमुख्यदिशि—उच्चैर्गतौ तु आकर्षणाभावात्स्वाभाविकं बलं नास्ति, तत्र हस्तनोदनाजन्यं बलं क्रमेण ह्रसत्येवेति । एतदेवाग्रिमेण पद्येन स्पष्टीकृतम् ।

[२] नोदना, गतिः, वेगः, वृत्तिः, भावः—इति पूर्वोक्तासु पञ्चसु विक्षेपविधासु तिस्रो व्याख्याताः इदानीं चतुर्थी वृत्तिर्व्याख्यायते । पद्यं स्पष्टार्थम् ।

[३] संचरप्रतिसंचरयोर्योगात् परिवर्तनं भवति । उदाहरणमुत्तरार्द्धे । यथा कटकस्याभरणस्य परिवर्तनेन रुचकं केनचित् कारितम् । तत्र सुवर्णे रुचकस्य रूपस्य संचरः, कटकस्य रूपस्य तु प्रतिसंचर इति द्वयोर्योगाद्रूपपरिवर्तनं जातम् । इदं सर्वं बलकृतमेव ।

[४] इदं सुवर्णोदाहरणं तु संसारदशायाम् । आरम्भदशायां कथं संगमयितव्यमिति सामान्यरूपेणाह । यस्मादुत्पाद्यते, तन्मूलतत्त्वमुक्थमित्याख्यायत इत्युक्तपूर्वम् । यत्र तूत्पत्तिक्रमस्य समाप्तिः, स उद्गीथः । तदुक्तं छान्दोग्योपनिषदि "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" इति (छा० उ० १।१।३) । तत्र उक्थादुद्गीथपर्यन्तं प्रवृत्तिर्बलस्योत्थानम्—स सञ्चरः । उद्गीथतः परावृत्य परस्मिन् कारणे, अयनम्—प्रवेशस्तु निवृत्तिरूपं पतनं प्रतिसंचर इति । बलस्य प्रचये नव नवानि रूपाणि प्रादुर्भवन्ति । उत्पादकानां बलानां लये तु तानि विलीयन्त इति भावः । यद्वा–प्रणवस्य गानमुद्गीथ उच्यते । गानं तु तननं विस्तारणमेव । उक्थं प्रणवः, तत् उद्गीथपर्यन्तम्—तननपर्यन्तं या प्रवृत्तिः, स संचरः, तस्य पुनः परायणम्—उपसंहारस्तु प्रतिसंचर इत्येवं व्याख्येयम् ।

[५] अथ पञ्चमं विक्षेपस्य रूपं भावं विवृणोति—रसः सत्पदेनोच्यते, स च स्वरूपेणैव सन्, न तु धर्मयोगादिति सत्तापदेनापि स एव वक्तुं शक्यते । तेन सत्तारूपेण रसेन,

[१]रसेऽनुवृत्तिः स्थितिरुच्यते सा स्यात्संभवः संतननं प्रवाहः ।
इति द्विधा संभवनं वलस्य बलान्तरे संस्रवणं विकारः ॥२३६॥

[२]वलद्वयं क्वापि वलत्रयं वा ततोऽधिकं वापि समन्वितं सत् ।
भावः क्वचिद्भाति समन्वयोऽयं स्यात्संभवोऽसौ बहुधाऽत्र दृष्टः ॥२३७॥

[३]कुलालचक्रभ्रमणाच्च मृत्सा स्थितेश्च हस्तस्य च नोदनायाः ।
इच्छा हिताया इह मृत्तिकायां घटादिकं रूपमुवेति भावः ॥२३८॥

## (३३) आवरणाधिकरणम्

[४]क्षणेन कम्पस्य गतिर्विलीयते न स्थीयते तेन न सर्ग उद्भवेत् ।
सर्गस्य तस्मादुपपत्तये रसे बलं वदन्त्यावरणाभिधं पृथक् ॥२३९॥

[५]वलं हि विस्रंसनलक्षणं स्यात् स्थेमा तु विस्रंसनभावनाशः ।
विक्षेपवृत्तिः परिवर्तते चेत् स्थेम्ना तदेवावरणं निरुक्तम् ॥२४०॥

[६]परिश्रितानि प्रतिपद्यते चेत् स्थेमा स तत्तत्र तथोपनद्धम् ।
परिश्रितान्यत्र भवन्ति यस्माद् वलं तदेवावरणं निरुक्तम् ॥२४१॥

---

यद्बलस्यानुग्रहणम् वलस्य स्वस्मिन् स्थापनम्—तदेव भावनापदेन भावपदेन चोच्यते । सत्ता भाव इत्युक्तं न्याये । सा तु सत्ता न तत्त्वान्तरम्, अपि तु वलस्य रसानुग्रहणमेवेति भावः । स च भावस्त्रिधा, उत्पत्तिः, स्थितिः, क्षयश्च । सत्ताग्रहणमुत्पत्तिरिति लोकदृष्ट्या । सत्तया रसेन वलस्य ग्रहणं जन्मेति तु वैज्ञानिकदृष्ट्या । सत्तात्याग एव क्षयः ।

[१] रसे वलस्य अनुवृत्तिस्तु स्थितिः । सैव संभवनमुच्यते । तच्च द्विधा संभवति—सन्तननरूपेण, प्रवाहरूपेण च । सन्तनने अधिकाधिकदेशावगाहः, प्रवाहेण च तत्रैव चिरं स्थितिः । वलस्य वलान्तरे संस्रवणं तु विकार उच्यते ।

[२] संभवनस्य तृतीयमपि प्रकारमाह—पद्यं स्पष्टार्थम् ।

[३] अनेकवलानां योगोऽत्र स्पष्टार्थेन पद्येन निरूपितः । एभिर्वलैर्घटशरावादिको भाव उदेति । रसेनानुगृहीतमनेकरूपं वलमेव घटशरावादिरूपतामापन्नमित्यर्थः । भावजनितत्वाद् घटादयोऽपि भावा उच्यन्त इत्यपि भाव्यम् ।

[४] एवमशनायां विक्षेपं चेति वलस्य द्वौ भेदौ सपरिकरं निरूप्य तृतीयमावरणं निरूपयितुमारभते । इदमावरणमेव जगत उत्पादकमित्याह । यतो हि पूर्वोक्तस्य कम्पस्य तु गतिः क्षणेनैव विलीयते, तत्र स्थितिर्नास्ति । ततश्च सर्गः नवनवपदार्थोत्पत्तिः कथं संभवेत् । तस्मात् सृष्टेरुपपत्तये आवरणरूपं वलं तृतीयं स्वीकर्तुमावश्यकम् ।

[५] पूर्वोक्तं वलं विस्रसनलक्षणम्—उत्पत्तिक्षण एव विस्रंसते—विनश्यति । तद्विरुद्धस्तु स्थेमा—स्थिरतेत्यर्थः । स्थिरतया विस्रंसनभावस्य नाशो भवति । सेयं वलस्य विक्षेपरूपा वृत्तिः—स्वभावः, यदि स्थिरतारूपेण परिवर्तितः स्यात्, तर्हि तदेवावरणं भवति ।

[६] स्थेमा कथं संभवति वले इति तत्प्रकारमाह । परिश्रितानि वक्ष्यमाणान् संसर्जनभेदान् । इह परिश्रितपदेन यदुक्तम्, तदेवाग्रे संसर्जनपदेन वक्ष्यते । उपसर्गाणां नाना-

१रूपं यतोऽस्मिन् प्रभवत्यकस्माद् द्रष्टुं तदक्ष्णा घटते यतो वा।
तदन्यदत्रावरणं बलं स्यात् प्राणास्तदा रूपसमावृताः स्युः॥२४२॥

२स्थेमानमायाति यथा यथा तद्घनत्वमुक्तं तत एव तस्मिन्।
विलक्षणा शक्तिरुदेत्यपूर्वा तेजोऽग्निरस्मिन् समुदेत्यकस्मात्॥२४३॥

---

विधार्थप्रकाशने कामधेनुरूपत्वात्। तानि रूपाणि यदि प्रतिपद्यते बलम्, तदैव स्थेमा भवेत्। तथा च तद्बलं तत्रैकत्र उपनद्धम्—बद्धं सदावरणरूपतां गच्छतीति अनेन वाक्येनोक्तम्। संसर्जनानि यतो जायन्ते, तदपि बलमावरणपदेनोच्यते, संसर्जनान्यपि चावरणपदेनैव व्यवह्रियन्ते।

१ अथावरणस्य तृतीयं प्रकारमाह—अस्माद् बलादेव यतः कारणाद्, अकस्मात् पूर्वमदृष्टमेव रूपं प्रादुर्भवति, यतः कारणाद् अक्ष्णा द्रष्टुं घटते—दर्शनयोग्यतां गच्छतीत्यर्थः। बलं हि दर्शनयोग्यं न भवति, आवरणरूपतां गतं तु दर्शनयोग्यं भवति, तदेव रूपमुच्यते। रूपप्रादुर्भावे कारणमप्यत्रैव ध्वनितम्। अक्ष्णा—नेत्रेण सह संयोगविशेषे रूपं प्रादुर्भवतीति। ततेषु वस्तुषु प्रचरणशीलं प्राणरूपं बलम्, सूर्याच्च रश्मिरूपेण बलमेव सर्वत्र प्रसरति, अस्माकमक्ष्यादीनीन्द्रियाण्यपि बलरूपाण्येव। तत्सूर्यस्यान्यस्य प्रकाशस्य वा रश्मयो वस्तुभिः संयुज्य तत्प्राणसहकृता चक्षुषि आयान्ति प्रत्यायान्ति च। एवं प्रवाहरूपतया स्थिरतामासाद्य परस्परसंयुक्तानि तानि बलानि रूपं प्रादुर्भावयन्ति। आधुनिका वैज्ञानिका अप्येवं विधामेव रूपोत्पत्तिप्रक्रियां व्याचक्षते किञ्चिद् भेदेन। बलान्तरैः संयोगे च यो रूपान्तरत्वेन परिणामो भवति, सोऽपि रूपस्य बलजन्यतायां प्रमाणम्। तथाहि—अन्यादृशप्रकाशसंयोगतारतम्ये रूपं विलक्षणमेव प्रतीयते। हरिद्राचूर्णे श्वेतचूर्णसंयोगे च रक्तं रूपं जायते। सर्वेषां रूपाणामुपमृद्य संमिश्रणे च कृष्णमेव रूपं प्रादुर्भवति। मेंहदीति ख्यातस्य हरितपत्रस्य जलं संयोज्य स्त्रीणां हस्तपादादिविलेपने रक्तं रूपं तत्र प्रतिभासते। एकस्यैव नेत्रोपमफलादेः बादाम इति प्रसिद्धस्य। कुट्टने क्रमेण विभिन्नानि रूपाणि दृश्यन्ते। सर्व वर्णानि पत्राणि संयोज्य तेषामतितीव्रभ्रमणे यत्नेन कृते च श्वेतरूपाणि सर्वाणि प्रतीयन्ते—इत्याद्युदाहार्यम्। तदिदं रूपस्य बलजन्यत्वमवसाययितुमलम्। एवं स्पर्शादेरपि बलसंयोगजन्यत्वमेवेत्याद्यूह्यम्। तदुक्तं भगवद्गीतायाम्—

'मात्रास्पर्शास्तु कौन्तेय शीतोष्ण सुखदुःखदाः' इति। (२ अ० १४ श्लो०)

अत्र मात्रापदेनेन्द्रियाण्येव व्याख्यातृभिर्गृहीतानि। शीतोष्णपदं चोपलक्षणम्। सर्वेषामेव गुणानामिन्द्रियसंयोगजन्यत्वमेवात्रोक्तम्। तस्माद्रूपमपि बलविशेष एवेति सुष्ठूक्तमत्र। इदं च रूपं प्रादुर्भूय प्राणान् आवृणोति। रूपवति वस्तुनि रूपमेव सर्वैः प्राधान्येन विज्ञायते, अन्ये प्राणा निगूढा इव भवन्ति। तस्मादावरणबलमेतद्रूपम्। यद्वा सामान्येन वस्तुन आकार एवात्र रूपपदेन व्याख्येयः। आकारो नाम परिच्छेदः। स च विभिन्न दिक् संबन्धरूप इति बलमेव। तदेव वस्तुस्वरूपतया चक्षुषा गृह्यत इति।

२ यथा यथा च बले स्थेमा नाम स्थिरता भवति, तथा तथा बलं घनताम्—निविडत्वं लभते। कस्यापि वस्तुनः स्थिरतायां निविडत्वमिति जलघटपटले प्रकाशादौ च स्फुटमनुभूयत एव। घनत्वे च तस्मिन् बले विलक्षणं सामर्थ्यमुदेति, येन तत् तेजो रूपेण प्रादुर्भवति।

[१]पराक्रमारम्भफलं बलं चापूर्वं भवेदावरणं तदुक्तम्।
तदित्यमत्रावरणं निरुक्तं पोढा सहैतानि समाविशन्ति ॥२४४॥
स्थेमाऽन्यदेवावरणं बलं स्यात् परिश्रितं त्वावरणं ततोऽन्यत्।
रूपं च तत्कर्म च तद्बलं च तेजश्च भिन्नानि बलान्यमूनि ॥२४५॥
[२]चतुर्विधं त्वावरणं हि माया भावोऽप्यभावोऽपि च सर्जनं च।
मात्रा च संस्थेति पृथग्द्विधासौ माया पुरोक्ता पुरुरूपरूप्या ॥२४६॥
[३]रसान्वितैरन्यबलैस्तु शून्यं सहान्वितं यत्र बलं स भावः।
भावश्चतुर्धा प्रमितोऽन्तरायः संकोचमोहौ च तथा विशेषः ॥२४७॥

---

तेज एवाग्निरित्यप्युच्यते—इति द्वयोः शब्दयोरत्र संनिवेशः कृतः। बलस्य निबिडत्वे सति अग्निरू तेज उदेतीति सूर्यरश्मीनां सूर्यकान्तमणेः (आतशी शीसेति ख्यातस्य) संपर्के स्फुटमेवानुभूयते। अरुणिमन्थनेनाग्निप्रादुर्भावे च, सूर्यरश्मयो बलरूपा एवेत्यत्र तु न विचारकाणां विवादः स्यात्। उष्णतारूपस्य तेजस उत्पत्तिस्तु शरीरावयवानां परस्परसंघर्षणेऽप्यनुभूयत एव। तेजसश्च जलस्य, जलाच्च पृथिव्या उत्पत्तिः प्रस्वेदादौ स्वेदजनित मलादौ च स्वशरीर एव स्फुटमनुभूयत इति तेजः प्रादुर्भावपदेन भूतानामुत्पत्तिक्रमोऽत्रोपलक्षितः। छान्दोग्योपनिषदादिषु च तेजोबन्नानि त्रीण्येव जगति तत्त्वान्याख्यायन्ते। तत्र तेजस एव प्राथम्यात् तेजस एव प्रादुर्भावोऽत्रोक्तः। आकाशो वायुश्च तेजः पदेनैव तत्र संगृह्येते। इमानि च भूतानि रसबलादिकं स्वोत्पादकं प्राणादिकं च सर्वमावृण्वन्ति। भूतान्येवेदानीं सर्वैर्गृह्यन्ते, तदुत्पादिकाः शक्तयस्तु निगूढा इति भूतान्यावरणबलरूपाण्येव।

[१] अस्य पराक्रमारम्भस्य—क्रियाप्रवृत्तेः फलरूपं यद्बलं तदपूर्वनाम्ना व्यवह्रियते। तदेतदग्रेऽनुपदं विस्तरेण व्याख्यास्यते। स्थेमावरणं षोढाषड्भी रूपैर्निरुक्तम्। एतानि च रूपाणि समाविशन्ति—परस्परं संमिश्रितानि भवन्ति। एतानि बोधसौकर्याय पृथक् पृथग् दर्शितानि प्रकारभेदेन, न तु सर्वथा पार्थक्यमेषां षण्णां बोध्यम्। अतएव घनत्वमपूर्वं च संसर्जनरूपेष्वेवाग्रेऽन्तर्भावितम्। षण्णां नामान्युत्तरपद्य उक्तानि। तत्र कर्मपदेन कर्मफलमपूर्वं संगृहीतम्। अन्यत् स्फुटम्।

[२] अथ प्रकारान्तरेण आवरणबलस्य चतुर्विधत्वमाह—माया, भावः, अभावः, सर्जनं चेति चतुर्विधमावरणम्। तत्र माया मात्रासंस्था भेदेन द्विविधा पुरा बलनिरूपणारम्भे भूमिकाधिकार उक्ता। मात्रा नाम परिच्छेदः, संस्था च तत्तद्वस्तुनः संघटितं रूपमिति। इयं च पुरुरूपरूप्या—अनेकै रूपैर्निरूपणीया भवति।

[३] अथ द्वितीयं भावं निर्वक्ति—यत्र बहुधा भिन्नं बलं सहान्वितम्—अनेकानि बलानि एकत्र रसे समन्वितानीति यावत्। स एव भाव उच्यते। भावनिर्वचनं पूर्वप्रकरणान्तेऽपि कृतम्। विक्षेपबलमेवावरणतां गच्छतीत्यपि तत्रोक्तम्। तेनास्यैकवाक्यता भावनीया। परं भावाः पृथक् पृथग् भवन्ति—इति पार्थक्याय विशेषेण निरुच्यते—रसान्वितैः, अन्यैर्बलैः शून्यम्—विरहितम्—पृथग्भूतमिति यावत्, तद्बलम् एको भावः। तानि अन्यानि रसान्वितानि बलानि पृथक् पृथग् भावा इत्यनेनैव बोधितम्। भावस्यापि चतुर्विधत्वमुत्तरार्द्धे विवृणोति। नामानि स्पष्टानि।

[१]देशाधिकत्वं प्रथनं विकासः संकोच उक्तोऽस्य विपर्ययात्मा ।
प्रज्ञासु चैतन्यसमन्वयः स्याज्ज्ञानं हि मोहोऽस्य विपर्ययात्मा ॥२४८॥
[२]प्रत्यर्थमेवाभिमता विशेषा व्यक्तिस्ततोऽन्योन्यमभावसिद्धिः ।
अथान्तरायः प्रतिबन्धहेतुः प्रज्ञासु रूपेषु च योगसिद्धेः ॥२४९॥
[३]यत्केवलं शून्यबलं हि सत्ताज्योतिः पृथक्स्थं स भवेदभावः ।
सत्तापृथक्त्वादिह नास्तिबुद्धिर्ज्योतिः पृथक्त्वाच्च न भाति बुद्धिः ॥२५०॥
सत्तामनासज्य[४] भवेदभावोऽभावे तु सत्ता विभवेद्विभुत्वात् ।
स च द्विधा स्यात् प्रभवस्थसत्ता सम्बन्धसत्ता प्रतिबन्धभेदात् ॥२५१॥

---

[१] अथ सूचीकटाहन्यायेन क्रमं परित्यज्य संकोचमोहौ पूर्वं व्याचष्टे । पद्यं स्पष्टार्थम् । अल्पदेशावगाहः संकोचः, अज्ञानं च मोह इति तेन फलति । अज्ञानं च प्रज्ञायां चैतन्यस्य आवृतोऽल्पः समन्वय इति ।

[२] तृतीयं भावभेदं विशेषमाचष्टे व्यक्तिरेव विशेषः । स च प्रत्यर्थं भिन्नः । अनेन विशेषेणैव सर्वासु व्यक्तिषु पृथक्त्वं प्रतीयते । अनेनैव च अन्योन्याभावो भेदापरपर्यायः सिद्ध्यति । अयं चावरणजनितः कश्चिद्धर्मविशेषः, यत्र तु विशेषको धर्मः कश्चिन्न लभ्यते, तत्र तद्देश–तत्कालसंबन्ध एव । सोऽपि परिच्छेदरूप आवरणजनित एवेति प्रागुक्तम् । अथ प्रथमं भावभेदमन्तरायं विवृणोति—प्रज्ञासु रूपेषु च योगसिद्धेः—संयोगस्य संयोगभानस्य वा प्रतिबन्धो अभावः, तस्य हेतुरन्तराय उच्यते । अयमन्तरायो भावरूपः । अभावस्य हेतुरिति अभावप्रकरण एवैतस्योदाहरणानि अनुपदं कथ्यन्ते ।

[३] अथावरणस्य तृतीयो भेदो अभावनामा व्याख्यायते । यत् केवलं शून्यरूपं बलं भवेत्, सत्ताया ज्योतिषा वा यस्य संबन्धो न भवेत्, ताभ्यां पृथगेव यद्बलं स्यात्, सोऽयमभावपदेनोच्यते । सत्ता ज्योतिषी रसाधिकारे विस्तरेण निरूपिते, ताभ्यामसंबद्धं बलमभावः । सत्तासंबधाभावादेव अभावो 'नास्ति' पदेनोच्यते । अभावविषयिणी बुद्धिश्चापि 'नास्ति' इति रूपेण सत्ताभावमेव प्रत्याययति । ज्योतिषः संबन्धाभावादेव च 'न भाति' इति बुद्धिः शब्दव्यवहारश्चापि तत्र प्रवर्तेते इति । अयमाशयः—रसबलयोः संबन्धे सत्येव सत्त्वं वा भावो वा प्रतीयते । रसप्रधानानि त्रीणि रूपाणि रसाधिकारे व्याख्यातानि, बलप्रधानानि च त्रीणि रूपाण्यत्र व्याख्यायन्ते । एषां परस्परं संबन्ध एव 'अस्ति' 'भाति' इति बुद्धिव्यवहारयोः प्रयोजकः, स संबन्धो यत्र अन्तरायेण न भवेत्, तत्र 'नास्ति' 'न भाति' इति बुद्धिव्यवहारौ प्रवर्तेते । एतद्बुद्धिविषय एव चाभावपदेन व्यवह्रियते । सोऽयमभावोऽपि आवरण रूपो बलस्यैव भेदः, न तु आधुनिकनैयायिकाभिमतं किञ्चिदतिरिक्तं तत्त्वम् । तदेतदग्रे स्फुटीक्रियते ।

[४] ननु 'नास्ति' इति बुद्धिव्यवहारयोरपि नञा सह 'अस्ति' इति सत्तासंबन्धः श्रूयते, तर्हि सत्तासंबन्धाभावः कथमुच्यत इति प्रश्नं समाधत्ते । बलं सत्तया नासज्जते—न संबध्नाति । सत्ता तु व्यापकत्वादनेनापि बलेन विभूतिसंबन्धं करोत्येव । सत्ता हि रसस्वरूपमिति विवृतं प्राक् । रसस्तु विभुरिति कुत्रापि भावे अभावे वा तस्य असंबन्धो वक्तुं न शक्यत एव । तस्मादेव न पदेन बोधिते अभावेऽपि सत्ता सम्बन्धोऽस्तिपदेन संकेत्यते इति । अथाभावस्यापि भेदान् विवृणोति—प्रथममभावो द्विविधो ज्ञेयः—प्रभवस्थसत्ता प्रतिबन्धः, संबन्धसत्ताप्रतिबन्धश्चेति ।

यत्[1] प्रागसद्ध्वंसनमेव वा यद् यदश्वशृङ्गादिवदस्त्यसत्यम् ।
तेषु त्रिषु स्यात् प्रभवस्यसत्तासंसर्गशून्यस्य बलस्य बोधः ॥२५२॥

अथेह[2] नाश्वो न घटस्तदानी न तस्य रिक्थं न हि ते विरोधः ।
इत्येवमादिप्रतिपत्तिहेतुः सम्बन्ध-सत्ता-प्रतिबन्ध इष्टः ॥२५३॥

[3]सूर्यादितेजःप्रतिबन्धरूपं तमोऽप्यभावोऽत्र मतस्तृतीयः ।
स रूपसत्ताप्रतिबन्धहेतुः रूपस्य नाशात्तु सतोऽप्यबोधः ॥२५४॥

संसर्जनं[4] त्वावरणं चतुर्विधं क्रियात्मना तत्कृतसंस्क्रियात्मना ।
ग्रन्थ्यात्मनाथो घनतात्मनाऽपि वा तेभ्यः पुनः स्यात् क्वचिदन्यथापि हि ॥२५५॥

---

[1] उत्पत्तेः प्राग् योऽयं घटपटादेः कार्यद्रव्यस्य प्रागभावो व्यवह्रियते, विनाशानन्तरं च यः प्रध्वंसाभाव आख्यायते, यस्य च अत्यन्तासतो अश्वशृङ्गादेः, अत्यन्ताभाव उच्यते— एषु त्रिषु स्थलेषु प्रभवस्थसत्ता प्रतिवन्धो बोध्यः। अनुत्पत्तौ प्रभवे कारणे स्थिता—सत्ता बलेन न गृहीता, सामग्रीसंघटनादि प्रतिवन्धादिति प्रभवस्य सत्ता प्रतिबन्धरूपोऽभावः। तत्रानुद्भूतमेव बलमसत् पदेनोच्यते। प्रध्वंसे तु घटपटादिकार्यरूपेण बलेन कारणस्था सत्ता या गृहीता आसीत्, सा विनाशकदण्डप्रहारादिप्रतिवन्धकेन प्रच्याविततेत्यत्रापि प्रभवस्थ सत्ता प्रतिवन्ध एव। कारणसत्तैवास्मद्दर्शने कार्येण गृह्यते, न तु कार्यस्य पृथक् सत्ता भवति, तथैव च बलमपि रसेनैव सत्तावत्, न तु स्वतन्त्रसत्, बलमेव च रसाश्रितं तत्तद्रूपेण परिणमतीत्युक्तमेव। तत्सर्वं स्मृत्वैवेदं बोद्धुं प्रयतनीयम्। अथ यदत्यन्तमसद् अश्वशृंगादि, तत्रापि तादृशेन शृङ्गोत्पादकेन बलेन क्वचिदपि सत्ता न गृहीतेति सोऽपि प्रभवस्थ सत्ता प्रतिबन्ध एवेति।

[2] अथ संवन्धसत्ता प्रतिवन्धं द्वितीयमभावमुदाहरति। 'इह अश्वो नास्ति' 'तदानीं घटो नासीत्' 'अस्मिन् धने तस्य रिक्थम्—भागो नास्ति' 'मम तैः सह विरोधो नास्ति' इत्यादि प्रतीतिषु सर्वत्र संवन्धसत्ता प्रतिवन्धः। क्वचित्सत एवाश्वस्य घटस्य वा केनचिद् देशेन केनचित् कालेन वा संबन्धस्य सत्ताया अभावोऽत्र बोध्यते। बलविशिष्टरसरूपमेव देशः कालो वा, तत्संवन्धिनी सत्तात्राश्वादिषु प्रतिवद्धा—इत्येवात्र प्रतिभासते। इत्येवमुदाहरणान्तरयोरप्यूह्यम्।

[3] अथान्यमप्यभावमाह—तमोऽप्यभावरूपमिति प्राग् वैशेषिकप्रक्रियायामुक्तम्। सोऽयं सूर्यादिप्रकाशस्य प्रतिवन्धरूपोऽभावः। अयमपि केनचिद् देशेन सह प्रकाशस्य संवन्धसत्ता प्रतिवन्धरूप एवेति कुतस्तृतीयो गण्यते, इति चेत् तत्र कारणमाह। अयमभावो रूपसत्ताया एवाभावे हेतुर्भवति। सूर्यादिप्रकाशसंवन्धेनैव रूपाख्यमावरणमुदेतीति प्राङ् निरूपितं स्फुटमस्माभिः। तथा च तेजः संवन्धाभावे रूपाख्यमावरणं नोत्पद्यते। ततश्च स्वयमावरणबलस्वरूपोऽयं तेजसोऽभाव आवरणबलस्य रूपस्य सत्तायाः प्रतिवन्धक इति विशेषं दर्शयितुमयं पृथग् गण्यते। यदा च रूपमेव नष्टम्—प्रतिवन्धात्पूर्वसिद्धमपि निलीनम्, तदा तत्तत्पदार्थबोधो न जायत इति।

[4] तृतीयस्य मायाबलस्य संसर्जनस्य भेदानाह। पूर्वं निरूपितेषु षट्सु भेदेषु—इदमेव परिश्रितपदेनोक्तमिति प्रतिभाति। पद्यन्तु स्पष्टार्थम्।

क्वचिद्रसेनाव्रियते[१] बलं ततो निर्लक्षणत्वान्न[४] रसोऽपि लक्ष्यते ।
क्वचिद्रसं वावृणुते बलं ततो बलेन रूपेण रसः स लक्ष्यते ॥२५६॥

या कर्मणः क्वापि रसे स्थितिर्भवेत् रसं स्वदेह[२]प्रमितं न संत्यजेत् ।
रसस्य रूपं बलमेव जायते तदेव तत्रावरणं निरुच्यते ॥२५७॥

बलं[३] रसे क्वापि यदा प्रयुज्यते तदा बलं तत्र रसेऽनुयोगिनि ।
अपूर्वमुत्पाद्य विनश्यति स्वयं सोऽपूर्वसंस्कार इहानुबध्यते ॥२५८॥

[४]यथा हि तोयाहितपेशलत्ववन्मृत्स्नासु रूपं कृतमिष्टकादिकम् ।
अपि व्यपाये जलपेशलत्वयोः कृतेर्व्यपायेऽपि च न व्यपैति तत् ॥२५९॥

हस्तोत्थया[५] नोदनया हितं तृणप्राणे ततस्तेन कृतं च तत्तृणे ।
वक्रानुवक्रत्वमिदं न हीयते तन्नोदनाप्राणबलव्यपायतः ॥२६०॥

---

[१] प्रथमोक्तां क्रियां निरूपयति । रसस्य लक्षणमर्थात्प्रकाशकं बलमेव भवति । बले आवृते रसो न लक्ष्यते । बलेन रसे आवृते तु रसो न प्रतीयत इति बलमेव बलजनितां क्रियामेव रसरूपतया जानन्ति द्रष्टारः । तदिदं क्रियारूपमावरणम् ।

[२] स्वदेहप्रमितम्—बलस्य यावानाकारः, तत्परिमित एव रसस्तेनाव्रियते तावन्तं रसं तद्बलं न परित्यजति । रसस्य परिमितिरपि बलेनैव क्रियते—इत्यसकृदुक्तम् । अन्यत्सर्वं स्पष्टार्थम् । इदं क्रियारूपावरणस्यैव विवरणम् ।

[३] अथ संस्क्रियां संस्कारापरपर्यायां द्वितीयभेदरूपां निर्वक्ति । आहितं बलं स्वयं तु नश्यति, किन्तु किञ्चित्स्वफलरूपेण नवीनं बलमुत्पाद्य नश्यति । स उत्पादितः संस्कार इत्युच्यते । मीमांसका एनमपूर्वनाम्ना बहुतरं विवृण्वन्ति । यज्ञादिभिरुत्पादितः संस्कार एव स्वर्गादि फलं ददातीति ।

[४] संस्कारस्य लौकिकान्युदाहरणान्याह—तोयेन-जलेन, आहितं यत्पेशलत्वम्-चिक्कणत्वम्, तद्वत्यां मृत्तिकायां मनुष्यप्रयत्नाहितेन बलेन इष्टका जायते । अनन्तरं जलमपि शुष्कम् तदाहितं चिक्कणत्वमपि खररूपे परिणतम्, प्रयत्नोऽपि इदानीं नास्ति, परमिष्टका या निर्मिता सा तिष्ठति । स एव बलकृतः स्थायी संस्कारः । बलमेव प्रवाहरूपतामासाद्य संस्काररूपतां गतमित्यर्थः । अन्यत्र ग्रन्थकृता जले पाचकेऽग्नौ वा निर्गतेऽपि सूत्रात्मवायुस्तत्र विभूतिसंबन्धेन इष्टकादिकं रक्षतीत्युक्तम् । तत्रायं भावः, जलाग्न्यादि स्थाने तु सूत्रात्मवायुः प्रविशति, परमिष्टकादिसंनिवेशस्तु पुरुषप्रयत्नोत्पादितस्तथैव दृश्यते—इति इष्टकादिसंनिवेशो बलजनितसंस्कार एवेति ।

[५] द्वितीयमुदाहरणमाह—यदा किञ्चित् तृणं हस्तेन वक्री क्रियते, तदा परित्यागे तद्वक्रतां परित्यज्य स्व स्वरूपं गच्छति । परं यदा तु तत् त्रोट्यते, तदा तृणप्राणे हस्तनोदनानिहितेति तत्कृतं वक्रत्वं न दूरी भवति, तत्तृणादि वक्रमेव चिरं तिष्ठति । सोऽयं बलकृतः संस्कार एव चिरस्थायी । पूर्वोदाहरणे बलमेव प्रवाहरूपेण स्थिरं जातम् । इह तु नोदनाबलेन वक्रत्वरूपमभिनवं बलमुत्पादितं स्थिरं भवतीति विशेषः । केचित्तु पूर्वत्रेष्टकादिष्वपि अपूर्वमेव संनिवेशरूपं बलं संस्कारतया मन्यन्ते ।

[१]अप्यर्थसङ्गोऽनुभवस्तदाहितं प्रज्ञासु रूपं ध्रियते तदर्थवत् ।
ततः स्मरत्येष न च व्यपैति तत् तदर्थसङ्गव्यवसायनाशतः ॥२६१॥

इत्थं यदा यत्र बलं प्रयुज्यते ध्रुवं तु संस्कार इहोपजायते ।
तयोर्व्यपाये हि बलप्रयोगयोर्नापैति संस्कार इतो रसं गतः ॥२६२॥

प्रतिक्षणोच्छित्ति[२] मतोऽस्य कर्मणो यदेकदेशादुदयक्षयक्रमः ।
यतो नवप्रौढ़विजीर्णताक्रमादेकस्य वैरूप्यमिदं हि संस्कृतिः ॥२६३॥

रसे [३]यदेकत्र बलं स्थितं भवेत् स ग्रन्थिरेतस्य ततोऽस्ति बन्धनम् ।
बलस्य येनास्ति रसेन बन्धनं तेनात्मनात्मन्वि बलं निरुच्यते ॥२६४॥

[४]मात्रा घनस्यास्य पुनस्तदन्तः संकोचवृत्तौ तु परस्परस्मिन् ।
प्रविश्यमानैरकृतावसादैः स ग्रन्थिबन्धोभवतीह खण्डैः ॥२६५॥

[५]अन्तर्मुखत्वाल्परसे बहूनां भवेद् बलानामवगाहनेन ।
परस्पराघातवशात् प्रगाढोघनत्वमन्तःस्थितिरप्रसादः ॥२६६॥

---

[१] अथाध्यात्ममुदाहरणमाह—यदा चक्षुरादिभिरिन्द्रियैः किञ्चिद् द्रव्यादि दृश्यते, तदा अनुभवेन तादृशमेव रूपं प्रज्ञायामाधीयते । अर्थसङ्गे व्यपगतेऽपि प्रज्ञायामाहितं तद्रूपं चिरं तिष्ठति । तेन भूयोभूयः स्मरणेऽपि तद्रूपं भासते । स एव प्रज्ञायां निहितः संस्कारः । अनन्तरेण पद्येन स्पस्टार्थेन उक्तस्यैवोपसंहारः । तत् संस्काररूपं बलं रसे आहितं भवति । रसमात्मतया गृह्णातीति स्थिरं भवति । अयमर्थश्चतुर्थे पादे व्यक्तीकृतः । एवमेव यज्ञादि—कर्मजनितोऽपि संस्कारो भूतात्मनि तिष्ठति, कालान्तरे इह लोकान्तरे वा सुखदुःखरूपं फलमुत्पाद्य विनश्यति । यं नैयायिका धर्माधर्मपदेन मीमांसकाश्चापूर्वपदेन व्यवहरन्ति इति भाव्यम् ।

[२] एकस्मिन् वस्तुनि नाना बलान्युद्भवन्ति विलीयन्ते च । कालक्रमेण तु तस्य गृहवस्त्रादेर्वस्तुनः नवत्वम्, वृक्षमनुष्यादेः प्रोढत्वम्, क्रमेण जीर्णत्वं च यत्प्रतीयन्ते सोऽपि बलकृतः संस्कार एव । बलमेव नवे वस्तुनि तादृशं संस्कारमादधाति, येन तत्र पुराणत्वं प्रतीयते । यावन्ति च बलानि यत्र क्रमेण आयातानि निर्गतानि च, तावदेव पुराणत्वं तत्र भासते । पूर्वं निर्गमनप्रवेशनकृतं नवपुराणत्वं निरूपितम् । तन्निर्गमनप्रवेशनाद्यपि बलस्यैवेति बलकृतसंस्काररूपतात्रोक्ता । तदुपोद्बलकमिदं न ततो विरुद्धम् ।

[३] ग्रन्थिरूपं सर्जनस्य तृतीयं भेदमाह—रसे बलस्य स्थिरतया ग्रन्थिर्भवति, बहूनां बलानां स्थिराणां परस्परानुप्रवेश एव ग्रन्थिः । यः (उलझन) इति भाषायामुच्यते । ग्रन्थिना तु बन्धनं भवति । येन बलस्य बन्धनम्, स रस आत्मा, तद्बलं चात्मन्वि—इत्युच्यते ।

[४] एवं ग्रन्थिना यदेकं घनरूपं जातम्, तत्र संकोचवृत्त्या प्रविष्टैर्बलैरनेकखण्डरूपतापि घनस्य जायते ।

[५] अल्पप्रदेशावगाहिनि रसे अन्तर्मुखानि यदि तानि संकोचवृत्त्या प्रविष्टानि रसाभिमुखानि बलानि नष्टानि न स्युः । रसे प्रविशतां बलानामवगाहनेन प्रवेशेन, परस्पराघातवशाद्

तदित्थमेता इह शक्तयो मता इच्छाक्रियाथाऽऽवरणं च पूरूषे ।
शक्तित्रयी भोगविशेष एष तु प्रवृश्यते यज्जगदेतदस्ति हि ॥२६७॥

॥ इति परविद्यायां बलप्रतिपत्तिविभागः ॥

---

घनत्वं जायते—इति चतुर्थं घनत्वं निरुक्तम् । परस्पराघातवशान्निविडत्वमनुभवसिद्धमिति प्राङन्यरूपयाम । अनेनात्मनः प्रसाद आव्रियत इति विमनस्कता भवति ।

[1] प्रकरणोपसंहारः । इहाशनाया इच्छापदेनोक्ता । एतानीच्छाविक्षेपावरणान्येव शक्ते रूपाणि । इयं शक्तित्रयीत्युच्यते । अनयैवात्मनो भोगः साध्यते । सर्वं जगच्चै—तद्रूपमेवेति । आगमशास्त्रे तु शक्तेरिच्छाज्ञानक्रियाख्यास्त्रयः परिणामा उच्यन्ते । इहोक्ताशनाया इच्छारूपा, विक्षेपस्तु क्रियारूप इति व्याख्यातमेव । ज्ञानमिह अहंकारगतेषु गुणभेदेषु परिगणितम् । क्रियापि अहंकारगतेषु गुणेषु परिगणिता । तत्र विक्षेपोऽत्रोक्तः कारणरूपः, अहंकारगुणेषु प्रतिपाद्या क्रिया तु कर्मरूपा । तत्रोक्तं ज्ञानमपि वृत्त्यात्मकं कार्यरूपमेव । मुख्यं ज्ञानं तु कारणरूपं पुरुषरूपमेवेति नात्र पृथक् परिगणितमिति । सोऽयं बलप्रतिपत्तिभागोऽत्र पूर्णतां गतः ।

# अथ [1]सांख्याभासाः

## (३४) सत्त्वप्राधान्याधिकरणम्

[2]केचित्तु पुनस्त्रीणि बलानि तानि संचक्षते सत्त्वरजस्तमांसि ।
तत्र प्रभूतानि विदां मतानि प्रचक्ष्महे तानि यथावगाहम् ॥१॥

[3]सत्त्वं हि शक्तिः पुरुषस्य नित्या सत्त्वस्य दोषौ तु रजस्तमश्च ।
विशुद्धचारित्र्यवशात् प्रसीदेत् सत्त्वं तदेषा चरकस्य दृष्टिः ॥२॥

शान्तं स्वरूपं पुरुषस्य सत्त्वं तदव्ययं सर्वविकारशून्यम् ।
नित्यं हि तद्रूपममुष्य मुख्यं तस्यैव दोषात् क्रमते विकारः ॥३॥

---

[1] रसप्राधान्ये ब्रह्म, बलप्राधान्ये तु शक्तिः । तत्र ब्रह्मप्रतिपादकं शास्त्रं वेदान्तनाम्ना, शक्तिप्रतिपादिकन्तु सांख्यनाम्ना व्यवह्रियत इति प्रागुक्तम् । बलप्राधान्ये च सत्त्वरजस्तमांसि त्रीणि रूपाणि भवन्ति, तानि प्रकृतावव्यक्तानि, महति च अशनायाविक्षेपावरणनामभिः ख्यातानीति निरूप्य अशनायादीनां स्वरूपविवरणं विस्तरेण पूर्वस्मिन्नधिकारे कृतम् । सोऽयं वैदिकः सिद्धान्तः प्रदर्शितः । कापिलादिमतं च संक्षेपेण मतभेदाधिकरणे प्रदर्शितम् । इदानीं सत्त्वरजस्तमसां स्वरूपविषये प्राधान्याप्राधान्यविषये च ये विभिन्नानामाचार्याणां मतभेदाः, त इह निरूप्यन्ते । वैदिकीं सिद्धान्तप्रक्रियां पूर्णतया नानुगच्छन्तीत्यतस्ते सांख्याभासपदेन ग्रन्थकृता व्यवहृताः । एतेऽपि कंचिच्छ्रुतीनामिवांशमुपादाय तस्यैव प्राधान्यमभिमत्य प्रवर्तन्त इति तेषां मतोपन्यासोऽपि क्रियते । श्रुतीनां पौर्वापर्यं मीमांसाप्रक्रियया निध्याय यः सिद्धान्तः तस्य निष्कर्षस्तु प्राक् प्रदर्शित एवेति ।

[2] सत्त्वरजस्तमांसि यानि रसबलसंवलितानि बलप्रधानानि रूपाणि, तद्विषये ये मतभेदाः ते निरूप्यन्त इत्याशयः ।

[3] तत्र केचिन्मुख्यां शक्तिं सत्त्वमेव वदन्ति, रजस्तमसी तु सत्त्वस्य दोषरूपे । मनुष्यस्य विशुद्धेन चरित्रेण दोषयोरपगमे सत्त्वं प्रसीदतीति चरकाचार्यो मन्यते । श्रीभागवते दशमस्कन्धे गर्भस्तुतौ "सत्त्वं न चेद् धातरिदं निजं भवेत्" ति पद्ये प्रकृत्यर्थक एव सत्त्व शब्दः प्रयुक्तः । आगमिकाश्च कृतेर्मायातश्चापि परां महामायां सत्त्वशब्देनाभिदधति । "सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ?" (भ० गी० १७ अ० ३ श्लो०) इति भगवद्गीतायामपि प्रकृत्यर्थक एव सत्त्वशब्दः प्रयुक्तः । सत्त्वस्य प्रधानत्वविवक्षयैव सर्वमिदं निर्वोढुं शक्यमिति ।

[4] अथ मतान्तरमाह—सत्त्वं पुरुषस्य आत्मनः स्वरूपमेव । तच्च शान्तम्—सर्वोपद्रवशून्यम् । तदेव अव्ययमुच्यते । इदं नित्यं मुख्यमात्मनो रूपम् । दोषात्तु तत्र विकारः प्रवर्तत इति । अत्र मते सत्त्वपदेन पुरुष एवोच्यते, तथाहि विशेषणाच्च (१।२।१२) इति ब्रह्मसूत्रव्याख्यायां श्रीशङ्कराचार्यपादैः पैङ्गिरहस्य ब्राह्मणमुद्धृतम् । तद्धि "द्वा सुपर्णा सयुजः सखाया" त्यादि मन्त्र व्याख्यापरम्, तत्र "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वम्, अनश्नन्नन्यो अभिचाकशीतीति अनश्नन्नन्योभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ" इति । सत्व-

[१]सत्त्वं हि खण्डात्मकमस्ति तस्मादल्पं तदिच्छाविभवाय तु स्यात् ।
तदर्थमीहैव रजः क्रिया सा फलं क्रिया या उदियात् तमस्तत् ॥४॥

[२]तमो हि यत्नात् क्रमतो रजः स्याद्रजोऽपि यत्नाद्भवतीह सत्त्वम् ।
विशुद्धसत्त्वस्य मतोऽपवर्गः सतो विवेकान्मतमेतदेकम् ॥५॥

## (३५) अपरं सत्त्वप्राधान्याधिकरणम्

[३]ज्योतिर्मयः पूर्णरसोऽस्ति तस्य तज्ज्योतिर्हि विज्ञानमिदं प्रतीयते ।
पूर्णत्वमानन्द इतीह कथ्यते यदस्ति सन्नेव ततो निरुच्यते ॥६॥

---

शब्दो जीवः, क्षेत्रज्ञशब्दः परमात्मेति च श्रुतेराशय आचार्यपादैः स्पष्टीकृतः। अग्रे तन्मतं खण्डितमित्यन्यदेत्। सत्वशब्दस्य पुरुषवाचकत्वमपि केचिदिच्छन्तीत्येतावन्मात्रमस्माकं प्रतिपाद्यम्। तस्य पुरुषस्य पूर्णप्रतिविम्बग्रहीत्वान्मुख्या शक्तिरपि सत्त्वपदेनोच्यत इति भावः। सर्गश्च विकारो दोषजन्य इति। पुरुषरूपत्वात्सत्त्वस्य मुख्यत्वं सिद्धम्।

[१] अथ मतान्तरमुच्यते—सत्त्वं शक्तिरूपं खण्डात्मकम्—सावयवमित्यर्थः। सावयवे तु अल्पता महत्ता वा भवत्येव। तत्र यदल्पं खण्डम्, तत्र विभवाय महत्त्वप्राप्तये इच्छा स्यादिति स्वाभाविकम्। इच्छानुसारिणी च या ईहा—चेष्टा, सा रज इत्युच्यते। तस्मात्सत्त्वमिच्छावृत्तिकम्, रजस्तु क्रियावृत्तिकम्। तया क्रियया यत्फलं प्राप्यते, तत् तम इत्युच्यते। प्राप्तं हि फलमर्थरूपमेव भवति, अर्थ एव चावरकत्वात् तम इति।

[२] पूर्वपद्योक्तरीत्या यत्नपूर्वकं प्रचलतो रजसः तमो जायते। व्यापाररूपं रजस्तु इच्छारूपात् सत्त्वाज्जायत इति सत्त्वमेव मुख्यमत्रापि मते। यदा तु सत्त्वं महत् पूर्णं भवति, तदा इच्छा न जायते। ततश्च सतः—सत्त्वस्य विवेकः—रजस्तमोभ्यां पार्थक्यं भवति। स एवापवर्गो मुक्तिरित्युच्यते।

[३] अथ प्रकारान्तरेण सत्त्वप्राधान्यं मतान्तरेणाह—'ज्योतिर्मयः पूर्णरसः अस्ति' इति शास्त्रसारभूतं वाक्यम्। अत्र ज्योरिति ज्ञानमुच्यते, पूर्णत्वमानन्दः "यो वै भूमा तत्सुखम्" (छान्दोग्यो.) इति श्रुत्युक्तेः। अत एव स मूले रसपदेनानन्दपर्यायेणोक्तः। अस्ति इति तु सत्ता। तदित्थं सत्ताविज्ञानान्दाः पूर्वोक्तवाक्ये निर्दिष्टाः। सत्ता च सत्त्वं चेत्यभिन्नार्थौ शब्दौ। अनयोश्चार्थः सतो भावः—सतः शक्तिरिति यावत्। सत्पदेन रस उच्यते 'सदेव सोम्येदमग्र आसीद्' इत्यादि श्रुतिषु तेन रसस्य शक्तिः सत्ता, सत्त्वं वेति शब्दमर्यादया सिद्धचति। शक्तिश्च शक्तिमतो न भिद्यत इति सत्त्वस्य रसरूपतैवायाति। किं च शक्तिः प्रकृतिरित्युच्यते। प्रकृतिश्च स्वभावः। स्वस्य भावः स्वभावः। भावश्च सत्ता। तेनापि स्वसत्तैव सत्त्वमिति सिद्धचति। तदित्थं सत्त्वं विना रसस्य स्वरूपमेव न सिद्धचेत्। पूर्वं सत्ता, तत एव तत्रान्यत् किञ्चिद्भवति। सिद्धे रसस्वरूप एव तत्र वलसंवन्धोऽपि भवेत्। वलेनैव चास्य भोगोऽपि सिद्धचति। स्वसत्तैव यदि न भवेत्, तर्हि कथं परेण संवन्धः कथं वा भोगः। विना भोगं कथमानन्द इत्यानन्देऽपि सत्त्वमेव हेतुः। विना सत्त्वं च भानमपि कथमिति भानं ज्योतिः पदेनोक्तं विज्ञानमपि सत्त्वायत्तमेव। इत्थं सत्त्वस्य रसेनाभिन्नतैव सिद्धचति इति पद्यत्रयस्याशयः।

सतो हि सत्त्वं तदिदं त्रयं मतं सत्ता च विज्ञानमथो सुखं च यत् ।
शक्तिर्मता शक्तिमतो रसस्यसेतीत्थं ततः सत्त्वमभिन्नवद्रसे ॥७॥

सत्त्वं हि तस्य प्रकृतिः सतो मता सत्वोपनीता द्विसतोऽस्य भक्तयः ।
सतः स्वभावोऽस्य विनाऽमुना रसः किं स्यात्किमुच्येत न भात्यलक्षणः ॥८॥

[१]अथाशनाया तु ततोऽतिरिच्यते तदन्वयेन व्यतिरेकतोऽपि वा ।
रसे तु भावोऽस्ति विपर्ययः क्वचित् ततोऽन्यदन्यत्वमनित्यमुद्भवेत् ॥९॥

[२]तदित्थमुक्थं त्रयमेतदुक्तं ब्रह्मास्य शक्तिश्च गुणोऽशनाया ।
शक्तिस्तु नित्यैव गुणस्तु दोषोऽत्रागन्तुको न्यार्थतयास्ति नास्ति ॥१०॥

[३]तद् ब्रह्म निर्भागमखण्डमक्रियं निर्विक्रियं व्यापकमेकमिष्यते ।
सत्त्वं सभागं त्रिविधं च सक्रियं विकुर्वदङ्गप्रतिमं बहुक्रमम् ॥११॥

---

[१] पूर्वोक्तरीत्या शक्तिशक्तिमतोरभेदः सिद्धः । अशनाया पदोक्तेच्छाद्यास्तु गुणाः । गुणास्तु गुणिनो भिन्ना इत्यन्वयव्यतिरेकाभ्यां सिद्धयति । गुणिनि कदाचिदिच्छादिगुण-प्रादुर्भावोऽन्वयः, सत्यपि गुणिन्यात्मनि कदाचिदिच्छादिगुणाभावश्च व्यतिरेकः । यदि गुणा अप्यभिन्नाः स्युः, तर्हि गुणिनि सत्यपि गुणाभावः कथं घटेत । तस्माद् गुणिनो नित्यत्वेऽपि अशनायादीनामनित्यत्वं भेदसाधकमित्याशयः ।

[२] ततश्च उक्थम्-जगन्मूलं त्रयं सिद्धम्—रसः, शक्तिः, अशनाया चेति । तत्र शक्तिर-भिन्नरूपा नित्या । अशनाया तु कदाचिदुद्भवतीति अनित्यत्वेन ततो भिन्ना आगन्तुकरूपा । भिन्नत्वेनैव तस्या आगन्तुकत्वम् । सा अस्तिनास्तिरूपा । कदाचिद्भवति, कदाचिन्न भवतीति ।

[३] इत्थं शक्तेरभिन्नत्वं प्रतिपादितम् । अधुना तु तस्या अपि भिन्नत्वमुच्यते । पूर्वार्द्धेन पूर्वमनेकश उक्तानि रसरूपस्य ब्रह्मणः तटस्थलक्षणानि अनूदितानि । एवं विधे ब्रह्मणि आगन्तुका गुणाः कथं संभवेयुः । निर्भागे अकर्मणि अक्रिये अविक्रिये च गुणाभ्युपग-मानुपपत्तेः । गुणः कदाचिद्भवति, कदाचिन्न भवतीति सोऽयमागन्तुकरूपो विकारः अविक्रिये कथं भवेत् । कदाचिद्भवत एव विकारसंज्ञत्वात् । क्रियां नाम व्यापारं विना च कथमा-गन्तुकस्योत्पत्तिरिति अक्रियत्वमपि विरुद्धं स्यात् । निर्भागे चापि आगन्तुकपदार्थोत्पत्तिर-संभाव्यैव, तत्रान्यस्य प्रवेशासंभवात् । तस्माद् गुणः शक्त्याश्रया एव मन्तव्याः । शक्तिरपि यदि ब्रह्मवदक्रिया निर्विकारा विभ्वी च भवेत्, तर्हि तत्रापि ब्रह्मवदेव न गुणप्रादुर्भावसंभवः । तस्माच्छक्तिस्तद्विपरीत धर्मिका मन्तव्या । ननु तर्हि विपरीतधर्मणोरैक्यं कथमिति चेद् भेदाभेदावेव मन्तव्यौ शक्तिशक्तिमतोः । अविभागादभेदः, विरुद्धधर्मकत्वात्तु भेद इति । सांख्या एवं भेदाभेदावेवोपगच्छन्ति, वेदान्तप्रक्रियायां तु भेदाभेदयोरेकत्रासंभवादनिर्वचनीयता-ख्यायते । यथाकथंचिदप्यस्तु विरुद्धधर्मकत्वं तु मन्तव्यमेव, अन्यथा शक्तिकल्पनैव निष्प्र-योजना स्यात् । शक्तेस्ते विरुद्धा धर्माः पद्यस्योत्तरार्द्धे विवृताः । त्रिभागम् सत्त्वरजस्तमोभिः त्र्यवयवम् । एतेन अखण्डताया विरोध उक्तः । विकुर्वदङ्गप्रतिमम्—विकुर्वन्ति अङ्गानि प्रतिमा—स्वरूपं यस्येत्यर्थः । शक्तेरवयवभूता गुणाः प्रत्येकमपि विकुर्वाणाः—परिवर्तनशीला इति भावः । एतेन अविक्रियताया विरोध उक्तः ।

[१]अथाशनाया क्षणिकी स्वलक्षणा दुःखं च शून्यं च निरुच्यते क्रिया ।
क्रिया तु सत्त्वे तदु सत्त्वमस्मिन् ब्रह्मण्यमीभिः सकलं जगद्भवेत् ॥१२॥

ब्रह्मैव सर्वस्य मता प्रतिष्ठा शक्तिर्हि यत्र प्रतितिष्ठतीयम् ।
स्याच्छक्तिरस्य प्रकृतिश्च नानाभावैर्विपर्येत्यशनायया सा ॥१३॥

[२]ब्रह्मातिरेकेण न शक्तिरेषोदियाद्विलीयेत समानरूपा ।
आकस्मिकी चेदसती कथं सा शक्येत चोत्पादयितुं प्रयत्नात् ॥१४॥

खे[३] वायुवद्व्यक्तिमसावुपेयादव्यक्तभूताऽपि रसे सतीयम् ।
प्रतिक्षणान्यासु न चैकता स्यान्न चेद् ध्रुवं ब्रह्म तदाश्रयः स्यात् ॥१५॥

[४]सत्वातिरेकेण च निष्क्रियत्वात् क्रियाशनाया न रसे क्रमेत् ।
नित्याचले तत्र विकुण्ठिताया न स्यात्क्रियायाः प्रसरो विसृष्टौ ॥१६॥

---

[१] तृतीयाया गुणरूपाया अशनायायाः स्वरूपभूता धर्मा उच्यन्ते—स्वलक्षणा—स्वमेव लक्षणं यस्याः तादृशी। अन्यत्र तल्लक्षणं नोपलभ्यते। विभिन्नानामिच्छानां परस्परं सादृश्यमपि नास्तीत्यर्थः। सैव इच्छारूपाशनाया क्रियाप्युच्यते। सा मानसी क्रिया, तया च शरीरे चेष्टारूपा क्रिया जन्यत इति। सा क्रिया रूपाशनाया सत्त्वे—शक्तौ तिष्ठति, तदाश्रयेत्यर्थः। शक्तिस्तु ब्रह्माश्रिता। एभिस्त्रिभिर्मूलतत्त्वैर्जगदुत्पद्यत इत्यर्थः। अनया अशनायया एव शक्तिर्विपर्येति परिणमति। इच्छया शक्तौ परिणाम उत्पाद्यत इत्युत्तर-पद्येनोक्तम्।

[२] ब्रयमपि स्वीकर्तुमावश्यकमिति प्रतिपादयति। आश्रयभूतं ब्रह्म यदि न स्यात्, तर्हि शक्तिः कुत्र प्रादुर्भवेत्, कुत्र च तिष्ठेत्। कुत्र वा लयं गच्छेत्। समानरूपा च पुनः कुत्र प्रादुर्भवेत्। यदि इयमपि अशनायावदाकस्मिकी आगन्तुकरूपेण उत्पन्ना मन्येत, तर्हि पूर्वमसती, प्रयत्नेन विना कथमुत्पादयितुं शक्यते। नहि अनित्यस्योत्पत्तिर्विना चेतनप्रयत्नं दृश्यते, अविक्रिये निर्गुणे च ब्रह्मणि न प्रयत्नः संभवति।

[३] पूर्वोक्तानुपपत्त्या इदमेव मन्तव्यं भवति, यथा आकाशे वायुः सदा तिष्ठति, कदाचिदव्यक्तः, कदाचिच्च व्यक्तिमुपैति। तथैव रसे शक्तिः कदाचिदव्यक्ता सुप्ता तिष्ठति, कदाचिद् व्यक्तीभूय जगदुत्पादनादिकार्यं करोति। ततश्च यत्र सुप्ता, यत्र च जागर्ति, स तस्या आश्रयो ब्रह्मपदाभिधेयोऽवश्यं मन्तव्य इति। यदि कश्चिद्वदेत् शक्तिरेवैकरूपा सर्वोत्पादिका मन्यताम्—किं ब्रह्मणेति, तस्योत्तरमाह। शक्तिर्या प्रतिक्षणमन्यादृशी स्फुटं दृश्यते—कदाचिदुत्पादिका, कदाचिद्विनाशिका। कदाचिन्मेघाद्या उद्भवन्ति, कदाचि-द्विलीयन्ते। तेन कदाचिन्मेघोत्पादिका शक्तिर्जागर्ति, यदा तु नोद्भवन्ति, तदा सा सुप्ता। कदाचिच्च विलयनकारिणी शक्तिर्जागर्ति, एवं विरुद्धा धर्मा एकस्यां कथं भवेयुः। प्रतिक्षण-परिवर्तनशीला च स्थिरा कथं स्यात्, यदि ध्रुवः तस्या आश्रयो न मन्येत। तस्माच्छक्त्या-श्रयो ब्रह्म ध्रुवेऽवश्यं स्वीकार्यः।

[४] यदि शक्तिर्न स्वीक्रियते, तर्हि निष्क्रिये नित्ये अचले ब्रह्मणि इच्छाद्या गुणाः कथं प्रादुर्भवेयुः। विस्तरेण व्याख्यातमिदमस्माभिरनुपदं पूर्वम्।

[१]शक्त्या कदाचित्क्रियते विसृष्टिः कदाचिदेषा भवतीह सुप्ता।
सोऽयं विशेषो न भवेत्प्रतीतः क्रिया तृतीया यदि नात्र हेतुः ॥१७॥

[२]तस्मादवश्यं त्रितयं तदुक्यं पृथक् प्रतीयादिति केचिदाहुः।
ब्रह्मेदमन्यत् किल शक्तिरन्या दोषस्ततोऽन्यो विकृतस्वरूपः ॥१८॥

ब्रह्मास्ति नित्यध्रुवमत्र सत्त्वं नित्यं क्रिया त्वत्र भवेदनित्या।
आगन्तुकी तेन मतः स दोषः स एव [३]सत्वावरणात्तमः स्यात् ॥१९॥

ब्रह्मैतदस्त्यायतनं च शक्तिर्बीजं क्रिया त्वत्र निमित्तमात्रम्।
[४]स्थानावगाही परिणाम उक्तशक्त्या क्रियासंघनियोजितायाः ॥२०॥

द्वे ब्रह्मशक्ती भवतस्तु विद्ये क्रिया त्वविद्या प्रथिताशनाया।
द्वे कर्मणी शक्तिरथाशनाया ब्रह्मत्वं कर्मेति[५] सधर्मतोक्ता ॥२१॥

---

[१] अथ तृतीया अशनायापदवाच्या क्रिया किमर्थं स्वीक्रियते इति चेत्, तत्रोच्यते। शक्तेः कार्यं तत्तत्पदार्थोत्पत्त्यादि कृत्स्न जगदुत्पत्त्यादि वा कदाचिद्भवति, कदाचिन्न भवति। तेन शक्तिः कदाचित्सुप्ता, कदाचित्प्रबुद्धा—इति मन्तव्यं स्यात्। ताविमौ स्वापप्रबोधौ आगन्तुकक्रियया विना कथं संभवेताम्। क्रियैव स्वापः प्रबोधश्च। तस्मात् तृतीया क्रियापि मन्तव्यैव।

[२] पद्यद्वयं स्पष्टार्थं पूर्वोक्तस्यैवोपसंहारः।

[३] अनेनेदमुच्यते—उक्ते त्रये ब्रह्माश्रिता शक्तिः सत्त्वपदेनोच्यते, क्रिया तु रजः पदेन। सैव क्रिया यदा सत्त्वरूपां शक्तिमावृणोति, तदा तम इत्यपि सैवोच्यते। तस्माद्रजस्तमश्चैकस्या एव क्रियायाः कार्यभेदन द्वे रूपे। एकं कार्यजनने शक्तिसहकारि, अपरं च शक्तेरावरकमिति।

[४] इतः पूर्वं पद्यार्द्धं स्पष्टार्थम्। अनेन तु अर्द्धेन इदमुच्यते। योऽयं जलपृथिव्यादि-रूपः प्रपञ्चः स्थानावगाही—स्थानावरोधको रूपस्पर्शादिमान् प्रतीयते, स क्रियासमुदायेन नियोजितायाः शक्तेरेव परिणामः। क्रिया रजोरूपाः खण्डखण्डात्मिका अनन्ताः, ताभिः शक्तिर्नियोज्यते, परिणता क्रियते, तदैव शक्तिर्भूतभौतिकप्रपञ्चरूपेण परिणमतीति।

[५] द्वयोर्द्वयोः सधर्मता एकधर्माश्रयत्वरूपं सादृश्यं पूर्ववाक्यैरुक्तम्। ब्रह्मणः शक्तेश्च विद्यास्वरूपेण सादृश्यम्, क्रिया तु अविद्या—इति ततोऽत्र द्वये वैधर्म्यम्। शक्तौ क्रियायां च कर्मत्वं सादृश्यम्। शक्तिरपि परिणामित्वात्कर्मरूपैव—अर्थाद्बलरूपैव। क्रियापि च बलजन्येति कारणरूपं नातिक्राम्यति। ब्रह्मत्वकर्म क्रियाविरुद्धमिति तदपेक्षया द्वयेऽत्र वैधर्म्यम्। शक्तौ विद्यात्वेन ब्रह्मसादृश्यम्, परिणामित्वेन तु क्रियासादृश्यमित्यर्थः। आगमशास्त्रे द्वैतप्रक्रियायां शिवः, शक्तिः, बिन्दुरिति पदार्थत्रयं मन्यते। तत्र शिवः शक्तिश्च चिद्रूपे, बिन्दुस्त्वचिद्रूप इति तद्रीत्यैवात्र शक्तेरपि विद्यात्वमुक्तम्। तदनुसार्येवाधिकरणमिदम्। इत्थं शक्तिरूपत्वात्सत्त्वस्य प्राधान्यं सिद्धम्। रजस्तमसी तु आगन्तुके दोषरूपे इति गौणे। ग्रन्थोक्ते सिद्धान्ते तु उक्तानि श्रुतिस्मृतिप्रमाणानि अशनाया विशिष्टस्य रसस्यैव बोधकानि युक्तयश्चापि अशनायायामेवोपपद्यन्ते इत्येतेषां सांख्याभासत्वमुक्तम्, वैदिकप्रक्रियाविरोधादिति।

## (३६) रजः प्राधान्याधिकरणम्

अथो [१]रजः शक्तिरमुष्य नित्या सत्त्वं तमश्चेति रजोविवर्तौ ।
घोरस्वरूपाद्रजसो विवेको विमोक इत्यस्ति मतं परेषाम् ॥२२॥

[२]यः संचरो वा प्रतिसंचरो वा संकोचरूपोऽथ विकाशरूपः ।
प्रवृत्तिकर्माथ निवृत्तिकर्म प्रवाह एष द्विविधः स घोरः ॥२३॥

[३]प्रवाहयोरस्ति तयोस्तु या या काष्ठा परा तत्र गतेर्विरामः ।
तत्रैव संकोचविकाशयोः स्यादात्यन्तिकत्वेन तमश्च सत्त्वम् ॥२४॥

प्रवृत्तिधारा चरमस्थितौ स्यात् क्षोभे रसस्यावरणं प्रकर्षात् ।
निवृत्तिधाराचरमस्थितौ स्याच्छमप्रकर्षादयते विकाशः ॥२५॥

सत्त्वं यया कर्मनिवृत्तिकाष्ठा प्रवृत्तिकाष्ठा च तया तमः स्यात् ।
या[४] काष्ठयोरन्तरतस्तु वृत्तिः स्यात्तद्रजश्चेति मतं तृतीयम् ॥२६॥

## (३७) अपरं रजःप्राधान्याधिकरणम्—

[५]अथो रजः शक्तिरमुष्य पूर्वा सत्त्वं तमश्चेति रजोविवर्तौ ।
रजः क्रिया सा जनयत्यपूर्वं किट्टं प्रसादं च ततो व्यपैति ॥२७॥

---

[१] अथ रजःप्राधान्यवादिनां मतमाह—क्रियारूपं रज एव मुख्या शक्तिः, शक्तेः क्रियारूपताया अत्र ग्रन्थे वहुतरं व्याख्याततत्वात् । सत्त्वं तमश्च रजस एव विवर्तौ अन्यरूपेण दृश्यौ । रज एव सत्त्वरूपेण तमोरूपेण च प्रतीयत इत्यर्थः । तदिदं रजो घोरस्वरूपम्—अनर्थोत्पादकम् । अस्माद् विवेकेनात्मनः पृथक्करणमेव विमोकः—मोक्ष इति ।

[२] पूर्वोक्तमेवोपपादयति—रजोनाम क्रिया, सा च द्विविधा, संचरः, प्रतिसंचरश्चेति । इमावेव संकोचविकासशब्दाभ्यामुच्येते । इमामेव च प्रवृत्तिकर्म, निवृत्तिकर्मेति च कथ्येते । संकोचविकासशब्दावत्रात्मापेक्षया प्रयुज्येते । प्रवृत्तिकर्मणा आत्मनो ज्ञानरूपस्य संकोचः—अर्थाद् अल्पत्वाभिमानो जायते, निवृत्तिकर्मणा तु विकासः—स्वस्वरूपाभिमुख्यम् । वस्तुतस्तु द्विविधमपीदं कर्म घोररूपम् आत्मावरकमेव । स्वच्छोऽपि काचः प्रकाशस्वरूपं किञ्चिदावृणोत्येव । तस्मादस्मादपि विवेक आवश्यक इति ।

[३] अथ सत्त्वतमोद्वयरूपता रजसः कथं जायत इति विवृणोति—प्रवृत्तिनिवृत्ति—कर्मणोरुभयोरपि या पराकाष्ठा तत्र गतेर्विरामो दृष्टिपथमायाति । विद्युद्व्यजनादेरत्यन्तं भ्रमणे तत्र द्रष्ट्रा स्थिरतैव प्रतीयत इति प्रवृत्तेः पराकाष्ठापि गतिविरामरूपा । प्रवृत्तिनिवृत्त्योरात्यन्तिकत्वे च संकोचविकासयोरप्यात्यन्तिकत्वं जायते । प्रवृत्तेः परस्यां कष्ठायां संकोचस्यात्यन्तिकत्वम्—अर्थात् सर्वरूपेणात्मन आवरणम् । निवृत्तेः परस्यां काष्ठायान्तु विकासस्यात्यन्तिकत्वम्—सर्वथावरणाभाव इत्यर्थः । तत्र प्रवृत्तेः पराकाष्ठा तमः, निवृत्तेस्तु पराकाष्ठा सत्त्वमिति । उत्तरेण सार्द्धेन पद्येनैतदेव स्पष्टीकृतम् ।

[४] यस्य काष्ठा रूपे सत्त्वतमसी, तद्रजो मुख्यमिति रजसो मुख्यत्वं स्थापितम् ।

[५] अथ प्रकारान्तरेण रजसः प्राधान्यमाह—रजः शक्तिरूपम् क्रियात्वादिति पूर्वमुक्तमेव ।

मलं हि किट्टं [१]सरसः प्रसादः स्थूलं मलं सूक्ष्मगतिः प्रसादः ।
मलेन तत्राव्रियते रसोऽसौ स्वं रूपमायाति रसः प्रसादात् ॥२८॥

[२]यतो रसे किंचिदपूर्वरूपं रसाद्विरुद्धं ध्रियते मले तत् ।
मलस्य तस्यैव यथा यथा स्यादस्मिन्समुच्छित्तिरसौ प्रसादः ॥२९॥

[३]मलं हि तत्रावरकं तमः स्यात् सतः प्रसादं कथयन्ति सत्त्वम् ।
भवत्युदर्कद्वयमत्र कुर्वद्रूपात् तृतीयात् तदिदं रजः स्यात् ॥३०॥

[४]सर्वं हि सत्यं तदु सच्च यच्च स्थितं हि सत् स्याद् गतिमत्तु यत् स्यात् ।
यत्त्वेकरूपं गतिमत् तदुक्तं सदन्यदात्मेति मतं तुरीयम् ॥३१॥

## (३८) तमः प्राधान्याधिकरणम्

[५]अथो तमः शक्तिरमुष्य नित्या सत्त्वं रजश्चेति तमोविवर्तौ ।
सर्वं यदव्यक्तमिदं तदावावव्यक्तमव्यक्तमथान्ततः स्यात् ॥३२॥

---

तदेव सत्त्वरूपेण तमोरूपेण च प्रतीयत इति ते तस्य विवर्तरूपे । अपरिणमदेव यदन्यथा दृश्यते, तद् विवर्तसंज्ञमिति प्रागुक्तम् । कथं तद्रूपताप्रतीतिरित्याह । रजो हि क्रिया, क्रिया च अपूर्वं नवम्, किट्टं प्रसादं च जनयति, ततः स्वयं व्यपैति विलीयते । यथा चिरस्थिते लोहादौ स्थितिक्रियैव किट्टं जनयति, घर्षणक्रिया तु प्रसादं जनयतीत्याद्यूह्यम् ।

[१] प्रसादः सरसः रसेन सह वर्तते, अर्थादन्तःस्थितं रसं प्रकाशयति, स्वच्छो दर्पण इवान्तःस्थितं दीपप्रकाशमिति स्पष्टार्थमन्यत् ।

[२] मलप्रसादयोः स्वरूपप्रदर्शनम् । शुद्धे रसे यत्किञ्चिदपूर्वं ध्रियते, तन्मलमुच्यते । तस्य मलस्य निराकरणमेव च प्रसाद इति ।

[३] आवरणात् तमो मलमुच्यते । सत्त्वं तु प्रसादः, तमोरूप मलनिवारकत्वात् सतो रसस्य प्रकाशकत्वादेव च तत् सत्त्वमुच्यते । प्रकाश्य तद्रूपतामेवानुभवतीति सतो धर्मतया सत्त्वम् । इदं द्वयमपि फलं यज्जनयति, तत् तृतीयं रज एव मुख्यम् जनकत्वादिति ।

[४] सर्वमपि पदार्थजातं सत्यमित्युच्यते । सत्यशब्दे द्वौ विभागौ—सत्-य इति । तत्र सत्पदेन सत्तावोधकेन स्थितिरुच्यते, य पदेन तु या धातोर्निष्पन्नेन गतिर्बोध्यते । तत् सत्य-पदेन सर्वत्र प्रयुज्यमानेन सर्वे पदार्थाः गतिस्थितिशीला इति ज्ञायते । गतिस्थितिशीलता च सर्वत्रासकृदुपपादिता, परिवर्तनशीलत्वाद्गतिमत् सर्वं दृश्यम्, तदेवेदमिति प्रत्यभिज्ञानाच्च स्थितिमदिति । अपरिवर्तनशील आत्मा तु 'सत्' इत्येवोच्यते, तत्र गतिविरहात् । स हि गति-स्थितिभ्यामुभाभ्यामप्यतिरिक्त इति गुणेभ्यः पृथगुच्यते । सत्यां गतौ तन्निवृत्त्या स्थिति-रित्युच्यते, यत्र तु कदाचिदपि गतेः संभव एव न, स स्थितशीलादपि विलक्षण एवेति । अनेन गतेः सर्वत्र व्यापकत्वात् तत्कारणभूतस्य रजसः प्राधान्यं प्रकारान्तरेणापि सूचितम् । अस्मिन् ग्रन्थे तु इदं बलरूपेणैव व्याख्यातमिति प्रक्रियाभेदादस्यापि मतस्य सांख्यभासेषु गणनम् ।

[५] अथ तमःप्राधान्यवादिनां मतमाह—तम एव मुख्या शक्तिः, रजः सत्त्वं च तद्विवर्त-

अव्यक्तरेवास्य तमस्तदेषां परायणं तत् प्रभवो यतश्च ।
तस्मात्तमो मूलममुष्य शक्तिस्ततो रजः स्यात् तत एव सत्त्वम् ॥३३॥

[1]नासदासीन्नोसदासीत्तदानीं न मृत्युरासीदमृतं न र्तीहि ।
तम आसीत् तमसागूढमग्रे प्रजापतिः परमेष्ठीदमाह ॥३४॥

मनुस्तथैवाह भृगुस्तथाह शाकायनिः प्राह तथैव मैत्र्याम् ।
द्वैपायनोऽप्याह तथैव तस्मात् सिद्धं यदासीत् प्रथमं तमस्तत् ॥३५॥

---

भूते । तत्रोपपत्तिमाह—सर्वं जगदादावव्यक्तं भवति, मध्ये व्यक्तम्, अन्ततश्च अव्यक्तमेव भवति । तदुक्तं भगवद्गीतायाम्—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत !
अव्यक्तनिधनान्येव तत्र का परिदेवना । इति (अ० २)

अव्यक्तं च तम एव । रजसः क्रियारूपेण सत्त्वस्य च प्रकाशरूपेण व्यक्तत्वात् । ततश्च तम एवादौ तम एव चान्ते इति तदेव मुख्यं सिद्धम् । सांख्या अपि तमः शब्देन प्रकृतिमाचक्षते तदुक्तं 'तम आसीत् तमसा गूढमग्रे' इति मन्त्रं व्याचक्षणेन निरुक्तटीकाकृता दुर्गाचार्येण—"सांख्यास्तु तमः शब्देन प्रधानसाम्यापन्नं गुणत्रयमुच्यमानमिच्छन्ति, ते हि पारमर्षं सूत्रमधीयते तम एव खल्विदमग्रे आसीत्, तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत" इति प्रकृतिरेव च शक्तिरुच्यते, तस्मात्तमः शब्देनाभिधानात्तमस एव शक्तित्वं सिद्धम्, रजः सत्वं च तत एवोत्पद्येते इति पद्यद्वयव्याख्या ।

[1] उक्तेऽर्थे प्रमाणान्याह—नासदीयसूक्ते सृष्टिप्रतिपादके 'तम आसीत्तमसा गूढमग्रे' इति तमस एवादौ स्थितिः स्पष्टमुक्ता । तम एव मुख्यम्, तस्यावरकमपि तम एवासीदिति तस्याः श्रुतेरक्षरार्थः । अन्येषां सदादीनामारम्भे निषेध इति । अस्य च सूक्तस्य ऋषिः परमेष्ठी प्रजापतिरिति तस्यैव वचनमेतदिति किमतः परं प्रमाणं स्यात् । भगवता मनुनापि प्रथमाध्यायारम्भे सृष्टिमुपक्राम्यता

"आसीदिदं तमो भूतमप्रज्ञानमलक्षणम् ।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः"

इति तमस एव स्वशब्देन सर्वतः प्रथमत्वमुक्तम् 'प्रसुप्तमिव' इति तमो लक्षणं स्वापश्चाप्यन्ते निर्दिष्टः । मनुस्मृतिर्मनोराज्ञया तच्छिष्येण भृगुणा ऋषिभ्यः श्रावितेति तस्यापीयमुक्तिः स्पष्टैव । मैत्रायणीये ब्राह्मणे च ऋषेः शाकायनेरियमुक्तिः—"तम एवेदमग्रे आसीत्, तत्परे स्यात्, परेणेरितं विषमत्वं प्रत्ययात् । तद्वै रजसो रूपम् । तद्रजः खल्वीरितं विषमत्वं प्रत्ययात् । तद्वै सत्त्वस्य रूपम्" इति । अयं श्रुतेः पाठो ग्रन्थकृतैव टिप्पणे निवेशितः । अत्र तमसः प्राथम्यं स्पष्टम् । परेणेरितमित्याद्युत्तरत्र व्याख्यायते ग्रन्थ एव । द्वैपायनो व्यासोऽपि पुराणेषु तथैवाह—तथाहि वायुपुराण नाम्नाख्याते ब्रह्माण्डपुराणे—

'गुणसाम्ये तदा तस्मिन्न विभातं तमोमयम्' इत्यादि ।

एवमन्यत्रापि । तथा च तमसः पूर्वत्वे मन्त्रब्राह्मणस्मृतिपुराणानामैकमत्यं प्रतीयते । यच्च सर्वादिभूतम्, तत एव सर्वं जायत इति तमसो मुख्यत्वं सुस्पष्टं सिद्ध्यतीति ।

## (३९) अपरं तमःप्राधान्याधिकरणम्

[१]तमस्तदासीत् परगं परेणेरितं रजोऽभूद् विषमत्वमेत्य।
रजोऽपि सत्त्वं ह्यभवत् परेणेरितं ततोऽस्मिन् स रसोऽवभाति ॥३६॥

[२]ज्योतिष्मतस्तस्य रसस्य बन्धतो विभूतितो योगविशेषतोऽपि वा।
अङ्गारवच्चन्द्रवदभ्रवत् तमस्त्रैभाव्यमुद्भाव्य विवर्ततेतराम् ॥३७॥

कृष्णोऽयमङ्गार इहाग्नितेजसा संभूय रक्तः प्रथमं प्रजायते।
अत्यग्निदग्धः पुनरेव शुक्लतामापद्यते तद्वदिदं तमस्त्रिधा ॥३८॥

कृष्णं तमस्तेन परेण तेजसा सम्भूय रक्तं भवदुच्यते रजः।
ततोऽतिसंबन्धवशात् तदुच्यते शुक्लं भवत् सत्त्वमिति त्रिरूपता ॥३९॥

कृष्णोऽपि चन्द्रः स विवस्वदंशुभिः स्वार्धेऽपि संपद्य विभाति भास्वरः।
सान्ध्ये तमस्यन्तरितस्तु भास्वतो रक्तोंऽशुराभाति तथा तमस्त्रिधा ॥४०॥

तमोऽप्रकाशं परतेजसाऽभितः संपद्य सत्त्वं भवतीह भास्वरम्।
अल्पे तमस्यन्तरितं तु तत्परज्योती रजो रक्तमिवोपजायते ॥४१॥

---

[१] अथ प्रकारान्तरेण तमसः प्राधान्यवादिनां मतमाह। पूर्वपद्यव्याख्यायामुद्धृतां मैत्रेयश्रुतिं व्याचष्टे—परगम्—परे—रसे स्थितम्, तमः परेण—रसेनैव ईरितम—प्रेरितम्, विषमतां प्राप्य रजोरूपमभवत्। एवं रजोऽपि परेण प्रेरितं सत्त्वमभवत्। सत्त्वे च रसः—अवभाति—प्रकाशते।

[२] उक्तायाः श्रुतेरभिप्रायं स्फोटयति—रसो हि ज्योतिः—प्रकाशरूपम्, तेन पूर्वं व्याख्यातेषु बन्धयोगविभूतिसंबन्धेषु एकतमं संबन्धमेत्य तत्संबन्धादेव तमोरूपान्तरमापद्यते। तत्र दृष्टान्तत्रयमाह। तमो हि कृष्णवर्णमुच्यते सांख्यादिषु, रजो रक्तवर्णम्, सत्त्वं च शुक्लवर्णम्। ततश्च यथा कृष्णवर्णोऽङ्गारोऽग्निना ज्योतिषा संबन्धमेत्य पूर्वं रक्तवर्णः, अनन्तरं श्वेतवर्णश्च जायते, तथा तमोगुणोऽपि रजोरूपतां सत्त्वरूपतां च रसरंबन्धात्प्रतिपद्यते। यथा च चन्द्रः स्वयं कृष्णवर्णः सूर्यकिरणसंबन्धात्सूर्यसंमुखे भागे शुक्लः संपद्य—शुक्लतां प्राप्य प्रकाशते। सूर्यात्पराङ्मुखोभागस्तु तस्य कृष्ण एव। अत एवामायां पृथिवीनिवासिनां दृष्टिगोचरो भागः सूर्यात् पराङ्मुख इति कृष्ण एव भवतीति अप्रकाशत्वान्न दृश्यते। अनयोः शुक्लकृष्णयोः सन्धिगतो भागस्तु रक्तवर्णः स्यादित्यनुमीयते। यथा सन्ध्याकाले सूर्यस्य प्रकाशाल्पतायां तमोमिश्राः सूर्यकिरणा रक्ताः प्रतीयन्ते, तथैव चन्द्रस्यापि मध्यगत-भागो रक्तः स्यादेवेति। सा रक्तरूपता शुक्लस्य प्रकाशस्यैव तमः संबन्धाज्जायते, इति संबद्धं तमोऽपि रक्तरूपत्वेन रजस्तया व्यपदिश्यते। एवं तृतीये दृष्टान्ते अभ्रे मेघेऽपि स्फुटं दृश्यते। यदा अत्यन्तं श्यामवर्णो मेघः सूर्यस्यास्मद् दृष्टेश्च मध्भागे आयाति, तदा तस्य प्रान्तभागाः सूर्यांशुसंपृक्ताः श्वेताः प्रतीयन्ते। मध्ये स्थिताश्च रक्ताः प्रतीयन्ते। सर्वरूपेणावरकास्तु कृष्णा एवेति तद्वदेव तमसि त्रैगुण्यं भवतीति सप्तानां पद्यानामाशयः संक्षिप्य सहैव व्याख्यातः।

आत्यन्तिकश्यामघनस्य खण्डो भास्वन्तमावृत्य यदा स्थितः स्यात् ।
तत्प्रान्तभागा रविरश्मिशुभ्रा रक्ता उपान्त्या निविडास्तु कृष्णाः ॥४२॥

एवं परज्योतिरिदं परीव्यावृत्या स्थितस्यापि तमोघनस्य ।
शुक्ला विभागाः परसंनिकृष्टाः अनन्तरास्तत्र भवन्ति रक्ताः ॥४३॥

[1]न चास्ति तस्मिन्न विभाति तस्मिन् रतिर्न तस्मिन्निति कृष्णमुक्तम् ।
विरुद्धधर्मद्वययोगतस्तद्रक्तं च शुक्लं तु रसप्रकाशात् ॥४४॥

## (४०) औत्पत्तिकत्रैगुण्यम्

[2]अथासुरेः पञ्चशिखस्य वा मते त्रयोऽप्यमी सत्वरजस्तमोगुणाः ।
पृथग् विभिन्नाश्च परस्पराश्रया न चान्यतोऽन्यस्य समुद्भवोऽभवत् ॥४५॥

---

[1] तमः कृष्णवर्णः कस्मादुच्यते—इति स्पष्टीकरोति । कृष्णे रूपे हि सर्वं लीयते, रूपांतरं तत्र न प्रतीयते । यदा हि सर्वाणि रूपाणि एकीकृत्य निष्पिष्यन्ते, तदा तत्र कृष्णं रूपमेव भवतीति प्रागप्युक्तम् । तेन सर्वेषां रूपाणां मूर्छितानां कृष्णे वर्णे लयो भवति, मूर्छितसर्वरूपसमष्टिरेव वा कृष्णवर्णतया प्रतीयत इति स्पष्टीभवति । अनया रीत्या कृष्णवर्णस्यावरकत्वं सिद्धम् । तम इति ख्यातेऽन्धकारेऽपि किमपि न प्रतीयत इत्यावरकत्वं तस्य सिद्धमेव । तथैव या शक्तिः सर्वात्मना रसमावृणोति, अर्थात् यत्संबन्धेन रसप्रकाशो न जायते, सा शक्तिः कृष्णवर्णा तमोरूपा चोच्यते । त्रिधा हि रसो जगति सर्वपदार्थेषु भासते, सत्तारूपेण, ज्ञानरूपेण, आनन्दरूपेण च । अस्ति, भाति, प्रियः—इति त्रिधा सर्वत्र प्रतीतिरिति सर्वमिदं व्याख्यातपूर्वम् । यत्र तु नास्ति, न भाति इति सत्ताभानयोरप्रतीतिः, न चादृश्ये रतिः—प्रीतिरपि संभवति । तेन सर्वात्मना रस आवृत इति तस्य तमस्त्वं कृष्णवर्णत्वं चौपचारिकमुच्यते । यत्र तु अंशतो भाति, अंशतश्च न भातीति विरुद्धधर्मद्वययोगः, तद्रजो रक्तमुच्यते । तत्र प्रियत्वं तिरोहितं भवति, सत्ताभाने तु न तिरोहिते । त्रिधापि रसप्रकाशे तु सत्त्वमुच्यते शुक्लवर्णमिति । अत एव सर्वाणि जगतो रूपाणि यत्र तिरोहितानि स भगवान् विष्णुः, आद्या शक्तिश्च कृष्णरूपतयैवोपास्यते । यत्र तु सर्वाणि रूपाणि उद्रिक्तानि, स सर्वजगत्समष्टिरूपः शंकरः षोडशी शक्तिश्च शुक्लवर्णतयोपास्यत इत्याद्यपि भाव्यम् । एवं तमःप्राधान्यवादिनां मतं द्वेधा व्याख्यातम् । एकमेव मतं प्रकारद्वयेन निरूपितमिति यावत् । एतद् ग्रन्थोक्तसिद्धान्तरीत्या तु उक्तासु श्रुतिस्मृतिषु तमः पदमावरणस्यैव बोधकम् । 'तम आसीत्' सर्वमावृतं तिरोहितमासीदित्यर्थः । तत एव श्रौतप्रक्रियातो भिन्नप्रक्रियाश्रयणादेते सांख्याभासपदेन ग्रन्थकृतोक्ताः ।

[2] इत्थमेकैकगुणप्राधान्यवादिनां मतान्युक्तानि । प्रसिद्धे सांख्यदर्शने तु त्रयोऽपि गुणाः । सहचराः सममेव प्रवर्तन्ते, न त्वेकस्मादन्यज्जायते । न वा नियतं कस्यचिद् गुणस्य प्राधान्यम् । परस्परं संघर्षात् कदाचित्कस्यचिदेकस्य प्राधान्यं भवति, कदाचिदपरस्य । इदं हि सांख्यं कपिलेन भगवता प्रादुर्भावितम्, तच्छिष्येण आसुरिणा प्रचारितम्, तच्छिष्येण पञ्चशिखेन तु विस्तृतग्रन्थरचना कृतेति तत्परम्परा प्रथम पादेन निर्दिष्टा । अग्रे तु तन्मतसारो विवृतः । सर्वेऽपि गुणा आदित एव विभिन्नाः, सर्वे च सहैव तिष्ठन्ति, एकं विनापरः क्वचिदपि न लभ्यते, तेन परस्पराश्रया एवैत उच्यन्ते ।

[१]व्यक्तं यदेतत् किमपीह दृश्यते सर्वस्य शक्तिः पृथगिष्यते गुणाः ।
ययात्मनि ब्रह्म रसोदयो भवेत् सर्वापि सा सत्त्वमितीह कथ्यते ॥४६॥

[२]आनन्दविज्ञानशमप्रपूर्णता यतो यतो ब्रह्म रसा इहात्मनि ।
तां तामिहाव्यक्तदशां प्रचक्षते सत्वं ततोऽन्यौ तु रजस्तमो गुणौ ॥४७॥

[३]यया यया कर्मवलोदयो भवेत् सर्वापि सा सा रज इष्यते गुणः ।
क्षोभेऽल्पतां दुःखमुदेति वा यतो रजस्तदव्यक्तदशा प्रचक्षते ॥४८॥

[४]यया तयोरावरणं प्रजायते न भाति विज्ञानमुदेति नो सुखम् ।
क्रियाप्रवृत्तिर्न निवृत्तिरीहते सर्वाऽपि सा सा तम इष्यते गुणः ॥४९॥

[५]मोहोऽप्रकाशो यत एव शून्यता तमस्तदव्यक्तदशां प्रचक्षते ।
इत्थं त्रिधा वर्गविभक्तिशक्ति ये भवन्ति चाव्यक्तदशाहिते गुणाः ॥५०॥

न[६] तत्र सत्वं रससङ्गसिद्धं तमश्च नैतद् व्यतिरेकसिद्धम् ।
रजो न सान्ध्यं सकलाः स्वतन्त्राः आदौ समावस्थतया प्रतीताः ॥५१॥

[७]परस्परेण प्रतिषिद्धवृत्तयस्त्रयोऽप्यमी सन्ति परस्पराश्रयाः ।
आवृण्वते वा गमयन्ति वा त्रयः प्रसादयन्तीति परस्पराहिताः ॥५२॥

---

[१] यद् जगति स्फुटं प्रतीयते, तत्र सर्वत्र काचित् शक्तिरस्ति । सा शक्तिरेव गुणत्रयनाम्नाख्यायते । ब्रह्मपदेनात्र पुरुष उच्यते । यया शक्त्या आत्मनि स्वस्मिन् ब्रह्मरसस्य—आनन्दस्य उदयो भवेत्, सा शक्तिः सत्त्वगुणनाम्ना व्यवह्रियते ।

[२] आनन्दसहचरा अन्येऽपि धर्माः सत्त्विकाः सन्ति—विज्ञानम्, शमः—शान्तिः, प्रपूर्णता—परितोषः—तृष्णाया अभाव एते धर्मा अव्यक्तपदाभिधेयायाः प्रकृतेर्यया परिणत्या उदयन्ते—सा सत्त्वगुणप्रधानावस्था, तद्विपरीतौ तु रजस्तमोगुणाविति ।

[३] कर्मणः तज्जनकस्य वलस्य वा उदयो यया शक्त्या, सा रज इत्युच्यते । कर्मणा क्षोभे सति अल्पता भवति, अल्पतायां च दुःखमपि भवति, तस्माद् दुःखमपि रजसो रूपमुच्यते । सापीयमव्यक्तस्य प्रकृतेर्दशा ।

[४] तमोगुणस्वरूपवोधकं स्पष्टार्थं पद्यम् । निवृत्तिरपि क्रिया, प्रवृत्तिप्रतिबन्धरूपा, सापि तमसि न जायते । केवलमालस्यमेव विजृम्भते । तमो लीनः स्वस्मिन्नापदमपि न प्रतिकरोति ।

[५] पूर्वार्द्धेन तम एव विवृतम् । उत्तरार्द्धेनोपसंहारः । त्रिधा—त्रिप्रकारा ये वर्गाः—आनन्दविज्ञानशमादिसमूहः, क्रिया दुःख चापल्यादिः, मोहालस्यादिश्च, तस्योत्पादिका विभक्ता-विभिन्ना या शक्तिःतद्रूपास्ते गुणा अव्यक्तस्य प्रकृतेर्दशारूपा अवयवभूता ति यावत् ।

[६] यत्पूर्वेषु मतेषूक्तम्—सत्त्वं रसेन सहैव सततसिद्धमस्ति, तम एव वा सर्वतः पूर्वमस्ति, रजस्तु सन्धिगतमिति तत्सर्वं न युक्तम् । सर्वेऽपि स्वतन्त्राः सन्ति । एषां साम्यावस्थापि भवति, सैव प्रकृतिशब्देनाख्यायते ।

[७] एषां परस्पराश्रयत्वमपि, परस्परोपमर्देन विरुद्धत्वमपि । एको यदोदयते, तदा परं प्रतिबन्धातीति विरुद्धता । आवरणम्, गतिः, प्रसादश्चैषां कार्याणि । कार्याण्यपि क्वचित् परस्परसहचराणि भवन्तीत्यग्रे व्याख्यास्यते ।

[१]यथा हि तैलानलवर्तिकात्मकैस्त्रिभिः स्वतन्त्रैः पृथगेव कर्तृभिः ।
परस्पराऽन्वाहितभिन्नवृत्तिभिर्द्रव्यैः प्रकाशः क्रियते तथा गुणैः ॥५३॥

## (४१) त्रैगुण्यपञ्चिकाधिकरणम्

[२]निगूढमारूढमुदूढमोतप्रोतं तथान्तर्निहितं च भूत्वा ।
त्रैगुण्यमेतद्धि परस्परेणोपयुज्य संभुज्य जगत्करोति ॥५४॥

[३]त्वचा पिनद्धोऽस्ति रसो रसेनाप्यन्तःपिनद्धं द्विफलास्थि यद्वत् ।
तथा गुणोन्येन गुणेन यत्रान्तर्धीयते गूढगुणक्रमः सः ॥५५॥

[४]सत्त्वं हि यत्राधिरजो रजोऽधि वा तमोह्युदारूढमिवानुलक्ष्यते ।
तमः स्फुटं तत्र रजोन्तरा हि तं सत्वं रजस्यन्तरितं निगूहितम् ॥५६॥

[५]रजश्च सत्वं च तथा स्फुटं स्यात् तमः प्रवृद्धं प्रलयः स कालः ।
रजः प्रवृद्धं स हि सृष्टिकालः सत्वं प्रवृद्धं स हि मोक्षकालः ॥५७॥

तमः प्रवृद्धं स सुषुप्तिकालः स्वप्नान्तिकं स्यात्तु रजः प्रवृद्धम् ।
सत्त्व प्रवृद्धं यदि जागरा सा प्रत्यर्थमित्थं भवति त्रिकालम् ॥५८॥

तमः प्रवृद्धं तदचेतनं स्याद्रजः प्रवृद्धं द्रुमजातयः स्युः ।
सत्त्वं प्रवृद्धं यदि चेतनं तत् त्रिभिर्गुणैः स्यात्त्रिविधो विसर्गः ॥५९॥

[६]तेजस्तथापोऽन्नमिति त्रयं सत् तदन्यथाऽन्येऽप्सु तदन्यथा स्यात् ।
तदन्यथा तेजसि भूमिभेदादेवं गुणास्ते पृथगाश्रिताः स्युः ॥६०॥

---

[१] विरुद्धा अपि त्रयः कथं कार्यं साधयन्तीति दीपदृष्टान्तेनोच्यते । सर्वमिदं सांख्य-तत्त्वकौमुद्यादौ स्पष्टम् ।

[२] गुणानां परस्परं सम्बन्धे पंच प्रकारा उच्यन्ते ।

[३] प्रथमस्य निगूढस्य विवरणम् । यथा त्वचा चर्मणा शरीरस्थो रसो द्रवभागः पिनद्धः—बद्धोऽस्ति, रसेन च द्विधा मध्ये विछिन्नान्यस्थीनि निवद्धानि—आवृतानि न दृश्यन्ते, तथा यत्रैकेन गुणेनापर आवृतः । स आवृतो निगूढ उच्यते ।

[४] सत्त्वं यत्र रजस उपरि—तदाक्रम्य तिष्ठति, रजो वा तम आक्रम्य, तत्रोपरि स्थितमारूढमुच्यते, आक्रान्तं तु निगूढमिति ।

[५] एकैकस्यारूढस्योदाहरणानि युगेषु, चेतनगतावस्थासु, जगतः पदार्थेषु च स्फुटेन पद्यत्रयेण व्याख्यातानि ।

[६] कथमयं गुणप्रधानभाव त्यत्रोपपत्तिमाह—लोके तेजः, जलम्, पृथिवीति त्रीणि तत्त्वानि सत्पदेनोच्यन्ते । त्रिष्वपि च त्रीण्यपि अन्तर्गतानि, अत एव तानि त्रिवृत्कृतानी-त्यप्युच्यन्ते । परं परस्परसंमिश्रणेऽपि तेषां स्वरूपं कार्यं चान्यथैव दृश्येते, गुणप्रधानभावात् । तद्वदेव सत्त्वादिगुणानामपि, गुणप्रधानभावेन विभिन्नकार्यकारित्वं द्रष्टव्यमित्यर्थः ।

[१]सर्गे यदैकत्र गुणास्त्रयः स्युर्गुणः स एकोऽत्र भवेत्प्रधानः ।
स भूमिकारूढगुणक्रमः स्यात्ततो भवन्ति त्रिविधा विसर्गाः ॥६१॥

[२]अष्टोर्ध्वतः सत्त्वविशालसर्गा रजो विशालः किल मध्यसर्गः ।
तमोविशाला इह मूलसर्गाः पञ्चेति सर्गत्रयमाहुरेतत् ॥६२॥

[३]एकैकसर्गोऽपि पुनस्त्रिधा भवेत् स सात्त्विको राजस एव तामसः ।
तेषां त्रयाणामपि जीवने पुनस्तावृत्तयः स्युस्त्रिविधा गुणक्रमात् ॥६३॥

[४]अथो यथा चक्षुषि शुक्लमण्डले निविष्टमासीदतिकृष्णमण्डलम् ।
नाभौ पुनस्तस्य च कृष्णतारकानिधीयते तद्वदिमे गुणाः क्वचित् ॥६४॥

[५]पश्याम्यहं देवमिति प्रतीतिर्दृगात्मदेवैस्त्रिभिरेकमूर्तिः ।
तत्रैकतोऽन्तःकरणं स देवोऽन्यतोऽन्तरे दर्शनवृत्तिरेति ॥६५॥

---

[१] आरूढस्यैवोदाहरणमन्यदप्युच्यते—एकत्र सर्गे-सृष्टौ त्रयोऽपि गुणाः स्युः, परमेकस्तत्र प्रधानो भवेत् । स प्रधान एव भूमिकाम् आरूढ इत्युच्यते । भूमिकायास्तत्तत्सर्गरूपसंपत्तेः संपादक इति यावत् । अनेन क्रमेण त्रिविधा विसर्गाः—प्राणिनां सृष्टयो भवन्ति । केचित्सत्त्व-प्रधानाः प्राणिनः, केचिद्रजःप्रधानाः, केचित्तमःप्रधाना इति ।

[२] मनुष्यादूर्ध्वम्—मनुष्यादधिकशक्तिशालिनो अष्टविधाः प्राणिनो भवन्ति—ते ब्रह्मा, प्रजापतिः, इन्द्र इति तिस्रो देवविधाः, पितरः, गन्धर्वाः, यक्षाः, राक्षसाः, पिशाचा इति पञ्च उपदेवाः सांख्ये परिगणिताः । एते सत्त्वविशालाः—सत्त्वगुणप्रधानाः । मध्ये मनुष्यो रजोगुणप्रधानाः । अतएव विविधा क्रियाशीलाः । मूलसर्गाः—प्रथमोत्पन्ना मनुष्याद-वरकक्ष्याः पञ्च तिर्यग् योनयः, स्थावराः, सरीसृपाः, पक्षिणः, मृगाः, पशव इति । आरण्यका मृगा उच्यन्ते, ग्राम्यास्तु पशव इत्यनयोर्भेदः । एते पञ्च तमःप्रधाना इति त्रिविधः सर्गः सांख्ये व्याख्यातः ।

[३] सत्त्वप्रधानेष्वपि पुनस्त्रयो भेदाः, क्वचिद्रजसोऽधिकोऽनुवेधः, ते सात्त्विकराजसाः, क्वचित्तमसोऽधिकेऽनुवेधे सात्त्विकतामसाः, क्वचित्तु अनुवेधोऽल्पः, सत्त्वमेव प्रधानम्—ते सात्त्विकसात्त्विकाः । एवं रजः—प्रधानेषु मनुष्येष्वपि अनुवेधतारतम्येन राजससात्त्विकाः, राजराजसाः, राजसतामसा इति भेदाः, तमः प्रधानेषु तिर्यक्ष्वपि सत्त्वरजसोऽनुवेधतारतम्येनैवं भेदा ऊह्याः—तामससात्त्विका इत्याद्याः । तेषामपि च वृत्तिषु कदाचित्सत्त्वादीनां प्राधान्यं भवतीति पुनरपि गुणत्रयानुवेधस्तत्र विकल्पनीयः । शुद्ध एकैकगुणः कदापि न भवति । अनुवेधः सदा तिष्ठत्येव, तस्य तारतम्येन चानन्तभेदाः प्रकृतयो भवन्तीत्याशयः ।

[४] एकस्मिन् परः कथमारूढ इति स्पष्टं बोधनाय दृष्टान्तमाह—एकत्रैव चक्षुषि यथा शुक्लकृष्णकेन्द्रस्थकनीनिकागत निविडकृष्णरूपाणि एकस्मिन् रूपे परस्यारूढता केन्द्रगते केषांचित्तु तारके पीतरूपता, रक्तरूपतापि वा भवति, त्रयस्यापि यथा परस्परारूढता दृश्यते, तथैव सत्त्वादिगुणा अपि परस्परमारूढा भवन्ति ।

[५] गुणानां परस्पराहोरणस्योदाहरणमाह, यदा कश्चिन्मनुष्यो देवप्रतिमा वा, देवनामकं कंचन मनुष्यं वा पश्यति, तदा 'अहं देवं पश्यामि' इति वा प्रतीतिर्भवति, तत्र प्रतीतौ अहं

तत्रायमन्तःकरणस्य देवमनुप्रसादः स परो विकाशः ।
तत्राहिता येन्द्रियवृत्तिरेषा क्रिया तदन्तर्निहितः स देवः ॥६६॥

योऽयं विकाशस्तदुदेति सत्त्वं रजस्तु तत्रेन्द्रियवृत्तिरेषा ।
तत्राहितो यो विषयस्तमस्तत्त्रैगुण्यमित्थं प्रभवत्युदूढम् ॥६७॥

[१]सुप्तः क्वचिद्वल्गति पूरुषोऽयं तत्रास्य निद्रा बलवत्तमोऽभूत् ।
वाग्वृत्तिरस्मिन्नुदिता रजस्तत् सत्त्वं तु तत्रान्तरितात्पसंज्ञा ॥६८॥

[२]त्रिरूप बिन्दुत्रयवत्त्रिकोणैस्त्रिभिस्त्रिकोणं क्रियतां पुनस्तैः ।
त्रिभिस्त्रिकोणं क्रियतां तथेह त्रैगुण्यवर्ति त्रिगुणे गुणाः स्युः ॥६९॥

[३]ओतं पुनः प्रोतमिदं गुणत्रयं परस्परस्मिन्नतिसंकुलं तथा ।
संपद्यते येन विशिष्य शक्यते न मुख्यता वेत्तुमथो न गौणता ॥७०॥

---

पदवाच्यो द्रष्टा आत्मा, देव पदवाच्यो ज्ञानविषयः, पश्यामि पदवाच्या दृष्टिश्चेति त्रयोऽपि प्रतीयन्ते । शुद्ध आत्मनि क्रियाविरहादन्तःकरणमेव वस्तुतो द्रष्टृ भवतीति मूले द्रष्टृ स्थाने अन्तःकरणमेवोपात्तम् । तत्र दृष्टेर्मध्ये, तस्या एकस्यां दिशि आत्मना संबन्धः अपरस्यां दिशि तु विषयेण देवपदवाच्येन । आत्मा प्रत्यक्, विषयस्तु पराक् । तं देवनामकं कञ्चिद् विषयमालोक्यान्तःकरणे प्रसादः—प्रीतिर्जायते, अन्तःकरणं प्रसादमयं प्रीतिमयं वा भवति, तत्सत्त्वस्य गुणस्य रूपम् । अन्तःकरणसंबन्धित्वात्, तत्रान्तःकरणे स्थिता वृत्तिरूपा दृष्टिस्तु क्रियारूपतया रजसो रूपम् । विषयस्तु अन्तःकरणस्य अन्या वृत्तीरावृणोति, यदेको विषयो भासते, तदान्ये न भासन्ते—इत्यावरकत्वाद्विषयस्तमसो रूपम् । तत्र सत्त्वभूयतां गतेऽन्तः-करणे दृष्टिरूपं रज आरूढम्, रजसि तु तमो रूपो विषय आरूढ इति स्पष्टः परस्परमुदूढभावः—इति पद्यत्रयस्य व्याख्या ।

[१] अथोदाहरणान्तरमाह—यदा सुप्तः पुरुषः तस्यामेव दशायां वल्गति यत् किञ्चि-द्भाषते । बहूनामेवं विधा प्रकृतिर्भवति, यत् सुप्ता बहु भाषन्ते । कदाचित्तु सर्वं एव किञ्चि-द्भाषते यत्स्पष्टमन्ये श्रृण्वन्ति । अत्र निद्रा तमोगुणवृत्तिः, सा प्रबला । या तदात्वे वाग्—वृत्तिरुदिता, सा रजसो रूपम् । विना च ज्ञानं वाग्वृत्तिर्नोदेतीति अन्तर्निहितं स्वल्पं निगूढं ज्ञानमपि तत्रानुमीयते, तत् सत्त्वरूपम् । एवं तमसि रज आरूढम्, रजसि च सत्त्वमिति स्फुट उदूढभावः ।

[२] तन्त्रमार्गोपासका यथा पूर्वं बिन्दुत्रिकोणं लिखन्ति—त्रीन् बिन्दूनेव विभिन्नदिक्षु विलिख्य त्रिकोणरूपतां नयन्ति, पुनश्च त्रिभिस्त्रिकोणैरेकं त्रिकोणं संपादयन्ति, पुनरपि तथा-विधैस्त्रिभिस्त्रिकोणैरेकं यन्त्रं संपाद्यते । तत्र यथा एकैकस्मिन् त्रिकोणे त्रिकोणान्तराणि आरूढानि भवन्ति, तथैव गुणानां परस्परमारोह्यारोहकभावः प्रत्येतव्य इत्यर्थः ।

[३] उक्ते उदूढभावे इयानंशोऽस्य गुणस्य, इयांश्चास्येति, अंशपार्थक्यं स्फुटं प्रतीयते । यत्र तु पृथक् पृथगंशपार्थक्यमपि न प्रत्येतुं शक्यते, परस्परं संवलिता एव गुणानां वृत्तयो भवेयुः, स ओतप्रोतभावो नाम चतुर्थः प्रकारः । अत्र को गुणो मुख्यः, कश्च तत्राप्रधानतां गत इति वेत्तुं न शक्यते । यत्र गुणत्रयम्, परस्परं संकुलं संपद्यते, येन मुख्यता, गौणता वा

[१]नवप्रसङ्गे पुरुषेण योषितो हर्षस्त्रपामोहनवेदनाः पृथक् ।
यत्र स्त्रियः स्यात् प्रसवस्य वेदना सत्त्वे रजस्तत्र रजोगतं तमः ॥७१॥

[२]नियुध्यतां मोहधनोपलब्धि यः सत्त्वं रजस्थं च रजस्तमोगतम् ।
महोत्सवे यत्र सुखश्रमार्तयो व्यामोहनं वा तदिदं रजः परम् ॥७२॥

[३]बन्दीकृतस्याथ नरस्य पक्षिणः पशोर्बुभुक्षां गमितस्य भूयसा ।
यदन्नदानादिविशिष्टचर्ययोपचर्यते सत्त्वमिदं रजोगतम् ॥७३॥

[४]इत्थं सुखं दुःखमथैष मोहो ज्ञानं क्रियाऽऽलस्यमिति त्रयो वा ।
धर्मा गुणानामितरेतरस्थाः परस्परेणेह भवन्ति विद्धाः ॥७४॥

[५]क्वचित्तु संकोचविकाशयोगतो बहिः प्रसृप्यान्तरुपैति पर्ययात् ।
सत्त्वे समुद्रे प्रणिधीयते तमो हानौ तु सत्त्वस्य तमोऽनुवर्धते ॥७५॥

---

न वेत्तुं शक्यते, तद् ओतं प्रोतमित्यन्वयः । एकदा ओतम्, पुनः तत्रैव प्रोतमिति पुनः पद—निर्देशः । यल्लोके 'ताना, वाना' इति भाषायामुच्यते । यथा पटे ओतप्रोतभावेन स्थितास्तन्तवः पृथक् पृथग् विवक्तुं न शक्यन्ते, तथा गुणत्रयमपि क्वचिद्भवतीत्यर्थः ।

[१] ओतप्रोतगुणानामुदाहरणान्याह—स्त्रियाः पुरुषेण सह नवे रतिप्रसङ्गे हर्षः, लज्जा, मोहनम्, लज्जादिना स्तम्भः, वेदना-पीडा च युगपद्भवन्ति । तत्र हर्षः सत्त्वकार्यम्, त्रपाजनितं मोहनम्—तमः कार्यम्, वेदना तु रजः कार्यम् । एषां प्रविभागस्तदात्वे कर्तुं न शक्यते, इयदंशे सत्त्वम्, इयदंशे रज इत्यादि । तथैव यत्र स्त्रियाः प्रसवो भवति, तत्रापि वेदना, तज्जनितो मोहः, सन्तानप्राप्तिहर्षश्च युगपदेव भवन्ति । तत्र पुत्रप्राप्तिहर्षे वेदनाजनकं रजोऽपि प्रोतम्, तत्रैव च मोहनरूपं तमोऽपि प्रोतम् ।

[२] उदाहरणान्तरम्—युध्यमाना एव केचित्पुरुषाः 'जयोऽस्माभिर्लब्धः, तेन राज्यं संपदं वा प्राप्स्यामहे' इति निश्चिन्वन्ति तस्मिन्नेव क्षणे च केषांचित्प्रहारजनिता मूर्छापि भवति, तत्र युद्धक्रिया—रजः, धनप्राप्तिहर्षः सत्त्वम्, मूर्छा च तमः—इति युद्धे रजसि सत्त्वं प्रोतम्, तदुभयं च तमसि मोहे-प्रोतम्, तथैव यदा कस्यचिद् गृहे विवाहादिर्महोत्सवः प्रवर्तते, तदा सुखम्, श्रमजन्या वेदना, उभयजन्यो निद्रादिरूपः स्तम्भश्च युगपदेव जायन्ते । तत्र मुख्ये रजसि सत्त्वं तमश्चापि प्रोतम् ।

[३] अन्यदुदाहरणम्—कश्चित्पुरुषः कञ्चित् पक्षिणं निरुध्य बन्दीकरोति । तं च तदैव बुभुक्षितं दृष्ट्वा अन्नपानादिविशिष्टचर्यया तमुपचरत्यपि । तत्र बन्धनं रजःकार्यम्, तत्सहचरी तत्परिचर्या तु सत्त्वकार्यम्—इति रजसि सत्त्वं प्रोतम् ।

[४] एवं सत्त्वादिकार्याणां सुखदुःखमोहानां ज्ञानक्रियालस्यानां च यत्र साहचर्यं दृश्यते, तत्र तज्जनकानां सत्त्वादिगुणानामोतप्रोतभावापरपर्यायः परस्परानुवेधो विज्ञातव्य इति ।

[५] अथ पञ्चमं भेदमुदाहरति—क्वचित् कश्चिद् गुणः संकोचविकासाभ्यां धर्माभ्यां युज्यमानो विकासेन बहिः प्रसरणं प्राप्य संकोचेन विपर्ययम्—वैपरीत्यम् अन्तर्गामित्वं प्राप्नोति, सोऽयं पञ्चमः प्रकारो अन्तर्निहितनामा । यथा सत्त्वे समुद्रे—समुद्रत्वेन कल्पिते सत्त्वे,

[१]विज्ञानमन्तःकरणे हि कारणे सूक्ष्मे ततः स्थूलतनौ प्रवर्तते ।
संकुच्य सूक्ष्मेऽथ च कारणेऽथवा विश्राम्यतीत्यस्य दशात्रयी भवेत् ॥७६॥

[२]चर्मान्तविश्रान्तमिदं हि जागराः स्वप्नान्तिकं स्याद्यदि भौतिकं त्यजत् ।
सूक्ष्मान्तविश्रान्तमिदं भवेदथो सुप्तिर्भवेत् कारणमात्रगं यदि ॥७७॥

[३]इत्थं गुणास्ते पृथगुल्वणास्त्रयः परस्परेणानुचरन्ति पञ्चधा ।
परस्परावद्धविमुक्तरूपिणस्ते पूरुषे भोक्तरि भान्ति सर्वदा ॥७८॥

[४]यथा समुद्रप्रकृतिः पयोमरुत् पांसुप्लवाद्यैर्विततैः समन्ततः ।
परस्परेण प्रहतैर्वियोजितैरायोजितैरूर्मिमती प्रदृश्यते ॥७९॥

सा पूरुषस्य प्रकृतिस्तथामितो रूपैस्त्रिभिः सत्वरजस्तमोमयी ।
परस्परेण प्रहतैर्वियोजितैरायोजितैरूर्मिमती प्रवर्तते ॥८०॥

इत्थं तरङ्गायितरूपशालिनामेषां गुणानां हि परस्परेण ये ।
भङ्गाः स्युरासङ्गवशादनेकधा तानेव पश्यामि जगद्यदीक्ष्यते ॥८१॥

---

तमो गुणो निलीयते, सत्त्वस्य हानौ तु तमः पुनरनुवर्तते—विकसतीत्यर्थः। इमौ संकोच-विकासावेवास्य प्रथमभेदान्निगूढनाम्ना निरूपिताद् भेदकौ ।

[१] पूर्वोक्तौ संकोचविकासावुदाहरति—प्राणिषु वृत्तिरूपेणोदितं विज्ञानं पूर्वमन्तःकरणे तत्रापि प्रथमं कारणशरीरे, पश्चात् सूक्ष्मशरीरे, अन्ते तु स्थूलशरीरेऽपि व्याप्नोति, येन वयं स्थूलशरीरेऽपि शीतोष्णाद्यनुभवामः, पिपीलिकास्पर्शादि च परिचिनुमः। सोऽयं विज्ञानस्य सत्त्वगुणकार्यस्य विकासः। कदाचित्तु स्थूलाच्छरीरात्सूक्ष्मशरीरे, ततोऽपि च कारणशरीरे निलीयते, सोऽयं संकोचः।

[२] आभ्यामेव संकोचविकासाभ्यामवस्थात्रयं जायते इत्याह—यदा विकसद् विज्ञानं चर्मपर्यन्तं विश्रान्तं भवति, तदा जाग्रदवस्थोच्यते। यदा तु संकुचद् भौतिकम्—पञ्चभूतमयं स्थूलशरीरं त्यजत् सूक्ष्मान्ते—सूक्ष्मशरीरे विश्रान्तं भवेत् तदा स्वप्नान्तिकम्—स्वप्नावस्थे-त्युच्यते। यदा तु पुनरपि संकुच्य कारणशरीरमात्र आयाति तदा सुषुप्तिरवस्थेति। अत्र जाग्रदवस्थायां त्रिषु शरीरेषु व्यापके सत्त्वे समुद्रभूते तमो निलीनम्। सत्त्वे संकुचति तु स्थूलशरीरे सूक्ष्मशरीरे च क्रमेण पुनस्तमोऽज्ञानरूपेण प्रवृत्तमित्याशयः।

[३] प्रकरणमुपसंहरति—पूर्वार्द्धं स्पष्टार्थम्। उल्वणः—उद्बुद्धाः—व्यक्ता इति यावत्। एषां रूपाणि परस्परमाबद्धानि—संवलितानि कदाचिद् भवन्ति कदाचित्तु विमुक्तानि। विमुक्तपदेनापि सर्वथेतरवियोगो न प्रतिपाद्यते, अपि तु एकस्य प्राबल्ये अपरस्याभिभूतत्वमेवेति।

[४] स्पष्टप्रतिपत्तये दृष्टान्तमाह—पयः-जलम् मरुद्-वायुः, पांसुः-उड्डीयमाना धूलिः, प्लवा—उडुपाद्याः। समन्ततो विस्तृतैरेतैः, परस्परमाहतैः, कदाचित्संयुक्तैः, कदाचिद्वि-युक्तैश्च यथा समुद्रस्य प्रकृतिः—अवस्था ऊर्मिमती—लहरीभिराक्रान्ता दृश्यते। तथैव सत्त्वादिगुणैः संमिलितैर्वियोजितैश्च पुरुषस्य प्रकृतिः—दशापि ऊर्मिमती अनुभूयते। वस्तुतस्तु गुणानामवस्थाविशेषैः पुरुषस्य न कोऽपि विकार इत्याशयः। इत्थं गुणानां परस्परमाघात-प्रत्याघाताद्या एव पूर्वं प्रतिपादिता दृश्यजगद्रूपमित्यन्तिमेन पद्येनोक्तम्।

## (४२) [१]उत्पन्नशिष्टत्रैगुण्याधिकरणम्

केचित्पुनः प्राहुरिमे त्रयो गुणा एको गुणो नैतदिदं पृथक् त्रयम् ।
अव्यक्तमेतत्प्रथमं तदेकवत् त्रिधा भवेद्व्यक्तिदशामुपेत्य तत् ॥८२॥

[२]शक्ती रसे कर्म तदस्तिनास्ति मत् तदेकमेवोत्तरतस्त्रिधा भवेत् ।
प्रवर्तनञ्च चापि निवर्तना रजस्तदन्तरे सत्त्वमथो तमो भवेत् ॥८३॥

[३]प्रवर्तनान्ते च निवर्तनादितः स्तम्भः स्थितिः स्यात्तम उच्यते हि तत् ।
प्रवंतनादौ च निवर्तनान्ततः स्थितिर्मतं सत्त्व मिति क्वचिन्मतम् ॥८४॥

[४]निवर्तनं सत्त्वमथ प्रवर्तनं रजस्तमः स्तम्भ इति क्रियात्रयम् ।
यथा यथा कर्म निवर्तते क्रमात् तथा तथा सत्वगुणः प्रसीदति ॥८५॥

---

[१]अथापरमपि मतमुच्यते । अत्र मते सत्त्वादिगुणा न तत्तद्वस्तूत्पादकाः, यथा सांख्यनये प्रोक्ताः । अपि तु उत्पन्नेषु पदार्थेषु विशेषाधायका इमे भवन्ति । तत एवेदं त्रैगुण्यमुत्पन्नेषु पदार्थेषु शिष्टं व्यवह्रियते, यद्वा उत्पन्नानां विशेषणमिदं भवतीत्यधिकरणार्थः । गुणानामेक—मव्यक्तं तु रूपं ब्रह्मणः पुरुषस्य वा शक्तिः, सैव सर्वोत्पादिका, न तु पृथग् गुणा उत्पादका इति प्रथमेन पद्येनोक्तम् ।

[२] रसे या शक्तिरत्र ग्रन्थे विस्तरेणोक्ता, या च अस्तिनास्तिरूपा अर्थादुत्पन्नप्रध्वंसिनी प्रतिक्षणम्, कर्मपदवाच्या च । सैव मुख्या अव्यक्तपदवाच्या । सैव त्रिभिः शब्दैरुच्यते । प्रवर्तना, निवर्तना च कर्मणः स्वरूपम्, तदेव रजः । एतयोरन्तरे मध्ये तु सत्त्वं तमश्च व्यवह्रियेते ।

[३] द्विधा हि गुणानां रूपं सांख्यमतेन पूर्वस्मिन्नधिकरण उक्तम्, स्थितिगतिभेदेन, सुखदुःखमोहभेदेन च तदुत्पादका गुणा अनुमीयन्त इति । तत्र स्थितिगती रसापेक्षे एव व्यवह्रियेते इत्याह । गतिस्थिती न वस्तुतो भिन्ने, अपि त्वेकस्यैव कर्मणोऽवस्थाविशेषौ । गतेरारम्भे अन्ते चावश्यं स्थितिर्दृश्यते, अन्यथा स्थितिं विना गतिव्यवहार एव न स्यात् । स्थितः कश्चिद् गन्तुं प्रवर्तते, अन्ते च पुनः स्थितो भवति, तदैव गतिरुच्यते । स्थितिर्यदि न स्याद्, गतिव्यवहार एव तर्हि किमाधारः स्यात् । तत्र प्रवृत्तेरन्ते, निवृत्तेश्चादौ या स्तम्भरूपा स्थितिः, सा तम उच्यते । निवृत्तिरेव सत्त्वजनिकेति केचिद्वदन्ति ।

[४] अपरे त्वेवं निर्ब्रुवन्ति—निवृत्तिरेव सत्त्वम्, प्रवृत्तिस्तु रजः, प्रवृत्तिव्याघातस्तु तम ति । तस्मादेकैव क्रिया त्रिरूपा । वस्तुतस्तु रसापेक्ष एवायं व्यवहार इति व्युत्पादयति क्रियारूपं रजो यथा यथा निवर्तते, तथा तथा सत्त्वगुणः प्रसीदति—आविर्भवतीत्यर्थः । स्वयमाविर्भवच्च रसमपि प्रसादयति—प्रकटयतीत्यर्थः । तस्मादेव कारणादिदं सत्त्वमुच्यते । सदिति रसस्य नामेत्यसकृदुक्तम् । तस्य सतोऽयं भावः—तदभिव्यञ्जक इति तत एव तत्र सत्त्वशब्दप्रयोगः । तमः शब्दप्रयोगोऽपि रसस्यावरणादेवेति पूर्वाधिकरण एव व्याख्यातम् । तस्मादेकस्या एव क्रियाया रसप्रसादनात् सत्त्वनाम, आवरणात्तु तमो नामेति रसमपेक्ष्यैवायं व्यवहारः । यदि रसेन संबन्धो न स्यात्, तर्हि क्रिया क्रियापदेन रजः पदेनैव वा उच्येत,

प्रसादयत्येष रसं यतस्ततः सत्वं यतस्तं वृणुते तमस्ततः।
स्थिरं रसं यन्न भवेत्तमो रजस्तदेक एवायमनेकवद्भवेत् ॥८६॥

[1]एको हि रामः स विभिद्यते यथा भ्राता च पुत्रश्च पिता च कस्यचित्।
पितास्य पुत्रीं तनयः स्वमातरं पतिः स्वपत्नीं च निरीक्षतेऽन्यथा ॥८७॥

यदा हितायाचरतीति मित्रतामथाहितायाचरतीति शत्रुताम्।
तटस्थता नोभयथापि वा चरन्नुपैति एकोऽपि गुणस्तथा त्रिधा ॥८८॥

स्त्रियः स्तनग्राहिणि वृत्तयोऽन्यथा भवन्ति पत्यौ तनये चिकित्सके।
रिपौ च मित्रे च समेऽन्यथा पुनः परासु पत्नीजननीषु चान्यथा ॥८९॥

एकां स्त्रियं पश्यति चान्यथाऽन्यथो भ्राता पिता पुत्रपती यतिः परः।
ततस्तथा वृत्त्युदये प्रयोजकः संस्कारभेदः प्रकृतेः प्रदीयते ॥९०॥

[2]इत्थं गुणाः सत्वरजस्तमांसि क्षेत्रज्ञनिष्ठाः पुरुषस्य धर्माः।
[3]सांख्यैर्यथोक्ताः पृथगात्मदृष्टाः स्वल्पस्तदाभास इहेरितोऽयम् ॥९१॥

इति सांख्याभासाः।

इति ब्रह्मविज्ञाने परविद्यायामुत्तरार्धे बलप्रतिपत्तिविभागे गुणाधिकारः पूर्णः ॥

---

न तु त्रित्वं तत्र व्यवहृतं स्यात्। तस्माद्रससंबन्धापेक्षमेव त्रित्वम्। एकैव क्रिया त्रिधा व्यवह्रियत इत्यर्थः।

[1] यश्चापि सुखदुःखमोहभेद उक्तः, सोऽपि भोक्तृपुरुषापेक्ष एव। नहि पदार्थेषु सुखं दुःखं वानुस्यूतम्। यद्येवं स्यात्, तर्हि यः पदार्थः सुखकरः, स सर्वेषां सुखकर एव स्यात्। दृश्यते त्वन्यथा, अस्माकमत्यन्तदुःखदमपि कण्टकमुष्ट्रस्यात्यन्तसुखदमिति। अस्माकं सुखदमपि च घृतं मधु मक्षिकादीनां घातकमिति। मनुष्येष्वपि काचित् स्त्री स्वामिनः सुखदा, सपत्नीनां सैव दुःखदेति। एकस्यैव त्रिरूपत्वात् कंचित्प्रति कस्यचित्सुखरूपसमुद्भवः, कंचित्प्रति च दुःखरूप इति सांख्यप्रक्रिया न बुद्धिप्रसादिनी। कुतः कंचित्प्रति सुखरूपमेव, अपरं प्रति च दुःखरूपमेवेति अत्र उपपत्तिविरहात्। तस्माद्यथैकस्मिन्नेव पुरुषे विभिन्नानां पुत्रभ्रात्रादीनाम् 'मम पितायम्' 'मम भ्रातायम्' 'मम पुत्रोऽयम्' इति वृत्तिभेदाः, व्यवहारभेदाश्च, तथैव भोक्तुरन्तःकरणापेक्षा एव सुखदुःख मोहभेदा अपीत्येव बुद्धौ सम्यग् भासते। एते वृत्तिभेदा व्यवहारभेदा एव च चतुर्भिः पद्यैः सरलैर्विवृताः। न तत्र व्याख्यापेक्षा। ततश्च तत्तदन्तः—करणस्थितः संस्कारविशेष एवैवं विधिवृत्तिप्रयोजकः, न तु तत्तत्पदार्थगताः सत्त्वादिगुणा इत्युपसंहृतम्।

[2] अस्य प्रकरणस्योपसंहारः—इमे सुखदुःखमोहरूपाः सत्त्वादिगुणाः क्षेत्रज्ञे भोक्तरि पुरुष एव संस्काररूपेण स्थिताः, न तु तत्तदर्थनिष्ठा इति।

[3] सर्वप्रकरणोपसंहारः—इत्थं विभिन्नसांख्योक्तानि वैदिकप्रक्रियातो भिन्नानि मतान्यत्र संक्षेपेण दर्शितानीति।

## (४३) कर्मरूपाधिकरणम् ।

[1]व्याचक्ष्महे ब्रह्मणि कर्मरूपाण्येकस्य पश्यन्ति यतोऽन्यथात्वम् ।
यस्योदयश्च प्रलयश्च रूपं तत् कर्म तद्वचस्त्यमृतेन पूर्णम् ॥१॥

[2]अव्यक्तसुप्तं किल शून्यसंज्ञं तन्मृत्यु सुप्तं तु निरात्मसुप्तम् ।
यद्वचक्तमात्मन्वि बलानुसृष्टं पूर्णं बलं कर्मपदे तदाहुः ॥२॥

तच्चोदयानुप्रलयप्रभेदात् प्रतीयते कर्म पुनस्त्रिधेदम् ।
भिन्नोदयानुप्रलयोऽस्ति यावांस्तावान् स वेदो भवतीह भिन्नः ॥३॥

[3]यः कर्मवेदः क्षणिकः स एकः सान्तानिकोऽन्यः क्रमिको द्वितीयः ।
प्रावाहिको यः स परस्तृतीयस्तस्मिन् द्वितीयः प्रथमो द्वितीये ॥४॥

यदस्ति मुख्यं क्षणिकं स्वरूपं क्षणेन तत्र प्रलयोदयौ स्तः ।
तैरप्यसंख्यैः क्षणिकैः सुदृब्धं सान्तानिकं तस्य परं स्वरूपम् ॥५॥

---

[1] बलम्, शक्तिः, कर्मेत्येक एवार्थः । प्रसुप्तावस्था बलम्, कुर्वद्रूपावस्था शक्तिः, प्रकटितावस्था तु कर्म, क्रिया वेत्यादावेव निर्दिष्टम् । तत्र बलस्य शक्तेश्च विवरणं कृतम्, इदानीं कर्म क्रियापरपर्यायं विव्रियते । इदं च त्रितयमपि ब्रह्मापरपर्यायस्य रसस्यैवाश्रयेण तिष्ठतीत्यप्यसकृन्निरूपितम् । तदेवारम्भे स्मरणार्थमुच्यते । ब्रह्मणि कर्मणो रूपाणि व्यचक्ष्महे ; यै रूपैः एकस्यापि ब्रह्मणो अन्यथात्वम्—नानारूपतां पश्यन्ति जना इत्यन्वयः । तस्य कर्मण उदयश्च प्रलयश्चेत्येव स्वरूपम्, कर्म उत्पन्नप्रध्वंसिभवतीत्यर्थः । एवंविधस्य प्रतीतिरेव कथं स्यादित्यपेक्षायामाह—तद्बलम् अमृतेन पूर्णमस्तीति । अमृतं रसमाश्रित्यैव तस्य प्रतीतिर्भवति, न तु निराधारं कदापि प्रतीयते । तदुक्तं व्याकरणमहाभाष्यकृता "क्रिया नामेयमत्यन्ता परिदृष्टा, न शक्या पिण्डीभूता प्रदर्शयितुम्" इति ।

[2] बलस्य तिस्रोऽवस्था पुनः स्मारयति—यत् सुप्तमव्यक्तरूपं मृत्यु—बलम्, तत् शून्यमुच्यते । यदि व्यक्ति गतमपि कार्याक्षमम्—तर्हि तत् निरात्मसुप्तमित्युच्यते । यदा तु बलेनोत्पादितं कर्म आत्मन्वि भवति—रसमात्मतया गृह्णाति, तदा तत् पूर्णमुच्यते । कर्मापि अत्र पूर्णमुच्यते, बलमपि च कर्मोत्पाद्यैव पूर्णं भवति ।

[3] कर्मणः त्रिधा वेदमाह, वेदो नाम ज्ञानम् । कर्म त्रिधा विज्ञायते, अर्थात् तस्य त्रीणि रूपाणि भवन्ति । मुख्यं रूपमस्य क्षणिकम्, यस्मिन् क्षणे उत्पद्यते, तदैव विलीयत इति । यदा तु तस्य क्रमेण सन्तानो भवति आत्मानं रसमालम्ब्य, तत् क्रमरूपेण स्थापिता-मापद्यते, तत्तस्य सान्तानिकं द्वितीयं रूपम् । अथ सन्तानोऽपि यदा प्रवाहरूपेण स्थायी भवति, तत् तृतीयं प्रावाहिकं रूपम् । एषु च प्रावाहिके सान्तानिकमन्तर्भूतम्, सान्तानिके च क्षणिकमन्तर्भूतम् । क्षणिकमेव सन्तानरूपं जायते, सन्तान एव च प्रवाही भवतीत्यर्थः । अग्रिमे पद्ये एतदेव स्पष्टं विवृतम् । असंख्यैरित्यस्यायमर्थो यत्कतिभिः क्षणिकैः सान्तानिकं रूपं निष्पद्यत इति संख्यानियमो नास्ति । किञ्चित् सान्तानिकं रूपं दशभिः क्षणिकैः, किञ्चित्तु शताधिकैः संपद्यत इत्यर्थः । एतदग्रे स्फुटं स्यात् ।

[१]सान्तानिके तु प्रलयोदयौ स्तो विभिन्नकालान्तरितौ पुनस्तौ ।
यान्यत्र कर्माणि वदन्ति लोके सान्तानिकान्येव भवन्ति तानि ॥६॥

[२]तैरप्यसंख्यैः क्रमिकैः सुवृन्धं प्रावाहिकं तस्य परं स्वरूपम् ।
प्रावाहिकान्नास्ति परं स्वरूपं तदेव रूपं जगदेतदाहुः ॥७॥

---

[१] सान्तानिके रूपे उदयप्रलययोः कालनियमोऽपि नास्ति । किञ्चित्सान्तानिकं रूपमल्पकालं भवति, किञ्चित्तु बहुकालव्यापीत्यर्थः । लोके च यानि कर्मपदेन क्रियापदेन वा उच्यन्ते, तानि सान्तानिकान्येव रूपाणि । तथाहि देवदत्तः पचतीति पचि क्रिया एकेन पच् धातुनोच्यते । सा च पचि क्रिया अपरिगणनीयाणां क्रियायां समष्टिः । चुल्हीप्रज्वालनमारभ्य परिपक्वतण्डुलानां स्थाली यदा चुल्ह्या उत्तार्यते, तावत्पर्यन्तं पचतीति वर्तमानकालो व्यवह्रियते । तेन चुल्हीप्रज्वालनादिः स्थाल्यधःश्रयणान्ता पचिक्रिया व्यवहारे सिद्धयति । तत्र इन्धनानां संयोजनम्, फूत्कारः, स्थालीमुत्थाप्य तस्या उपरि स्थापनम्, तत्र तण्डुलादिनिक्षेपः—इत्याद्याः शतशः क्रिया अन्तर्भवन्ति । अवान्तरभूतास्वपि चैकैकक्रियासु प्रत्येकं क्रियासमष्टिः । पाकपात्रं स्थाली एकस्मात् स्थानादुत्थाप्यते—तत्रापि स्थानभेदाद् बह्व्यः क्रियाः । एवमुपरि स्थापनेऽपि बह्व्यः क्रिया इत्यादि स्वयमूह्यम् । इयं विजातीयक्रियासमष्टिः । देवदत्तो यज्ञदत्तगृहं गच्छतीत्यादौ गमि क्रिया तु सजातीयक्रियासमष्टिः । पादोत्थापनम्, पादन्यसनं चेत्येकविधैव क्रिया । तत्र पुनः पुनरावर्त्यते । स्वगृहादुत्थाय मित्रगृहप्राप्तिपर्यन्तं च शतशः सहस्रशो वा पादोत्थापनन्यसनानि जायन्ते । एकस्मिन् पादोत्थापनेऽपि च भिन्नभिन्नाकाशप्रदेशसम्बन्धभेदाद् बह्व्यः क्रिया भवन्ति । इत्थं लोके क्रियापदेन व्यवह्रियमाणा सर्वाऽपि क्रिया समष्टिरूपैवेति सम्यग् विचार्यम् । अध्ययनं नाम विभिन्नानामक्षराणामुच्चारणम् । तत्र चैकैकस्याक्षरस्योच्चारणे जिह्वाया एकस्मात् स्थानाद्विभागः, आकाशप्रदेशं मध्यगतमतिक्रम्य स्थानान्तरे योजनमिति बह्व्यः क्रियाः, एवमेकेन क्षणेनोच्चारितेष्वनेकेषु पदेषु कियत्यः क्रिया अन्तर्भवन्तीत्यवधातव्यम् । क्षणस्यातिसूक्ष्मतमेनांशेन सूचीं प्रक्षिप्य ऊर्ध्वाधःस्थितानि उत्पलादि पत्राणि युगपदिव भेद्यन्ते, परं विचार्यमाणे एकस्य पत्रस्योपरितनस्य यावन्न भेदः, तावद् द्वितीयेन पत्रेण सूचीसंबन्ध एव नास्तीति कथं सूच्या तद् भेद्यताम् । तस्मात्तत्र भेदक्रमोऽवश्यं मन्तव्यः स्यात् । ततश्चैकैकेन पत्रेण विभागः, परेण परेण संवन्ध इति क्षणस्य सूक्ष्मभाग एव शतशः क्रिया अभ्युपेतव्या भवेयुः । स चात्यल्पः क्षणस्तत्कालभवा क्रिया च न कथमपि बुद्धया परिच्छेत्तुं शक्यत इत्येव क्षणिकस्य कर्मणोऽविचार्यत्वम्, सन्तानस्यैव च व्यावहारिकत्वमुच्यते इति सुसूक्ष्मं विचार्यम् ।

[२] बहुभिः सान्तानिकैः कर्मभिश्चैकं ावाहिकं रूपं जायते । नदीप्रवाह इवैकैकस्मिन् प्रावाहिके बहूनि सान्तानिकान्यन्तर्भवन्तीति तत् प्रावाहिकमुच्यते । यथा क्षेत्रे शाल्याद्यङ्कुरोद्गम एकं सान्तानिकं रूपम् । तैश्चासंख्यैश्चरमवृद्धिपर्यन्तमेकैकं प्रावाहिकं रूपमिति । एतैश्च बहुभिः प्रावाहिकै रूपैः कृतरूपं महाप्रावाहिकमपि प्रावाहिकमेव । तच्च जगद्रूपमिति । इतः परं किमपि रूपं कर्मणो न व्याख्यातुं शक्यते । प्रवाहपदेनैव सर्वासां परम्पराणां संगृहीतत्वात् । तदेतत् प्रावाहिकं रूपमेव कर्मणो जगदित्युच्यते ।

[१]प्रावाहिकं तन्न निरात्मकं स्यान्नात्मन्वितेषु क्षणिकं क्वचित्स्यात् ।
उत्पन्ननष्टक्षणवत् तदात्मग्रहक्षणं न क्षमतेऽनुगन्तुम् ॥८॥

[२]अथाहुरेके क्षणिकं न चेत्स्यादात्मन्वि तर्त्तर्हि न तत्प्रतीयुः ।
उत्पत्तिरस्य स्थितिरस्य नाशस्तत् त्रिक्षणं कर्म वदामि तस्मात् ॥९॥

स्थितिक्षणेन क्षणिकत्वमन्ये प्राहुः स्थितावेव परस्य नाशः ।
परस्य चोत्पत्तिरिति क्रमेण धारा द्विधाऽस्त्यन्तवती निरन्ता ॥१०॥

प्रवाहकर्मास्ति निरन्तधारं सान्तानिकं कर्म तु सान्तधारम् ।
अथाद्यकर्म क्षणिकं त्वधारं त्रीण्यप्यमून्यात्मगतानि वीक्षे ॥११॥

## (४४) प्रवाहाधिकरणम्

[३]प्रवाहरूपेण बलेन लक्षितं यद् ब्रह्म यत्सर्वमिदं बिभर्ति हि ।
तद्भक्तयः स्युस्तदुपासना कृता यथार्थतज्ज्ञानकृते समर्थते ॥१२॥

---

[१] प्रावाहिकं रूपं निरात्मकं न संभवति, रसेन गृहीतस्यैव कर्मणः सन्तानो वा प्रवाहो वा संभवति, अन्यथा क्षणिकस्य विलीनस्य कथं सन्तानः प्रवाहो वा भवेत् । रस एव चात्मेति प्रावाहिकं रूपं सात्मकमेव भवति । क्षणिकं तु सात्मकं न संभवति । उत्पन्न—प्रध्वस्तस्य आत्मना रसेन सह संवन्धकालोऽपि कथं संभाव्यः स्यादिति । तस्मात् सन्तान-रूपमासाद्यैव आत्मना रसेन संवन्धः संभवतीति एकं मतम् । परे पूर्वोक्तं मतं नाद्रियन्ते । सति रससंवन्धे सन्तानः, सति च सन्ताने रससंवन्ध इत्यन्योन्याश्रयापत्तेः । यदि क्षणिकस्य आत्मना सह न संवन्धः, तर्हि सन्तान एव कथं भवेत् । तस्मात् स्वरूपेणैव कर्म त्रिक्षणवृत्ति मन्तव्यम्, एक उत्पत्तिक्षणः, द्वितीयः स्थितिक्षणः, तृतीयस्तु विनाशक्षण इति । स्थितिक्षणे आत्मना संवन्धः, ततश्च संतान इत्युपपद्यते ।

[२] परे तु स्थितिक्षणं विनाशक्षणं चैकमेव मन्वाना क्षणद्वयमेव मन्यन्ते । एकस्य स्थितिक्षण एव तेनोत्पादितस्य परस्योत्पत्तिः, स्वस्य च तदैव विनाश इति सन्तानोपपत्तिः । स्थितेः क्षणिकत्वात् कर्म क्षणिकमुच्यते । सन्तान एव च धारापदेनोच्यते । सा धारा द्विविधा—अन्तवती च अनन्ता चेति । अन्तवती धारा सन्तान उक्तः, अनन्तातु प्रवाह इति । मुख्ये क्षणिके कर्मणि तु धारा नास्तीति तद् अधारमेवेति । त्रीण्यप्यात्मानं रसमाश्रयन्त इति आत्मगतान्येव पश्यामि । न तु निरात्मकं किञ्चिदपीत्यर्थः ।

[३] अनन्तकर्मप्रवाहोपलक्षितम्—अर्थात् तादृशः प्रवाहो यदाधारेण प्रवर्तते, तादृशो रस एव ब्रह्मपदेनोच्यते । इदं 'मायाशवलितब्रह्म' इति 'विशिष्टब्रह्म इति वा वेदान्तशास्त्रे कथ्यते । इदं सर्वजगद्विधारकत्वादेव ब्रह्म कथ्यते । मर्म शब्दस्य वर्णविपर्यासेन ब्रह्म-शब्दता प्रथमप्रकरणोक्ता स्मर्तव्या । इदं पूर्णतया केनापि मनसि कर्तुं वक्तुं वा न शक्यते, अनन्तत्वादेव । अतः तस्य भक्तयः—भागाः—अंशा एव जगति दृश्यन्ते । तेषा-मंशानामुपासना यदि क्रियेत, तर्हि तया पूर्णज्ञानं प्राप्येत ।

[१]परात्मनि स्वात्मसमर्पणं मनोद्वारा कृतं योग उपासना च सा ।
उपासनार्चा भवतीह सा द्विधा प्रतीकतो वाप्यनुरूपचित्रतः ॥१३॥

[२]तदेकदेशेन समग्रतद्ग्रहः प्रतीकशब्देन निगद्यते बुधैः ।
करे धृतोऽसौ ध्रियते हि पूरुषः स सेवितः स्यादिह पादसेवया ॥१४॥

[३]कर्मप्रवाहोऽयमनाद्यनन्तो जगन्मयो यः स मतः परात्मा ।
न तत्र सर्वात्मनि युज्यतेऽल्पं मनः प्रतीके क्रियते स योगः ॥१५॥

[४]जगत्प्रवाहे बहुरूपभिन्ने यदेकरूपं भवतीह गङ्गा ।
धृत्वा प्रतीकेन तदर्प्यते यच्चितं परात्मन्युचितं स योगः ॥१६॥

---

[१] उपासनाशब्दार्थमाह—परात्मनि—पूर्वपद्योक्ते परब्रह्मणि आत्मनः स्वस्य मनोद्वारेण समर्पणम्—मनसा एकाग्रेण तच्चिन्तनमेवोपासनशब्देन, योग शब्देन च कथ्यते । उपेत्युपसर्गः सामीप्यबोधकः, उपास्यसमीपे आसना—स्थितिरेवोपासना स्थतिश्च मनोद्वारेणैवेति । तेन मनसस्तस्मिन् समर्पणं फलितम् । योगशब्दार्थश्च संबन्धः प्रसिद्ध एवेति । सैवोपासना अर्चा, पूजादिशब्दैरपि व्यवह्रियते । यद्यपि चेतस एकाग्रतया उपास्ये स्थापनमेव उपासना, परं चन्दनमाल्यादिसमर्पणरूपया पूजया चित्तैकाग्र्ये साहाय्यं भवतीत्युपासनासाधनत्वात् पूजाप्युपासनाशब्देनोच्यते । सा चोपासना द्विविधा भवति—प्रतीकोपासना, अनुरूपं चित्रोपासना चेति ।

[२] प्रतीकोपासनां विवृणोति—प्रतीकशब्दार्थः खण्डम् । एकस्मिन् खण्डे—अवयवे संपूर्णवस्तु बुद्धिः प्रतीकोपासना । यथा नदीपर्वताद्या उक्तस्य परब्रह्मण एवांशाः, तेषां परब्रह्मरूपेण भावना प्रतीकोपासना । तच्चैतद् व्यवहारेऽपि भवतीति तस्या उपासनायाः स्वाभाविकत्वमाह—कंचिन्मनुष्यं करे गृहीत्वा पुरुषोऽयं मया धृत इति सर्वोऽपि जनो व्यवहरति । वस्तुतोमनुष्यस्य कस्यचित् कररूप एकोंऽश एव धृतः, परं तावतैव मनुष्यो धृत इति व्यवहारो जायत एव । न च सा मिथ्याबुद्धिः, कदापि तद्बाधाननुभवात् । बाधिता हि बुद्धिर्मिथ्याबुद्धिरुच्यते । न चास्या बुद्धेः कदाचिदपि बाधोऽनुभूयते । एवं पादं सेवित्वैव गुरुः पिता वा सेवित इत्यपि स्वभाविकी बुद्धिः सर्वेषामुदेति ।

[३] पूर्वोक्तस्यैव स्पष्टीकरणम् । नानाद्यनन्तो जगत्प्रवाहस्तुच्छेन मनुष्यमनसा ग्रहीतुं शक्यत इति तस्यैकस्मिन् क्वचिदंश एव मनः समर्प्यते । तस्मात्प्रतीकस्यैवोपासना संभवति न तु सर्वस्येति ।

[४] उक्तेऽर्थे दृष्टान्तमाह—बहुरूपभिन्ने जगत्प्रवाहे एको गङ्गाप्रवाहोऽप्यस्ति । तत्र गङ्गाप्रवाहे प्रतीकभूते यदि मनः समर्प्यते तर्हि परात्मन्येव योगः कृतः, करग्रहणेन पुरुषग्रहणवदिति । ननु तर्हि गङ्गायामेव चेतोऽर्पणं कुतः, क्वचिदपवित्रे स्थानेऽपि तु चेतोऽर्पणं ब्रह्मण्येव स्यादिति चेन्मैवम् । यद्यपि पवित्रमपवित्रं च सर्वमेव परब्रह्मणोंऽशः, परं पवित्रे स्थानेऽर्पितं मनः प्रसादमेतीति तत्र रमते । अपवित्रे तु वस्तुनि उद्विग्नतया न चेतोऽवतिष्ठत इति न तत्रोपासना संभवति । लोका अपि गुरुं मातरं पितरं वा पूजयन्तस्तच्छिरआदिषु पवित्रेष्वेवाङ्गेषु तिलकाद्यर्पयन्तीति स्वाभाविकमेतत् ।

[१]गङ्गाप्रवाहेण मनोऽवगाहं जगत्प्रवाहे यदि कोऽपि कुर्यात् ।
स प्रत्ययः स्यादनुरूपचित्रप्रदर्शनाच्चित्रवतः स्वरूपे ॥१७॥

[२]गङ्गाप्रवाहोऽस्ति जलप्रवाहो जलं तदस्ति त्रिपथानुगामि ।
अधः पृथिव्यामिह तिर्यगूर्ध्वं वायौ च तस्मात् त्रिपथा हि गङ्गा ॥१८॥

---

[१] अत्रैव अनुरूपचित्रोपासनामपि समनुगमयति—यथा गङ्गाप्रवाहः, तथैव ब्रह्मणि जगत्प्रवाहः—इति द्वयोः सादृश्यं भावयन् गङ्गाप्रवाहे चेतोऽर्पयति चेत्, तदा सैव अनुरूपचित्रोपासना कथ्यते । यथा चित्रं दृष्ट्वा चित्रितस्य मनुष्यस्य अश्वगजादेर्वा बुद्धया ग्रहणं जायते, तथैवात्रापि सादृश्येन मुख्ये परात्मनि बुद्धिरर्प्यते—इति अनुरूपचित्रोपासनेयमुक्ता । न चेयमपि मिथ्याबुद्धिः बाधस्यानुदयात् । तथा च काव्यप्रकाशे रसप्रकरणे चित्रतुरगबुद्धेः सम्यङ्मिथ्यासंशयसादृश्यबुद्धिभ्यो विलक्षणत्वं समर्थितम् । अनयैव रीत्या शालग्रामशिलादिषु विष्णुरुपास्यते शिष्टैः । शालग्रामशिलायां हि मध्ये स्वर्णं भवति, अभितश्च कृष्णवर्णः प्रस्तरः । तथैव ब्रह्माण्डेऽपि मध्ये स्वर्णवदवभासमानः सूर्यः, तमभितश्चानन्त आकाशे कृष्णवर्णं तम इति ब्रह्माण्डसादृश्येन ब्रह्माण्डमयस्तदधिष्ठाता भगवान् विष्णुरुपास्यते । वृत्ताकारा भवन्ति पूजार्हाः शालग्रामाः, वृत्तमेव च ब्रह्माण्डरूपमिति । अथ सूर्योऽपि नैकत्रावस्थायी, किन्तु स्वस्मात् स्थानाच्चलति । येऽपि भूभ्रमणवादिनः, तेषां मतेऽपि अस्मद्भूम्यपेक्षया सूर्यस्य स्थिरत्वं भवतु नाम, किन्तु वस्तुतस्तु किमपि सांसारिकं वस्तु स्थिरं नास्तीति सूर्योऽपि भ्रमत्येव । वैदिके तु सिद्धान्ते सूर्यस्य परमेष्ठिमण्डलमभितः परिक्रमणं स्वीक्रियत एव । सूर्ये च चलति ब्रह्माण्डमपि चलेत् । सूर्यस्य किरणजातेन यावान् प्रदेश आक्रम्यते, तदेव ब्रह्माण्डमुच्यते । विभिन्नस्थानस्थिते च सूर्ये किरणव्याप्तिप्रदेशोऽपि विभिन्न एव भवेत्, चलतो दीपस्येव किरणाक्रमणप्रदेशः । तथा च विभिन्नानां प्रदेशानामेकीकृत्य भावनया अनेकवृत्तगर्भितः प्रलम्ब आकारस्तस्य स्यादिति तादृश एव नर्मदेश्वरः शिवरूपेण शिष्टैरुपास्यते । तथैव शिवविष्ण्वादीनामाद्या षोडश्यादि शक्तीनां च य आकारा उपास्यन्ते, तेष्वपि तत्तद्रूपाणां तत्तदायुधादिचिह्नानां च ब्रह्माण्डस्थित तत्तद्वस्तुभिः सादृश्यादिकं विष्णुशिवपुराणादिषु तन्त्रेषु च वर्णितम् । तेन सापि अनुरूपचित्रोपासना एव । एता उपासना सर्वा आर्यसंस्कृतौ प्रसिद्धाः सन्ति । सर्वाश्च मूर्तयः परब्रह्मण एवांशा इति बुद्धया प्रतीकोपासना अपि सर्वा कथयितुं शक्यन्त इति । यदंशबुद्धया भावना क्रियते, तर्हि सर्वापि प्रतीकोपासना । यदि सादृश्यबुद्धिर्भाव्यते, तर्हि अनुरूपचित्रोपासनेति । उदाहरणान्तराण्यप्यनुपदमुपासनाधिकरणे विवरीष्यन्ते ।

[२] गङ्गाप्रवाहस्य जगत्प्रवाहस्य च सादृश्यं बुद्धावुपस्थापयितुं विवृणोति—जलप्रवाह एव गङ्गाप्रवाह इत्युच्यते । जलं च त्रिधा विभज्य गच्छति, कश्चिदंशो जलस्य भूम्यामधः प्रविशति, तत एव नीचैर्भूमिभागे आर्द्रत्वमनुभूयते । कश्चिदंशः सूर्यकिरणाकृष्ट ऊर्ध्वं गच्छति, तत एव मेघाद्युद्भवन्ति । कश्चिच्च तिर्यग् वायौ प्रसरति । तेनैव जलसन्निहिते वायौ शैत्यमनुभूयते । एवं जलस्य त्रिपथानुगत्वाद् गङ्गापि त्रिपथगा इति व्यह्रियते । पुराणेषु तु सुमेरुप्रान्तात्प्रवहन्त्या गङ्गायास्तिसृषु दिक्षु गमनात् त्रिपथगात्वं व्याख्यातम् । तदप्यस्तु । जलस्यापि त्रिपथगत्वं स्फुटमनुभूयत एवेति ।

[१]जगत्प्रवाहोऽपि बलप्रवाहो बलं तदस्ति त्रिपथानुगामि ।
तमो रजः सत्वमिति क्रमेण पृथक् त्रिधारा प्रकृतिस्तथैवा ॥१९॥

[२]त्रिधापि दृश्येत जलं जलाशये क्वचित् प्रवाहि प्रतरां न चोर्मिवत् ।
महोर्मि तु क्वापि न च प्रवाहि तत् क्वचित् प्रवाहि प्रतरां महोर्मि च ॥२०॥

[३]इदं तु पश्यामि बलं बलाशये सदा प्रवाहि प्रतरां महोर्म्यपि ।
न च प्रवाहप्रभवः प्रतीयते परायणोऽप्यस्य न चावसीयते ॥२१॥

[४]गङ्गाप्रवाहे क्वचिदास्थितः पुरः पश्यामि गम्भीरगतिक्रमं समम् ।
क्षणे क्षणे क्षीण[५]विलक्षणक्रमं क्रमागतं भिन्नमभिन्नवज्जलम् ॥२२॥

जगत्प्रवाहेऽपि तथा स्थितः पुरः पश्यामि गम्भीरगतिक्रमं समम् ।
क्षणे क्षणे क्षीण[६]विलक्षणं क्रमं क्रमागतं भिन्नम[७]भिन्नवद्बलम् ॥२३॥

---

[१] तथैव जगत्प्रवाहेऽपि त्रिपथगत्वं योजयति । जगत्प्रवाहो नाम बलप्रवाह एवेति विस्तरेण निरूपितं ग्रन्थे, बलं च सत्त्वरजस्तमोरूपेण त्रिरूपामाख्यातमिति बलस्यापि त्रिपथगत्वं स्फुटी भवतीति । बलरूपा प्रकृतिः सत्त्वादिभिस्त्रिधारा विज्ञेया ।

[२] अन्यदपि साधर्म्यं किञ्चिद् वैधर्म्यं चाह—जले प्रवाहः, ऊर्मयः, क्वचिदुभयं च प्रतीयत इति त्रिविधं जलम् । क्वचित्केवल प्रवाहवत्, क्वचित्केवलोर्मिमत्, क्वचित्तूभय-विशिष्टमिति । प्रतरामित्यत्यन्तप्रवाहि, अत्यन्तप्रवाहे चोर्मयो न भवन्ति । क्वचिन्महत्य ऊर्मयः । तत्र प्रवाहो न भासते । क्वचित्तूभयमपि विशिष्टमनुभूयते ।

[३] तथैव बलेऽपि प्रवाहः, उर्मयश्च परिमाप्यन्ते—अविच्छेदेन सततं प्रचलनात् प्रवाहः । बलोपरि बलान्तरारोहणादूर्मयो ग्रन्थयश्च व्यपदिश्यन्ते । सर्वत्रैवोभयं प्रतीयत इति विशेषः । अयं चापरो विशेषः—यज्जलप्रवाहस्य उद्गमस्थानम्, यत्र गत्वा प्रवाहविलयः, तत्परायणं च सर्वत्रैव प्रायेण प्रतीयते । अस्य बलप्रवाहस्य तु कुत उद्गमः, कुत्र वा परि-समाप्तिरिति कदापि केनापि न प्रतीयते । अत एवानाद्यनन्त एवायं प्रवाह आख्यायते श्रुतिस्मृतिषु । एवंविधे वैलक्षण्येऽपि पूर्वोक्तं साम्यमाश्रित्य बुद्धिः परस्मिन् प्रवाहे समर्पयितुं शक्यत एवेति गङ्गामाधारीकृत्य अनुरूपात्रोपासना कर्मप्रवाहविशिष्टस्य ब्रह्मणः संभवतीति ।

[४] अन्यदपि सादृश्यं स्पष्टार्थेन पद्यद्वयेनाह ।

[५] प्रवाहक्रमः क्षणे क्षणे भिन्नः, कदाचित् क्षीणः कदाचिच्च पूर्वस्माद् विलक्षणः प्रतीयत इत्यर्थः ।

[६] जगति बलप्रवाहोऽपि क्वचित् क्षीणः, क्वचिद्विलक्षणश्च प्रतीयते । कदाचिन्नदी-पर्वताद्या महान्तोऽपि पृथिव्यामन्तर्निलीना भवन्ति, कदाचिदरण्यान्यपि न गण्यन्ते—इत्यादि । यथोत्तररामचरिते महाकविना भवभूतिना रामवाक्यमुपनिबद्धम्—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासंयातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ इति ।

[७] बलं क्षणिकत्वात् प्रतिक्षणविलक्षणं भवति, तथापि स्थिररसाश्रयेण अभिन्नवत्

[१]इयान् विशेषः पुनरत्र दृश्यते सरित्प्रवाहोऽस्ति विशेषदिग्गतः।
जगत्प्रवाहे पुनरागमो गमो दिशं विनैवानुपलं प्रवर्तते ॥२४॥
[२]यावत्तु पश्यामि बलं पुरः स्थितं कुतस्तदायातमिदं नवं नवम्।
क्व तद्गतं तन्न विदुः परस्थलं यत्र स्थितं स प्रभवः परायणम् ॥२५॥

---

प्रतीयते, गङ्गादौ पुरः स्थितजलमिव। तत एव तदेवेदमिति प्रत्याभिज्ञाप्युदेति। गङ्गादि-जले स्थानैक्यं प्रत्याभिज्ञाहेतुः। वले तु आश्रयैक्यं हेतुरिति विवेच्यम्।

[१] अथोभयोः प्रवाहयोर्विशेषमुपपादयति—जलप्रवाह एकदिग्गामी दृश्यते, पूर्वस्याः पश्चिमायाम्, उत्तरस्या दक्षिणस्यां वा प्रवाहगतिः स्पष्टमालोक्यते। जगत्प्रवाहे तु काचि-दपि दिङ्नियता नास्ति। सर्वदिक्कोऽयं व्यापकः प्रवाह इति भावः। नव नवानि नामरूप-कर्माणि प्रतिक्षणं सर्वत्राविर्भवन्ति, पुरातनानि च लीयन्ते—इत्यागमगमशब्दाभ्यामुक्तम्। तत्र कश्चिदपि दिङ्नियमस्तु नास्तीति।

[२] अपरमपि विशेषमाह—नामरूपकर्मात्मको जगत्प्रवाहोऽयं कुतः प्रादुर्भवति, विलीय-मानं च कुत्र गच्छति इति परतमं स्थलमपि केनापि न ज्ञायते। यतः प्रादुर्भावः, स प्रभव उच्यते। यत्र तु लयः स परायणपदेनाख्यायते। वलप्रवाहस्य प्रभवः परायणं चोभयमपि न विज्ञायत इति। अत एवानाद्यनन्तः प्रवाहोऽयं शास्त्रैराख्यायते। यद्यपि सृष्टिप्रलयव्यवस्था पुराणेषु गीयते, परं सृष्टिप्रलयावपि प्रवाहान्तःपातिनौ। द्वावपि अवस्थाविशेषौ। एकत्र स्थूलतया परत्र च सूक्ष्मतया अन्तर्हिततया वावस्थितिरिति। सृष्टिरपि प्रलयपूर्विका, प्रलयोऽपि च सृष्टिपूर्वक इति प्रवाहस्यारम्भः कुत्रापि नोच्यते। इतः पूर्वं सृष्टिर्नासीदिति प्रथमारम्भः केनापि कुत्रापि निर्णेतुं न शक्यते। नास्त्येव स इति कुतो निर्णीयेत। रसवले अप्यनादिनी, कालचक्रमप्यनादीति इतः पूर्वं नासीत् सृष्टिरिति कथं निर्णीयताम्। आधार-भूतस्य रसस्य तच्छक्तेश्च नित्यतया जगत्प्रवाहः कदाचिन्नासीदेवेति कथं निर्णीयाताम्? बलं रसजन्यमिति रसादेव प्रवाहः प्रवृत्त इत्यपि न वक्तुं शक्यते अविकुर्वतो रसाद्विकुर्वद्बलोत्पत्ते-रूपपत्तिविरुद्धत्वात्। तस्मादुभयोरपि रसवलयोरन्तरित्वमेव व्याख्यातम्। एकस्य सदैक-रुपता, अपरस्य तु स्वापप्रवोधावित्येव विशेष इति बहुधा निरूपितम्। अग्रे पद्यानि स्पष्टार्थानि। अस्मिन् प्रकरण एतदुक्तम्—अनाद्यनन्तो वलप्रवाहोऽपि मनसि न प्रवेशयितुं शक्यः, मनसः परिच्छिन्नपदार्थग्रहणस्वभावत्वात्। तदाधारो रसोऽपि च न मनोगम्यः निर्धर्म-कत्वादतिसूक्ष्मत्वाच्च। तस्मान्मनोवागतीततारूपेण सर्वधर्मोपपन्नतया चेत्युभयथापि मनोनि-वेशरूपोपासना न संभवति। ततश्च प्रतीकरूपेण सादृश्येन वा जगद्विशिष्टस्य ब्रह्मणः कश्चिद् भाग एवोपास्यः, भागश्च भक्तिरिति भक्त्युपासनाशब्द एक एवादौ प्रवृत्तः। क्रमेण तु पदैकदेशा अपि पदार्थवोधका भवन्तीति सत्या भामेत्यादिवद्भक्तिशब्द उपासनाशब्दश्च पृथक् पृथगपि प्रवृत्तौ। उपास्ये मनोनिवेशेन वस्तुतो जीवपरयोरभिन्नत्वादुपासकोऽपि उपास्य-भागतां गत इति भक्तशब्दोऽप्येतमेवार्थमादाय प्रवृत्तः। मनो निवेशे च प्रेमप्रधानं कारणं भवतीति क्रमेण प्रेम्णि प्रेमकर्तरि चापि भक्तिभक्तशब्दयोः प्रवृत्तिः। स्नेहशब्दोऽपि चिक्कणता-भिधायी संश्लेषहेतोरेव वाचक इति सोऽपि भक्तिपर्यायतया प्रयुज्यते। एकाग्रतासाधने स्मर-णकीर्तनार्चनादावपि साध्यसाधनयोरैक्यादेषां शब्दानां प्रवृत्तिरिति सुसूक्ष्मं विभाव्यं सुधीभिः।

अयं प्रवाहः प्रथमं कदा पुरा प्रावर्तताऽन्तोऽस्य कदेति के विदुः ।
अनाद्यनन्तः सततं सनातनो बलप्रवाहो वहते स एकवत् ॥२६॥

या कर्मधारेह रसे प्रवाहिता सानाद्यनन्ता न विरम्यते यतः ।
तस्मादविश्रान्तनिरन्तरक्रमादनाद्यनन्तं जगदेतदिष्यते ॥२७॥

## (४५) [1]उपासनाधिकरणम्

[2]प्रतीकतो वा प्रतिरूपतो वा दृष्टान्ततो वा यदि तत्र तत्त्वम् ।
आरोप्यते नाम च रूपकर्म्मोपचर्य्यते तुल्यमुपासना सा ॥२८॥

अन्यत्र चान्यस्य च धर्म्मसाम्याद् यद्रूपसांकर्य्यमुदेति दृष्टौ ।
सोपासना भक्तिवशात्[3] तयोः स्युः कर्म्माणि शब्दाश्च धियस्तथैकाः ॥२९॥

यद्दर्पणे पश्यति रूपमेषोऽहमेवमस्मीति करोति बुद्धिम् ।
अन्यं[4] प्रपश्यन् प्रतिपद्यतेऽन्यं भक्त्यैव तत्रार्थमुपैति सत्यम् ॥३०॥

---

[1] अथ प्रसङ्गागतमुपासनातत्त्वमत्राधिकरणे विशदी क्रियते ।

[2] पूर्वस्मिन्नधिकरणे प्रतीके सर्वबुद्धया अनुरूपचित्रे चित्रितपदार्थबुद्धया चेति द्विविधोपासना विवृता । इह तु अनुरूपचित्रे दृष्टान्तशब्दोऽधिको योजितः । चित्रचित्रितयो— र्बिम्बप्रतिबिम्बभावो भवतीति दृष्टान्तशब्दोऽपि तत्रोपादीयते । शब्दभेदमात्रमिदम्, उपासना तु द्विप्रकारैवाग्रे विव्रियते । प्रतीके खण्डे, पूर्णरूपत्वमारोप्य, दृष्टान्तभूते चित्रे वा अश्वगजादि तत्तत्पदार्थत्वमारोप्य तत्तन्नामरूपकर्मभावना या क्रियते, सैव भावनारूपान्तःकरणं वृत्तिरुपोपासनेत्युच्यते । एकदेशे सर्वस्य नामरूपकर्मबुद्धिः, चित्रे चित्रितवस्तुबुद्धिर्वा उपचाररूपा । उपचार आरोपः । भेदज्ञाने सत्यपि अभेदभावनामारोप उपचारो वोच्यते । इयं भावना सम्यङ्मिथ्यासंशयसादृश्यबुद्धिभ्यो विलक्षणेति व्याख्यातपूर्वमस्माभिः । शब्दप्रयोगश्चात्र लक्षणावृत्त्या भवति, सोऽप्युपचारकृत एवोच्यते ।

[3] पूर्वत्र भक्तिशब्दो भागार्थको व्याख्यातः । इह तूपचारोऽपि भक्तिरित्युच्यते । लक्षणामपि भक्तिशब्देन व्यवहरन्ति । दर्पणादौ यत्स्वीयमुखमालोक्यते, तदपि वस्तुतः स्वस्यैव भागः । स्वीया एव प्राणाः किरणरूपेण तत्र समवेता दृश्यन्ते—इत्येव प्रतिबिम्बतत्त्वम् । तथैव चित्रादिष्वपि चित्रलेखकः स्वबुद्धौ चित्रितव्यं प्रतिष्ठाप्य बौद्ध तत्पदार्थभागमेव तत्र लिखतीति भागार्थक एव भक्तिशब्दस्तत्रापि प्रयुज्यते । एवमेव च सर्वत्र सादृश्यमूलिकायां बुद्धौ भक्तिशब्दप्रवृत्तिर्भाव्या । एवंविधे चोपचारस्थले नाम, रूपम्, तद्विषयिणी बुद्धिश्चैकरूपा एव भवन्ति लोकदृष्ट्येति अस्मिन् पद्ये उक्तम् ।

[4] पूर्वार्द्धं स्पष्टम् । अन्यं कंचन सुहृदादिकं पश्यन् तद्बुद्धिं करोतीति सर्वमेतद्भक्त्यपरपर्यायोपचारकृतमेवेत्यर्थः । चित्रे कस्यचित्स्वरूपं दृष्ट्वा तेनैव सत्यं तं पुरुषं परिचिनोतीत्येतदपि दृश्यते । तस्मान्नेयं मिथ्याबुद्धिरित्यर्थः । एतदेवाग्रिमेण पद्येन स्फुटाक्षरेण स्पष्टीकृतम् ।

अयं गजोऽयं महिषोऽयमश्वोऽयं गौरितीत्थं प्रतिरूपकेषु ।
व्युत्पादितो दृष्टिमुपेत्य तेषु प्रपद्यते तान् परमार्थभूतान् ॥३१॥

दृष्टान्तदार्ष्टान्तिकयोः समत्वाद् दार्ष्टान्तिकाभिन्नतयाऽत्र दृष्टिः ।
[1]दृष्टान्तशब्दस्य तथा प्रयुक्तिर्दार्ष्टान्तिके भक्तिरुपासना सा ॥३२॥

[2]वाग्रूपभेदेऽक्षरभावना या याश्वत्थबुद्धिः किल कर्म्मवृक्षे ।
यत्पुण्डरीकं गिरयः समुद्रा भक्त्यैव तत्सर्वमिहोपक्लृप्तम् ॥३३॥

[3]वाग्रूपभेदेऽक्षरशब्दक्लृप्तिर्ब्रह्माक्षरस्थाननिवेशदृष्टचै ।
अन्येषु भेदेष्वपि तेन वाचा तैर्ब्रह्मभेदैः समता समीक्ष्या ॥३४॥

[4]यथा हि तद्ब्रह्म तथैव शब्दः सर्वे विशेषा उभयोः समानाः ।
तेनात्र शब्दे निपुणं निविष्टो ब्रह्मापि तच्छब्ददृशाधिगच्छेत् ॥३५॥

---

[1] दृष्टान्तेन चित्रादिना मुख्ये या बुद्धिः सैवोपासना विज्ञेया । इदानीं सीताराम—राधाकृष्णादिमूर्तिषु यावतारोपासना भारते सर्वत्र प्रचलति, तत्रापि पुराणादिनिरूपितं तादृशं स्वरूपं निर्माय तदाधारेण मुख्येषु रामकृष्णादिषु बुद्धिः स्थाप्यत इति एवंविधैव साप्युपासना । इयमेवोपचाराद्भक्तिः, चित्तस्य तत्रार्पणाच्च उपासनेत्युच्यते, इति विवृतं प्राग् ।

[2] अन्यान्यपि लोकसिद्धान्युदाहरणान्याह । अकारककारादीनां या लिपयः पत्रेषु संनिवेश्यन्ते, ते वाच एव कल्पिता रूपभेदाः, तेषु लिपीकृतेषु अक्षरपदं सर्वैः प्रयुज्यते, सुन्दराण्यक्षराणि निकृष्टान्यक्षराणीत्यादि, ताभिश्च लिपिभिर्वागवयवेषु अक्षरेषु बुद्धिर्गच्छति । 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' (भग० १५ अ०) इत्यादिषु कर्ममयं जगत् वृक्षरूपेण कल्पितम्, तत्र चाश्वत्थबुद्धिर्निवेशिता । भूविद्याशिक्षार्थमादर्शचित्रे ये गिरिसमुद्राद्या लिख्यन्ते पुण्डरीकम्—कमलादि च यच्चित्रे निवेश्यते तेषु च तत्तन्नामैव सर्वैः प्रयुज्यते, तदेतत्सर्वं भक्तिरूपमेव बोध्यम् ।

[3] वस्तुतोऽक्षरमिति ब्रह्मणः पुरुषस्य निर्देश इति पुरुषाधिकरणे विस्तरेण ख्यापितम् । सोऽयमक्षरशब्दो भाष्यमाणाया वाचो वाक्यपदावयवेष्वपि लोकैः प्रयुज्यते 'देवदत्त शब्दे चत्वार्यक्षराणीत्यादि' सोऽयं प्रयोगः साम्यरूपया भक्त्या ज्ञेयः । अक्षरपुरुषस्यात्र वागवयवेष्वक्षरेषु साम्यमस्ति । तदेव बोधयितुमक्षरशब्दोऽत्र प्रयुक्तोऽभियुक्तैः प्राक्तनैः । एतत्साम्यं विज्ञाय एतदक्षरपरा दृष्टिर्ब्रह्मरूपेऽक्षरपुरुषेऽपि गच्छत्विति हि तेषामाशयः । ब्रह्मरूपेऽक्षरे मुख्ये स्थाने बुद्धिनिवेशो भवेदिति तद्दृष्टचै—तद्दर्शनायाक्षरशब्दकल्पनात्रेत्यन्वयः । एवं वक्ष्यमाणेषु वागक्षरभेदेष्वपि वाग्भेदैर्ब्रह्माक्षरे दृष्टिरूपासनारूपा विधेयेत्याशयः ।

[4] द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।

इति चिरन्तनोक्तिरिहार्थतोऽस्मिन् पद्येऽनूदिता । शब्दब्रह्मणि परब्रह्मणि चानेकप्रकारं सादृश्यं वर्तते । तेन शब्दब्रह्म सम्यग् विज्ञाय परब्रह्मण्यपि दृष्टिर्निवेशयितुं शक्यत इत्ययमत्रार्थः ।

[१]स्वरः परः सोऽक्षरमेतदाहुस्त्रिधाऽत्र वर्णः क्षर उच्यते त्रिधा ।
स्वरो ह्युदात्तस्वरितानुदात्तप्रभेदतोऽयं त्रिविधो निरुक्तः ॥३६॥

तदक्रियं स्यादुपसर्जनक्रियं तार्तीयिकं तूपजनक्रियं भवेत् ।
स्पृष्टास्तथान्ये विवृतास्तथापरेऽन्तस्थाश्च वर्णास्त्रिविधा अमी स्युः ॥३७॥

[२]स्वरेऽक्षरं तत्र च वर्ण इत्थं परेऽक्षरं तत्र पुनः क्षरं स्यात् ।
ज्योतिर्हुदात्तं स्वरितो धृतिः स्यात् समा प्रतिष्ठा निहतस्वरेण ॥३८॥

[३]विधर्तुमीष्टेऽक्षरमष्टवर्णानर्द्धार्द्धमात्रान् पुरतश्च पृष्ठे ।
पृष्ठस्थितान् पञ्च पुरःस्थितांस्त्रीन् विधर्तुमीष्टे स्वविकासयोगात् ॥३९॥

---

[१] सादृश्यमेवाधुनाधिकरणसमाप्तिपर्यन्तं विवृणोति । अस्माकं वर्णविभागे स्वरः, व्यञ्जनमिति द्विविधत्वं प्रसिद्धम् । तत्र केवला अकारादयः स्वरा इत्युच्यन्ते । व्यञ्जनात्परत्वेन प्रयुक्ता व्यञ्जनविशिष्टाः स्वरास्तु अक्षरपदेनोच्यन्ते । 'वागित्येकमक्षरम्' 'हृदयमिति त्र्यक्षरम्' इत्याद्यासु–श्रुतिषु व्यञ्जनसहितस्य स्वरस्यैवाक्षरत्वमाश्रित्य 'एकम्' 'त्रि' इति संख्या निर्दिष्टा । वर्णास्तु वागित्यत्र वकाराकारगकारास्त्रयः, हृदयमित्यत्र च सप्त सन्तीति । स स्वरः त्रेधा–त्रिप्रकार उक्तः—उदात्तः, अनुदात्तः, स्वरितश्चेति । तत्रापि पुनस्त्रैविध्यं प्रत्येकम्—अक्रियम्, उपसर्जनक्रियम्, उपजनक्रियं चेति । एषामुदाहरणान्यग्रे वक्ष्यन्ते । अथ अक्षरे अन्तर्भूता ये वर्णाः, तेऽपि त्रिविधाः—स्पृष्टाः, विवृताः, अन्तस्थाश्चेति । इयं पद्यद्वयस्य व्याख्या ।

[२] अथ ब्रह्मणा साम्यमुदाहरति—यथात्र एकाकिनि असंबद्धे स्वरे आश्रितं व्यञ्जनसहित स्वरूपमक्षरम्, तत्राश्रिताश्च विविधा वर्णाः, तथा अव्यये पुरुषे असङ्गे अक्षरपुरुष आश्रितः, तत्र च विविधभेदभिन्नाः क्षरपुरुषाः—इत्येकं साम्यम् । यथा च स्वरस्य उदात्तादि त्रिरूपता उक्ता, तथा मुख्यस्याव्ययपुरुषस्यापि मनःप्राणवाङ्मयस्य सर्ववस्तुषु प्रतिष्ठिता ज्योतिः, विधृतिः, प्रतिष्ठा इति त्रिभी रूपैरत्र ग्रन्थे रसाधिकारे प्रतिपादिता । तत्र साम्याज् ज्योतिरुदात्तं रूपम्, विधृतिः स्वरितम्, प्रतिष्ठा तु निहितेन अनुदात्तेन समा । एतत्साम्यं ज्योतिरादिनिरूपेण पूर्वोक्तेन संगमयितव्यम् ।

[३] यथा च ब्रह्मपरिस्थितावक्षरं बहूनि क्षराणि धत्ते, तथा वाक्परिस्थितावपि स्वरोऽक्षररूपे अष्टौ वर्णान् अर्धमात्रामितकालान् व्यञ्जनरूपान् विधर्तुं समर्थः । तत्र पृष्ठस्थितान् पञ्चवर्णानप्यग्रे स्थितः स्वरो धारयितुं समर्थः । यथा 'कार्त्स्न्यम्' इत्यत्र र, त, स, न, य इति पञ्चव्यञ्जनानि अग्रे स्थितो अमित्यकारो धत्ते । पञ्चपर्यन्तानि व्यञ्जनानि अग्रे स्थितस्य स्वरस्याधारेण स्थातुं प्रभवन्तीति भावः । इतोऽधिकानि तु पृष्ठस्थानि न धर्तुं समर्थः स्वरः । अग्रे स्थितानि तु त्रीण्येव व्यञ्जनानि धर्तुं समर्थः । यथा ऊर्ग्भिरित्यादौ रेफगकारभकारानग्रे स्थितानूकारो धत्ते । अत्र अग्रे स्थितेन इकारेण ते धृता इति वक्तुं शक्यं स्यात्, परं 'आर्ट्स्' 'एक्ट्स्' इत्यादौ तु त्रीणि व्यञ्जनानि पूर्वस्थितेन स्वेरेणैव धार्यन्त इत्यत्र न कोऽपि संशयः । इतोऽधिकान् वर्णान् न विधर्तुं शक्तः । तदित्थं पञ्चपृष्ठस्थान्, त्रींश्च पुरःस्थानिति संभूय अष्टौ वर्णान् धर्तुं स्वरेऽक्षरे सामर्थ्यम् । 'त्स्न्यर्ट्स्' इति पदैक-

[१]पृष्ठस्थितांतस्त्र विधारयत्तानेकं बहून् द्वावपि तल्लघु स्यात् ।
विधारयेच्चेत् पुरतस्तु वर्णं कथंचिदप्येकमिदं गुरु स्यात् ।।४०।।
[२]न पृष्ठतो वा पुरतो विधारयेत् तदक्रियं स्याल्लघु चैतदक्षरम् ।
चेत् पृष्ठतो धारयते न चाग्रतो लघ्वेव तत् स्यादुपसर्जनक्रियम् ।।४१।।
[३]यस्त्वग्रतो धारयतेऽथ वर्णान् गुरुः स एवोपजनक्रियत्वम् ।
द्विधैव तेनैतदथाक्षरं विदुः स्याद्वा लघु स्याद् गुरु नाधिकं ततः ।।४२।।
[४]प्रज्ञाः क्षराः स्युर्विवृतास्तथा मताः प्रकाशते तत्र तदक्षरं स्फुटम् ।
आभासते ज्योतिरपीह तत्परं प्रज्ञा ततो ज्योतिरिति प्रचक्षते ।।४३।।

---

देशोच्चारणे एकेनैवाकारेण अष्टौ व्यञ्जनानि धृतानिति द्रष्टव्यम् । इदं विधारणं स्वरस्य विकासः । अत्र संख्यानियमसादृश्यं ब्रह्मरूपेऽक्षरे नास्ति, तत्तु अनन्तानि क्षराणि धत्ते । केवलं वाग्रूपस्य स्वरस्य सामर्थ्यबोधनाय कौतुकार्थमिदमुपात्तं ग्रन्थकृता । अत्र वर्णविधारकत्वम्, तत्र च क्षरविधारकत्वमिति तु सादृश्यं स्पष्टमेव । ब्रह्माक्षरमपि पञ्चभूतानि त्रीणि च सत्त्वरजस्तमांसि धत्ते इति वा सादृश्यमूह्यम् ।

[१] अत्रापरं विशेषमाह—पृष्ठस्थितानेकानपि वर्णान् विधारयन् स्वरो लघुरेव गण्यते, न गुरुत्वं याति । पुरःस्थितं तु एकमपि वर्णं विधारयन् गुरुत्वं प्रतिपद्यते । युक्ताक्षरे परे पूर्वस्य गुरुत्वं मन्यत इति छन्दःशास्त्रनियमोऽत्रानुसन्धेयः ।

[२] पूर्वोक्ते हेतुं वदन् अक्रियत्वादीन् सप्तविंशपद्योक्तान् त्रीन् धर्मानप्युदाहरति—यः स्वरः पूर्वस्थितमग्रे स्थितं वा कमपि वर्णं न धारयति—यथा शुद्धः 'अ' इति 'इ' इत्यादि वा, तदक्रियमुच्यते । विधारणक्रिया तत्र नास्तीति । अक्रियत्वाच्च स लघुरेव मन्यते । यदि च पृष्ठस्थानेव वर्णान् धारयति, न त्वग्रे स्थितान्, तदा तदुपसर्जनक्रियं मन्यते । अस्ति तत्र विधारणा क्रिया, परं सा उपसर्जनीभूता, न तु प्राधान्यं प्राप्ता । ततश्च सोऽपि स्वरो लघुरेव गण्यते । न हि तत्र स्वरे बलविशेषोऽनुभूयत इत्यनुभवेन प्रत्येतव्यम् ।

[३] यस्तु स्वरोऽग्रस्थितान् व्यञ्जनरूपान् वर्णान् धारयति, स उपजनक्रियः । तत्र उपजनरूपेण आगन्तुकरूपेण क्रिया आधीयते । अग्रस्थानि व्यञ्जनानि धर्तुं बलविशेषस्तत्राघातव्यो भवतीत्यप्यनुभवेन प्रत्येतव्यम् । तादृश क्रियाया आधानादेव तदक्षरं गुरुव्यञ्जनविशिष्टस्वररूपं गुरू भवति । भार इव तत्र प्रतीयते । भारसहस्य च गुरुत्वं प्रसिद्धमेवेति । ये चापि 'आ' 'ई' 'ऊ' इत्याद्या दीर्घाः स्वरा उच्यन्ते, तेऽपि लघुद्वययोगेन जाता इति परः स्वरः पूर्वेण स्वरेण विधृतः, गत एव तत्र गुरुत्वम् । प्लुते एकेन लघुनाऽग्रस्थितसजातीय—द्विवर्णधारणमिति तदपि गुर्वक्षरमेवोच्यते । एवं वर्णान्तरविशिष्टवर्णरुपमक्षरं लघु, गुरु, इति द्विधैव मन्यते ह्रस्वदीर्घप्लुतवदत्र तृतीयो विभागो न गण्यत इत्यर्थः । तथैव ब्रह्माक्षरमपि द्विधा नभ्यम्, पृष्ठ्यं चेति । ब्रह्मा, विष्णुरिन्द्रश्चेति त्रिकलं नभ्यम्, अग्नीषोमात्मकं द्विकलं तु पृष्ठ्यमिति व्याख्यातपूर्वं गद्यमये पुरुषप्रपञ्चाधिकरणे । तत्र नभ्यं लघु मन्यते, पृष्ठ्यं तु पुर उत्पन्नक्षरविधारकत्वाद्गुरु—इति सादृश्यमनुसन्धेयम् ।

[४] अथ वर्णानां यत् त्रिविधत्वमुक्तम्, तस्यापि सादृश्यं विव्रियते । वर्णा अक्षरेषु विधृताः क्षरपुरुषस्थानीया इति प्रागुक्तम् । ते वर्णास्त्रिविधा उक्ताः—विवृताः, स्पृष्टाः,

[१]वर्णास्तदा ये विवृतास्त एव तल्लघ्वक्षरत्वं गुरुतां च गृह्यते ।
प्रकाशते तत्र परः स्वरो यतस्ततो विदुस्तान् विवृतान् स्वरानिति ॥४४॥

[२]स्पृष्टेन भूतं विवृतेन प्रज्ञान्तःस्थेन च प्राण इहानुलक्ष्यः ।
यदक्रियं तत्तदथोपसर्गक्रियं तथैवोपजनक्रियं स्यात् ॥४५॥

[३]अन्तःस्थतां ते विवृतेषु नामिनः स्वरा यथा यान्ति तथा धियोऽप्सुभूः ।
प्राणत्वमायान्ति पुनः प्रसारणे प्राणास्तु चान्तःस्थवदीशते क्वचित् ॥४६॥

---

अन्तःस्थाश्चेति । अन्तःस्था एव ईषत्स्पृष्टा इत्युच्यन्ते । शषसहामीषद्विवृत्वं तु व्याकरण-प्रक्रियायामिकारशकारादीनां सवर्णसंज्ञावारयितुं महाभाष्यकृता नाज्झलाविति पाणिनीयसूत्रं विनैव लाघवेन प्रक्रियानिर्वाहायाश्रितम्, तथैवाकारस्य संवृतत्वमपि व्याकरणप्रक्रियोपयोगीति वस्तुतस्त्रय एवाभ्यन्तरप्रयत्नभेदकृता वर्णभेदाः । ब्रह्मपरिस्थितौ अक्षरधृतस्य क्षरस्यापि प्रज्ञा-प्राण-भूतैस्त्रिरूपता । तत्र प्रज्ञायां विवृतसादृश्यम् । वर्णेषु विवृतत्वं जिह्वास्पर्शा-भावकृतं व्यवह्रियते शिक्षासु, प्रज्ञायान्तु विवृतत्वं प्रकाशकत्वम् । प्रज्ञायामक्षरं स्फुटं प्रकाशते, प्रज्ञयैवाक्षरज्ञानं जायत इत्यर्थः । नैतावदेव, किन्तु परं ज्योतिः—परज्ञानमपि प्रज्ञायामेव प्रकाशते । प्रज्ञारूपेण वृत्त्यात्मकज्ञानेनैव वयं मुख्यं ज्ञानमपि परिचिनुम इत्यर्थः । परस्य ज्योतिषोऽत्र प्रकाशनात् प्रज्ञापि ज्योतिरुच्यते ।

[१] वस्तुतो वर्णेष्वपि विवृत्वं प्रकाशकत्वमेवेति साम्यपूर्त्यै आह । वर्णेषु स्वरा एव विवृता उच्यन्ते । तत्रैव च लघुत्वं गुरुत्वं चापि भवतीत्यत्रोचाम । व्यञ्जनधारकत्वेन लघुत्वं गुरुत्वं च व्याख्यातम् । तदेतल्लघुत्वगुरुत्वादि अक्षरनिष्ठं स व्यञ्जनेषु स्थितत्वात् मुख्यः शुद्धः स्वरस्तत्राक्षरे प्रकाशते । तस्मात् प्रकाशरूपत्वादेव स्वरा विवृता इति ।

[२] इत्थं प्रज्ञाविवृतयोः साम्यमुक्त्वा, अन्ययोरपि क्षर-वर्णभेदयोः साम्यमाह—स्पृष्ट-वर्णसमूहेन भूतवर्गस्य साम्यम्, स्थूलत्वात् । यथा च स्पृष्टेषु जिह्वास्पर्शः । तथा भूतान्यपि चत्वारि स्पर्शवन्तीति च । शुद्ध आकाशे यद्यपि न स्पर्शः, तथापि पञ्चीकृते तु अल्पः स्पर्शो मन्यत एव । तत एव च शब्देनापि तीव्रतरेण लघुकाचाद्यास्त्रुटयन्ति । प्रज्ञाविवृतयोः साम्यं तूपपादितमेव पूर्वपद्ये । अन्तःस्थेन च वर्णसमूहेन प्राणवर्गस्य सादृश्यम् । प्राणस्यापि प्रज्ञाभूतयोर्मध्ये स्थितत्वात् । प्रज्ञापेक्षया स्थूलत्वाद्भूतापेक्षया लघुत्वाच्च । अपरमपि सादृश्यमग्रिमे पद्ये वक्ष्यते । किं च अक्रियत्वादिकं यल्लघुगुर्वोरक्षरयोर्व्याख्यातम्, तदपीहा-स्तीत्याह—प्रज्ञा सर्वथा क्रिया रहिता । भूतानि तु उपसर्जनक्रियाणि, तत्र क्रियाया निगूढ-त्वात्, परसंसर्गेणैवोदयात् । प्राणस्तु उपजनक्रियः—स्वयं क्रियाशीलोऽन्यत्रापि स्वक्रियामर्प-यतीति । सामान्ये नपुंसकमिति नपुंसकनिर्देशः ।

[३] अन्यदपि अन्तःस्थानां प्राणसादृश्यमुपपाद्यते—नामिनः स्वरा इकारोकाराद्या विवृता यथा क्वचिदन्तःस्थताम्—यकारवकारादिरूपतां सुद्ध्युपास्यः मध्वरिरित्यादिषु गच्छन्ति । पुनश्च संप्रसारणेन इज्यते इत्यादौ अन्तःस्थतां परित्यज्य विवृत्वं गच्छन्ति । तथा प्रज्ञा अपि क्वचित्प्राणत्वमायान्ति, पुनश्च प्राणरूपतां विहाय प्रज्ञारूपतां गच्छन्तीति महत्सा-दृश्यम् । 'यो वै प्राणः, सा प्रज्ञा" इत्याद्यासु श्रुतिष्वत एव प्रज्ञाप्राणयोरेकत्वमेव श्रावितम् ।

[1]तदित्थमन्येऽपि तथैव भावाः शब्देषु ते तद्वदिहापि वेद्याः ।
शब्दे खलु ब्रह्मणि यः प्रविष्टः सम्यक् परं ब्रह्म च सोऽधिगच्छेत् ॥४७॥

## (४६) संतानाधिकरणम्[2]

[3]अथ प्रवाते पुनरूर्मयो या उत्थानमासां पतनं च रूपम् ।
रसेऽमृते ब्रह्मणि ता अनन्ता उत्थाय चोत्थाय पतन्ति तस्मिन् ॥४८॥

[4]उत्तिष्ठते ब्रह्मणि सृज्यतेऽसौ पतत्यथो तत्र विलीयतेऽसौ ।
उत्थाय यावत् पततीह तावत् कर्मैतदेकं प्रथितं रसेऽस्मिन् ॥४९॥

[5]एकैककर्मण्यपि कर्मभिन्नं तत्रापि भिन्नं पुनरत्र भिन्नम् ।
ऊर्म्यां परोर्मिः पुनरत्र चोर्मिः तत्रापि चोर्मिः पुनरन्तरन्तः ॥५०॥

[6]सोर्मिर्हि सान्तानिककर्मदिष्टं क्षुद्रं बृहच्चैतदनन्तभेदम् ।
क्षुद्रं बृहत्यन्तरितं मतं वा क्षुद्रं बृहच्चेति पृथक् स्थितं वा ॥५१॥

---

[1] उपसंहारः—अन्यदपि सादृश्यमेवं ब्रह्मणः शब्दब्रह्मणश्चान्वेष्यम् । तत एव च शाब्दे ब्रह्मणि निष्णात इत्याद्या पूर्वोदाहृता महतामुक्तिः प्रवृत्तेति । तथा चानेनैव हेतुना क्षरसमूहरूपैर्मन्त्रादिभिः परब्रह्मोपास्यत इति उपासनाप्रकरणमुपसंहर्तव्यमिति ।

[2] प्रसङ्गागतमुपासनातत्त्वं निरूप्य पुनः प्रकृतमनुसरति—क्षणिकम्, सान्तानिकम्, प्रावाहिकमिति त्रिरूपं कर्मोक्तम् । तत्र प्रावाहिकं विवृतम्, सान्तानिकमिदानीं विवृणोति ।

[3] वायुना जले तरङ्गमालावद् ब्रह्मणि कर्मणां सन्तानः सदा प्रचलतीति स्पष्टोऽयमत्रार्थः ।

[4] कर्मण उत्थानमेव कर्मसृष्टिरुच्यते, पतनमेव च तद्विलयः । उत्थानपतने एव बलकृते रसाधारेण भवतः न तु अभिनवस्य बलस्योत्पत्तिः, तस्यापि प्रवाहनित्यत्वात् । उत्थानात् पतनपर्यन्तमेकमेव कर्मोच्यते, तत् सान्तानिकमित्यर्थः । वस्तुतस्तु उत्थानपतन-पर्यन्तं क्षणिकानि शतशः कर्माणि जायन्ते, परं तानि सन्तानरूपेणैकीकृत्य एकमेव कर्म तत्र व्यवह्रियत इति भावः ।

[5] उक्ते सन्तानरूपे एकैकस्मिन् कर्मणि विभिन्नानि बहूनि कर्माणि भवन्ति । यथा लोके एकस्यां पचि क्रियायां चुल्लीप्रज्वालनस्थाल्यधिश्रयणादीनि विभिन्नानि कर्माणि, तत्रापि चावान्तराणि कर्माणीति प्राक् कर्मरूपनिरूपणे विवृतमस्माभिः । जलेऽप्येवमेव महत्सु तरङ्गेषु अवान्तराः, तत्रापि चावान्तरास्तरङ्गा भवन्तीति दृष्टान्तेनैव कर्मतरङ्गेष्वपि बुद्धिः संचारणीया ।

[6] ऊर्मिगर्भिता एकैका महत्यूर्मिः सन्तानकर्मनाम्ना निर्दिश्यते । तत्र कश्चित्सन्तान-श्चिरकालव्यापी बहुप्रदेशव्यापी वा महान् भवति, कश्चित्तु अल्पकालेऽल्पप्रदेशश्च क्षुद्रो भवति । तत्रापि क्वचित् क्षुद्रो महत्यन्तर्भवति, कश्चित्तु क्षुद्रो महांश्च पृथक् पृथगेवाव-तिष्ठेते । यथा जगति महान्तः पर्वताः, अनेके च तद्गर्भे क्षुद्रा पर्वताः, क्वचित्तु क्षुद्राः पर्वता महतः पर्वताद्भिन्ना एवेत्यादि रीत्योह्यम् ।

[१]महान् य उत्थाननिपातभङ्गो ब्रह्माण्डसर्गः प्रथितः स एकः ।
ब्रह्माण्डसर्गाः प्रभवन्त्यसंख्या भिन्नास्तदुत्थाननिपातभङ्गी ॥५२॥
[२]धीप्राणवाङमारुतसूर्यचन्द्रपृथ्वीति सप्ताऽवयवोत्थितिः स्यात् ।
पृथ्वी पुनर्धीत्वमुपेत्य लीना रसे भवेत् तत्पतनं महोर्म्याः ॥५३॥
[३]सूर्योद्भवोऽन्या पुनरुत्थितिर्मता सूर्यस्य नाशः पतनं तदन्तरे ।
तत्रापि पृथ्वी यदभूत् तदुत्थितेः पृथ्वीविनाशः पतनं तदन्तरे ॥५४॥
[४]स एष रामः समभूत् तदुत्थितिर्मृतः स रामः पतनं तदुच्यते ।
[५]इत्थं पृथक्त्वेन विभिन्नकर्मणामुत्थानपातानवधारयन्ति हि ॥५५॥

---

[१] एवं रीत्या सर्वतो महान् य उत्थानपतनरूपस्तरङ्गः, स एव ब्रह्माण्डसर्ग इति विज्ञेयः। एवं विधा ब्रह्माण्डसर्गा अप्यनन्ताः, तस्मादेवंविधा महान्तस्तरङ्गा अप्यनन्ता विज्ञेयाः स्युः। सर्वेषां समष्टिश्च प्रवाह इति प्राक्प्रतिपादितमेव।

[२] महान् य उत्थानादिपतनान्तः सन्तानः स ब्राह्माण्डसर्गरूप इति प्राक्तने पद्ये उक्तम्। तत्र ब्रह्माण्डोत्पादकमहातरङ्गे कियन्तोऽवान्तरास्तरङ्गा इत्याह। रसस्य बलजन्येन कर्मणा संबन्धे प्रथमं धीर्नाम मन उदेति, तदनु प्राणः, तदनु वाक्। इमा अव्ययपुरुषस्य कला इति प्राक् पुरुषाधिकरणे व्याख्याताः। एताः सर्वसृष्टिसाधारण्यः। क्वचिदपि सृष्टिरेताभिर्विना नोदेतीति सर्वत्र प्रथममासां गणनमावश्यकम्। तदनु मारुतो वायुः। वायुपदेनाक्षरपुरुषकलारूपं सृष्ट्युपादानं सोमं लक्षयति। अयमपि सर्वसृष्टिसाधारणः। अग्रे सूर्यः, चन्द्रः, पृथ्वीति त्रयः पिण्डाः प्रत्येकं ब्रह्माण्डे भिन्ना भिन्ना उत्पद्यन्ते। एषां सप्तानामवयवानामुत्थानेन प्रत्येकं ब्रह्माण्डसृष्टेः पूर्णता भवति। एतत्सप्तावयवक ब्रह्माण्डोत्पादक एकैको बलस्य महानूर्मिः, पृथिव्युत्पादनपर्यन्तमूर्म्या उत्थानम्। अथ पतने तु पृथ्वीचन्द्रौ सूर्ये स मारुताह्वय सोममण्डले, स च वाक्प्राणमनःसु क्रमेण लीयते—इति उत्थानस्यान्तिमा सीमा भूमिः क्रमेण वृद्धिरूपतां यावद्यायात्, अर्थात् क्रमेण मनसि प्रलीना भवेत्, तावत्पतनरूपो महांस्तरङ्गः।

[३] अथ तत्र महति तरङ्गेऽवान्तरांस्तरङ्गानाह। प्रत्येकं ब्रह्माण्डे प्रधानभूतसूर्यजनकं द्वितीयस्य अवान्तरतरङ्गस्य उत्थानम्। एकैकसूर्यसंबद्धमेकैकं ब्रह्माण्डं भवतीति। सूर्यस्य लयश्च तस्य तरङ्गस्य पतनम्। तत्र च पृथिव्या उत्पत्तिस्तदवान्तरस्तरङ्गोत्थितिः, पृथिवीनाशश्च तस्य तरङ्गस्य पतनावधिः।

[४] अथ पृथिव्यां ये प्राणिनो मनुष्याद्या उत्पद्यन्ते, ते अवान्तराणामप्यवान्तरास्तरङ्गाः। यथा कश्चिद्रामनामको मनुष्यः प्राणी, तस्योत्पत्तिः पृथिव्यवान्तरतरङ्गस्योत्थानम्। तन्मरणं च तस्य तरङ्गस्य पतनमिति। इत्थं प्रत्येकस्य जडचेतनात्मकस्योत्पत्तिविनाशरूपाः पृथिव्युत्पादकतरङ्गान्तर्गता एव बोध्याः।

[५] अथ मनुष्यादि प्राणिनां पृथक् पृथक् क्रिया एकैकमनुष्योत्पादककर्मतरङ्गस्याप्यवन्तरास्तरङ्गाः। ता विभिन्नाः क्रियाः पूर्वार्द्धेनोदाहरणरूपेणोक्ताः। आसां क्रियाणामुत्थानं पतनं च भिन्नं भिन्नमिति विभिन्नानि तानि कर्माणि। एकैकक्रियाऽप्यनेकक्रियासमष्टिरूपा,

ब्रूते पचत्येति शृणोति भुङ्क्ते निद्रातितिष्ठत्यवलोकते वा ।
एतानि सर्वाणि बलानि भिन्नस्वोत्थानपातानि भवन्ति लोके ॥५६॥

पाकक्रियोत्थाननिपातभङ्गे नानाक्रियोत्थाननिपातभङ्गाः ।
तदन्तरन्तः क्रमतस्तदन्ते तूत्थानपाताः क्षणिके पृथक् स्युः ॥५७॥

## (४७) क्षणिकाधिकरणम्

[१]उच्चावचानेकविधेषु तेषु सान्तानिकेषु क्षणिकानि सन्ति ।
सुशृङ्खलाबद्धनिजक्रियाणि बहुक्षणावृत्तिरतोऽस्ति तेषाम् ॥५८॥

[२]सान्तानिकान्यप्यखिलानि धारावाहीनि कर्माणि भवन्ति किन्तु ।
सादीनि सान्तानि ततस्तृतीयात् प्रावाहिकाद्भिन्नतराणि तानि ॥५९॥

[३]अथाखिलानि क्षणिकानि तानि सोत्थानपातानि भवन्ति किन्तु ।
धाराप्रवाहीणि न सन्ति तस्मात् सान्तानिकाद् भिन्नतराणि तानि ॥६०॥

[४]बलं तु सान्तानिकमत्र भिद्यते तथापि नेदं क्षणिकैर्विना कृतम् ।
प्रावाहिकं चापि बलं प्रभिद्यते विना तु सान्तानिककर्मभिर्न तत् ॥६१॥

---

तत्रान्तर्भूतानां क्रियाणामप्युत्थानपतने भिन्ने भिन्ने इति पूर्वं व्याख्यातमेव पुनः क्रमस्पष्टीकरणायोक्तमग्रिमे पद्येऽपि । अस्याश्च परम्पराया अन्तिमोऽवधिः क्षणिकं कर्मैवेत्युपसंहृतम् ।

[१] अथ सन्तानगतानि क्षणिकानि कर्माणि सन्तीति पूर्वोक्तमेव प्रक्रमागतं पुनरावर्त्यते । क्षणिकानां सन्तानः कथमिति समाहितपूर्वमपि उत्तरार्द्धेन पुनः स्मार्यते । क्षणिकानां व्यापारापरपर्यायक्रियारूपं निजं स्वरूपं रसमाधारीकृत्य शृङ्खलाबद्धम् अव्यवहितक्रमरूपेण प्रचलद् भवतीत्यतः क्षणिकानामपि बहुक्षणवृत्तितारूपः सन्तानः प्रतीयते । यथा अव्यवधानेन पुनः पुनः पादोत्थापनमग्रे पादन्यसनं चेति क्षणिकानि कर्माणि पादाश्रयेण क्रमबद्धानि प्राप्यस्थानपर्यन्तं गतिरूपं सन्तानमुत्पादयन्तीत्यादि विवृतपूर्वम् ।

[२] अथ कर्मणां तिस्रो विधाः किमर्थं स्वीक्रियन्ते—इति प्रश्नसमाधानाय तिसृषु विधासु परस्परं साम्यं वैधर्म्यं च विव्रियते । सान्तानिकं कर्मापि धारावाहि, प्रावाहिकमपि धारावाहि इत्युभयोः साम्यम् । किन्तु सान्तानिकं सादि सान्तं च । प्रावाहिकं तु अनाद्यनन्तमित्यनयोर्भेदः । एकैकः कर्मसन्तानः पाकगमनादिरूपः समयविशेष एव प्रारभ्यते, स्व स्व फलं पाकं प्राप्य स्थानसंयोगं वोत्पाद्य विरमति । एवं महासन्तानानामपि पृथिव्याद्युत्पादकानामारम्भः पृथिवीनाशे समाप्तिश्च पूर्वाधिकरणे व्याख्याता । कर्मप्रवाहस्तु कदापि न निवर्तते, सृष्टिप्रलयावनवरतमुत्पादयतीति प्रवाहाधिकरणे विवृतम् । अस्मादेव भेदात् सान्तानिकं प्रावाहिकं च पृथक् पृथक् परिगण्यते ।

[३] क्षणिकानां कर्मणामुत्थानपतञ्च, तथैव सान्तानिकानामुत्थानपतने—इति द्वयोः साम्यम् । किन्तु सान्तानिकेषु धारा अर्थात् क्रमबद्धा परम्परा दृश्यते । क्षणिकानि त्वेकैकव्यक्तिरूपाण्येवेति न तत्र धारा—इति सान्तानिकस्य क्षणिकस्य च वैषम्यम् । तेन द्वे पृथक् पृथगुक्ते ।

[१]नित्यानुवृत्तक्षणिकस्य दृश्यते हेतुर्न तूत्थाननिपातयोः पृथक् ।
प्रावाहिकस्यापि पृथङ्न दृश्यते हेतुः प्रवाहे सततानुवर्तिनि ॥६२॥

सान्तनिकानामुभयं तदिष्यते सहेतुकं यत् तदनित्यमिष्यते ।
[२]यत् साधकं बाधकमप्यमुष्य तद् बलं बलस्येति विचित्रतेक्ष्यते ॥६३॥

[३]ज्योतिर्मयो मूलरसः प्रतिष्ठितः स सोत्क्रमः स्यादशनायया कृतः ।
तत्राशनायोत्क्रमते रसस्त्वयं सर्वत्र तस्यै स्थित एव लभ्यते ॥६४॥

[४]वायुर्यथाकाशगतः समन्ततः परिभ्रमन्नम्बरतो न हीयते ।
मृत्युस्तथैवाऽमृतगः स उत्क्रमं गतोऽपि नैतेन रसेन हीयते ॥६५॥

---

[१] अत्र कर्मप्रकरणे बलपदं बलजनिते कर्मण्येव प्रयुक्तम् । एवं त्रयाणां भेदेऽपि क्षणिकैर्विना सन्तानो न संभवति, सन्तानान् विना च प्रवाहो न संभवतीति उत्तरोत्तरस्य पूर्वं पूर्वाविनाभावोऽवश्यमेष्टव्य इति भावः । क्षणिकं कर्म स्वाधारे कुतोऽकस्मादुत्पद्यत इत्यत्र हेतुर्न ज्ञायते । ननु प्राणिचेष्टारूपं कर्म आत्मप्रयत्नादुत्पद्यते, अङ्कुरादिषु च प्रसरण—कर्म वायुजलसंयोगादेर्जायत इति हेतुः सर्वत्र दृष्ट एवेति चेत्सत्यम् । सप्रयत्नोऽप्येकं मनसः प्राणस्य वा कर्मैव, तत्कुतो जायते । इच्छयेति चेदिच्छापि मनसः कर्म, तत् कुत उदेति ? ज्ञानादिति चेत्, सत्यपि ज्ञाने कदाचिदिच्छा भवति, कदाचिन्न भवतीति ज्ञानं केवलं हेतुतया निर्धारयितुं न शक्यते । तदित्थं परम्पराविचारे आद्यस्य कर्मणो हेतुः सर्वत्र न वक्तुं शक्यः । सृष्टयादौ तु बलजन्यं कर्म कुतः प्रवृत्तमिति नैव निर्धारयितुं शक्यम् । प्राण्यदृष्टवशादित्यादि कल्पनाविजृम्भितमेव । अदृष्टस्य साक्षात्क्रियाजनकतायाः क्वाप्यदृष्टत्वात् । निमित्तकारणमात्रमस्तु प्राण्यदृष्टम् । उपादानकारणन्तु नैव शक्यं विवेचयितुम् निर्विकारस्य रसस्योपादनत्वासंभवात् । अन्यस्य च कस्यापि तदात्वे असत्त्वादिति हेत्वदर्शनमत्र सुष्ठूक्तम् । तथैव प्रवाहः सततमनुवर्तत ति प्रतिपादितत्वात्तदप्यहेतुकम्, हेतुमतः कदाचित्कत्वप्रसङ्गात् । ततश्च तदप्यज्ञातहेतुकत्वं क्षणिकप्रावाहिकयोः साधर्म्यम् । सान्तानिकस्य तु उत्थानपतने सहेतुके । क्षणिकानां शृङ्खलैव तदुत्थाने हेतुः, फलसिद्धिश्च पतने हेतुरिति तेन सहोभयोर्वैधर्म्यमित्युत्तरपद्य उच्यते ।

[२] कर्मणोऽन्यमपि धर्ममाह—एकं कर्म क्वचित् कर्मान्तिरस्य साधकं भवति, यथा काष्ठानां संयोजनं प्रज्वलने साधकम् । किञ्चित्तु कर्मान्तरस्य बाधकं भवति, यथा काष्ठादेर्हस्तेन ग्रहणं पतनबाधकम्, काष्ठानां पृथक्करणं च प्रज्वलने बाधकमित्यादि । इयं विचित्रतापि कर्मणि दृश्यते । अत्र प्रकरणे बलजनितकर्मण एव लक्षकमित्युक्तमेव पूर्वम् ।

[३] कर्मणां सन्ताने प्रवाहे चापि रसो निर्विकार इति प्रथमेऽधिकारे निर्विकाराधिकरणे विस्तृत्य प्रतिपादितमिह पुनः स्मार्यते—मूलभूतो रसो ज्योतिर्मयः—ज्ञानस्वरूपः, प्रतिष्ठितः—सततमेकरूपश्च । यदप्यशनायावशात्तस्य उत्क्रमणं प्रतीयते, तदुत्क्रमणमप्यशनायाया एव । यत्राप्युत्क्रम्याशनाया गच्छेत्, तत्रैव रसस्तु स्थित एव विभुत्वादिति तस्योत्क्रमणं न शक्यते कल्पयितुम् ।

[४] उक्तेऽर्थे दृष्टान्तमाह—यथा वायुराकाशे प्रचलति, आकाशो वायोराधारः । परं वायुरेव प्रचलित, स यत्र गच्छेत्, आकाशस्तत्रापि स्थित एवेति आकाशचलनं न कल्पनीय

## (४८) कर्मबन्धाधिकरणम्

[१]स्वल्पाशनाया रसगाप्यपूर्णा नित्यं रसायोत्क्रमते परस्मै ।
तावद्रसं प्राप्य निवर्तमाना पुना रसायोत्क्रमते परस्मै ॥६६॥
संप्राप्य संप्राप्य रसं निवर्तते तस्या निवृत्तौ स रसोऽवशिष्यते ।
आत्मन्वितामेति न यावदुत्क्रमे तावद्वृथैवोत्क्रमते निवर्तते ॥६७॥
[२]यथा तरङ्गा उदके भवन्तो वृथैव नाशं परियन्ति भूयः ।
वाय्वम्बुबन्धेन तु फेनभूता आत्मन्विनः पोषकृतः प्लवन्ते ॥६८॥
[३]सग्रन्थिबन्धेन तथा कृतात्मतां गताः स्ववृद्ध्यै प्रभवन्ति ते पुनः ।
मृत्यूत्क्रमाः प्राप्य रसं मुहुः क्रमादपूर्णमात्मानमिवाभरन्ति हि ॥६९॥
[४]पूर्णं पुरा बन्धगतं च पूर्णं पूर्णात्पुनः पूर्णमुदच्यते तत् ।
पूर्णस्य पूर्णं परिगृह्यते चेदन्तेऽवशिष्येत तदेव पूर्णम् ॥७०॥

---

भवति । अम्बरतः—आकाशात् स न हीयते, यत्र कुत्रापि गत आकाशाश्रित एव तिष्ठतीत्यर्थः । तथैव अमृते रसे प्रचलन्नपि मृत्युः—कर्म, रसेन कुत्रापि न हीयते—रसमाश्रयभूतं क्वापि न त्यजतीत्यर्थः । रसस्य विभुत्वात् तत्परित्यागासंभवादिति ।

[१] अथ कर्मणा बन्धः कथं भवतीति युक्तिदृष्टान्तैरुपपादयति । अशनाया नाम्ना या इच्छा शक्तिप्रकरणे विस्तरेण निरूपिता, सा स्वयं परिछिन्नेत्यपूर्णा स्वस्या अपूर्णत्वाद्रसमपि परिच्छेदबद्धं दर्शयतीत्याद्युपपादितम् । सा पूर्णत्वाय—रसग्रहणाय, उत्क्रमते प्रतिष्ठते—प्रचलतीत्यर्थः । यं रसमाश्रिता, ततो भिन्नं रसं तत्र योजयितुमाक्रामति । यद्यपि रस एक एव, तत्र भेदो नास्ति, तथापि मायारूपं बलं परिच्छिद्य तत्र भेदं करोतीत्यसकृदुपपादितम् । उत्क्रान्ता चाशनाया रसं प्राप्य निवर्तते । तमाक्रान्तं रसान्तरमानीय स्वाश्रिते रसे योजयति । एवमेकवारं निवृत्तापि पुनः पुनः प्रवर्तते, रसं प्राप्य च पुनः पुनर्निवर्तत इति क्रमः प्रचलति । अशनायानिवृत्तावपि रसस्तु नित्यः सदावशिष्यत एव । यदा तु प्रचलितमप्यशनायाबलं रसं न लभते, तदा आत्मन्वितां नैति—रस आत्मा तत्र न प्रविष्ट इति तदा तस्य उत्क्रमणं निवर्तनं च निष्फलमेव भवतीति कर्मक्रमबोधकपद्यद्वयव्याख्या ।

[२] पूर्वपद्योक्तं बलस्य निष्फलत्वं सफलत्वं च दृष्टान्तेन स्पष्टीकरोति । जले सततं तरङ्गा उद्यन्ति, नश्यन्ति चेति तानि निष्फलानि । यदा तु कश्चित्तरङ्गो वायुना तत्रैवागतेन बध्यते स्वावरणे नीयते वायोर्जलस्य च संघर्षेण स तरङ्गः फेनं जनयतीति तस्य सफलता । स उत्पन्नः फेनो जलस्य पोषकृत् प्रवर्धको भवति । नवीनं पदार्थमुत्पाद्य वृद्धिं संपादयतीत्यर्थः ।

[३] एवं फेनोत्पादकबन्धविधा ये बलस्य बन्धाः, ते सग्रन्थयो बन्धा उच्यन्ते । एतैरावृतो रसश्चैषामात्मा भवतीत्येत आत्मान्विनः—आत्मवन्त उच्यन्ते । तत्रैव पुनर्बलप्रवृत्तौ वाय्वादिसंघर्षे च मृत्स्नाद्या आविर्भवन्तीति प्राक् पृथिव्युत्पत्तौ विवृतम् । एते मृत्योः—बलस्योत्क्रमाः रसं प्राप्य अपूर्णमात्मानमाभरन्ति—नवनवान् पदार्थानुत्पाद्य स्वस्य नानारूपतया महत्त्वं ख्यापयन्तीत्यर्थः ।

[४] इदन्तु भ्रमापनयनाय भूयोभूयः स्मर्तव्यम्, यदियमपूर्णता आभरणेन पूर्णता वा बलस्यैव । रसस्तु बद्धो वा स्वतन्त्रो वा सर्वथा पूर्ण एव । तस्य विभुता कदापि न हीयते ।

[१]मात्राविशेषात्त्वमृते स मृत्युः संसृज्यते ग्रन्थिरिहोदितः सः।
तत्कर्म बध्नाति नु बध्यते नु तत्कर्मबद्धं मतमत्र मर्त्यम् ॥७१॥

[२]उत्क्रम्य वायुः स यथोदकेऽस्मिन्नाबध्यते तेन विभाति फेनः।
आबध्यते ब्रह्मणि कर्म तद्वत् तन्मर्त्यमेतत् प्रतिभाति विश्वम् ॥७२॥

## (४६) कर्मप्ररोहाधिकरणम्

[३]सान्तानिकं कर्म भवेत्प्ररोहवत् तस्य प्ररोहाः प्रभवन्ति हि त्रयः।
मूलं च काण्डं च फलं च तत्क्रमादिच्छा क्रिया चावरणं च कथ्यते ॥७३॥

---

बद्धवद्भातोऽपि स वस्तुतः पूर्ण एव, निर्विकारत्वात्। अत्र बहवो दृष्टान्ता निर्विकाराधिकरणे उपपादिताः। एतदर्थदार्ढ्याय "पूर्णमदः पूर्णमिदम्" इत्याद्यां श्रुतिं पूर्वमनूदितामपि पुनरर्थतोऽनुवदति। पुरा बन्धात्पूर्वमपि रसः पूर्णः। श्रुत्यनुवादरूपत्वादिह ब्रह्मविशेष्यं हृदिकल्प्य नपुंसकनिर्देशः। बन्धगतमपि च तत्पूर्णम्—स्वस्य विभुत्वं न जहाति, बन्धो बलस्यैव न रसस्य। रसस्य तु विभूतिरेवेति सर्वं प्राक् प्रतिपादितम्। इदं बन्धगतं पूर्णं स्वतन्त्रात् पूर्णादिव उदच्यते, बन्धेनोद्धृत्य पृथक् क्रियते, मठाकाश इव महाकाशात् पृथगाभास्यते, न तु वस्तुतः पृथग् भवतीति। बद्धस्य पूर्णस्य पूर्णता—सर्वभावः परिगृह्यते—बुद्धौ विज्ञायते चेत्, अन्ते तदेव निर्बद्धं स्वतन्त्रं पूर्णमवशिष्यते। परिच्छेदं गताः सर्वेऽपि भावा बुद्धावेकीकृत्य निवेश्यन्ते चेत्—पुनरपि विभुतैव भासेत—इति स्वतन्त्रता न हीयेतेत्यर्थः। यथा निर्विशेषं ब्रह्मबुद्ध्यगम्यम्, तथा अनन्तकोटिब्रह्माण्डावच्छिन्नमप्येकीकृत्य बुद्धौ न निवेशयितुं शक्यमिति प्रवाहाधिकरणे सम्यग् व्यवृणुमहि। तथा चापरिच्छिन्नतया तदपि पूर्णमेव। स्वतन्त्रं पूर्णमिदं पूर्णं च न वस्तुतो भिन्नमिति अन्तेऽपि तत् स्वतन्त्रमेवावशिष्टमिति भावः।

[१] ग्रन्थेस्तत्त्वं निरूपयति। मृत्युः—बलं मात्रापरिच्छिन्नम्, स मृत्युस्तरङ्गो जलमिव रसमपि परिच्छिन्नतामिवानीय तेन संबध्नाति चेत्, स एव ग्रन्थिरिति कथ्यते। कर्मैव बध्नाति, कर्मैव बध्यते, कर्मण एव च कर्मान्तरेण ग्रन्थिरिति सर्वं भूयते भूयो दार्ढ्याय विवृतम्। यथा कर्म मर्त्यम्—मणरशीलम्, तथा कर्मबद्धम्—कर्मबन्धेनापूर्वमुद्भूतमपि नामरूपविशिष्टं मर्त्यम्—मरणशीलमेव भवतीत्यपि भाव्यम्।

[२] यथा फेनदृष्टान्ते फेनो मर्त्य एवोत्पन्नः। एवमेव कर्मबन्धाद् यदिदं विश्वं जायते, तन्मर्त्यमेवेति दृष्टान्तेन भूयो भाव्यं तत्त्वजिज्ञासुभिः।

[३] अथ कर्मणां प्ररोहमाह। एकैकं कर्म कर्मान्तरैः संयुज्य वृद्धिं नवं नवं रूपं च यद् धत्ते स एव प्ररोह उच्यते। यथा बीजमुप्तं जलमृदादिभिः संयुज्याङ्कुरादिक्रमेण वृक्षतया प्ररोहति पुष्पफलादिकमपि च पोषं प्राप्नोति। सन्तानरूपतां गतं कर्मैवमेव प्ररोहवद् भवति, परैः संयुज्य विविधान् पोषान् नवनवानि रूपाणि चाविष्करोतीत्यर्थः। ते च प्ररोहास्त्रयो भवन्ति। यथा वृक्षे मूलम्, काण्डम्—मध्यविस्ताररूपम्, फलं चान्ते इति त्रयः प्ररोहा भवन्ति, तथा कर्मणोऽपि इच्छा, क्रिया, आवरणं चेति त्रयः प्ररोहा बोद्धव्याः। पूर्वं यानि इच्छाक्रियावरणानि—अशनायाविक्षेपावरणनाम्ना व्याख्यातानि, तानि सूक्ष्माणि शक्तिपदा-

[१]मूलं विदुर्वाऽध्यवसायमन्ये ज्ञानाशनायाकृतिभिस्त्रिकोशम् ।
ज्ञानादिहेच्छास्ति ततः प्रयत्नं स्वयं तदिच्छापदतोऽभिनेयम् ॥७४॥

[२]न मन्यतां चेतनमात्रनिष्ठं ज्ञानानुसार्यध्यवसायकर्म ।
ज्ञानेन्द्रियं चेतनमात्रनिष्ठं ज्ञानं तु सर्वत्र समं प्रवृत्तम् ॥७५॥

[३]नृपक्षिपश्वादिशरीरसंस्था भिन्ना तदात्माध्यवसायभेदात् ।
यथात्मनो जीवनचेष्टितं स्यात्तस्यानुकूलं भवतीह गात्रम् ॥७६॥

---

भिधेयानि । तान्येव स्थूलतामासाद्य कर्मविस्ताररूपेण यदा अनुभवयोग्यतां गच्छन्ति, तदा लोकप्रसिद्धेच्छादिपदबोधनीयानि भवन्ति । यथा विशिष्टे व्यावहारिके जीवात्मनि शक्ति-रूपेणेच्छा तिष्ठति, सैव मनोवृत्तिरूपेण यदनुभूयते, तत् तस्याः स्थूलं रूपम् । एवं शक्तिरूपेण स्थितस्य प्राणस्य स्थूलं रूपं क्रियेत्यादि ।

[१] अथावान्तरभेदबोधनाय मतान्तरेण तेषां नामान्तराण्याह—मूलस्थानीयं प्रारम्भिकं प्ररोहमध्यवसायपदेन केचिद् व्यवहरन्ति । तथाहि—'अध्यवसायो बुद्धिः' इति सांख्यकारिकायां बुद्धिपर्यायत्वेनाध्यवसायपदमुपात्तम् । शक्तिरूपाया महत्पदबोध्याया बुद्धेः स्थूलं रूपमेवाध्य-वसाय इति तदर्थो बोध्यः । अस्यैवाध्यवसायस्य स्थूलबुद्धिरूपस्य त्रयः कोशाः—त्रिभी रूपैः स प्ररूढो दृश्यते, तानि रूपाणि ज्ञानम्, अशनाया—इच्छा, प्रयत्नश्चेति । एषामेव कार्य-कारणभावो नैयायिकैराख्यायते—"ज्ञानजन्या भवेदिच्छा इच्छाजन्याकृतिर्भवेद्" इति । पूर्वमते इच्छापदेनैवेदं त्रयमपि ग्राह्यमित्यर्थः ।

[२] इदं ज्ञानेच्छादिकं चेतनेष्वेव, न जडेषु—इति न मन्यताम् । शक्तिजन्यकर्मप्ररोह-रूपं ज्ञानेच्छादि सर्वत्रैव व्याप्तम्, जडेषु इन्द्रियाभावात्तत्प्रकाशो न जायते—इत्यनेकधोक्तं पुनरिह स्मारितम् ।

[३] अयं कर्मप्ररोहरूपोऽध्यवसायः सर्वत्र विभिन्नै रूपैः स्थितः । एतस्य भेदानुसारीण्येव मनुष्याणां पशूनां पक्षिणां च शरीरसंस्थानानि—शरीराणामवयवसंनिवेशाः पृथक् पृथग् भवन्ति ।

"सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ।"

इति भगवद्गीतायां शक्तिरूपं महत् सर्वाकृतिजनकमुपदिष्टम्, तस्यैव स्थूलं रूपमिद-मध्यवसायनामकमिति व्याख्यातमनुपदम् । तत्तेषां प्राणिनां जीवननिर्वाहाय यथाविधं चेष्टितम्—क्रियासंपादनमावश्यकं भवति, तदनुकूलान्येव तद्गात्राणि कर्मप्ररोहरूपेणाध्यवसायेन निर्मीयन्ते । यथा पशुभिर्भूमिष्ठमेव तृणादि भोज्यमिति चतुष्पादः समसूत्रमुखाश्च ते जायन्ते । यदि मनुष्यवत्तेषां मुखमूर्ध्वं भवेत्, तर्हि भूमिष्ठतृणादिग्रहणं न सौकर्येणोपपद्येत । तृणादीनां छेदनमपि मुखेनैव तैः कर्तव्यं भवतीति अग्रदन्तास्तेषां शक्तिमन्तः कृताः । गवादीनां दुग्ध-मन्यैरप्युपयोज्यमिति तासां स्तना अध एव स्थापिताः, दुग्धसंभरणाय स्तनपार्श्वं ऊधोऽपि तेषां विस्तृतमित्याद्यूह्यम् । विषयोऽयमन्यत्र विस्तरेणोक्तो ग्रन्थकृतेतीह संकेतमात्रं कृतम् ।

[1]सर्वेषु चार्थेषु मताशनाया सर्वोऽन्नमश्नाति निजं प्रयत्नात् ।
ईक्षां विनेच्छा न भवेद्यतस्तत् प्रज्ञापि सर्वत्र मताधिभूतम् ॥७७॥

[2]काण्डं विदुर्वा व्यवसायमन्ये कम्पो गतिः क्षोद इति त्रिकोशम् ।
कम्पो गतिः स्यादथ नोदनास्यान्त्रयं क्रियावृत्तिपदाभिनेयम् ॥७८॥

[3]कम्पः स उच्छेदपरा क्रिया चेत् फलोन्मुखी चेदिह सा गतिः स्यात् ।
सा नोदना भिन्नवलोन्मुखी चेदेकोऽप्यमर्थस्त्रिविधः प्रदिष्टः ॥७९॥

[4]फलं विदुर्ब्रह्मणि भोगमन्ये भोगः स संस्कार इहात्मनो यः ।
माया च सत्यं परकर्मबीजं यज्जायते तेन फलं त्रिकोशम् ॥८०॥

---

[1] अथाध्यवसायपदवाच्या ज्ञानेच्छाप्रयत्नाः सर्वत्र सन्तीति प्रकारान्तरेणात्रोपपादयति—सर्वे जडचेतनाद्याः स्वं स्वमन्नमश्नन्ति—इति अशनेच्छापरपर्याया अशनाया सर्वत्रैव मन्तव्या । चेतनानां सर्वेषां प्राणिनामिच्छापूर्वकं स्वस्वान्नग्रहणं स्फुटमेव सर्वैर्दृश्यते । वृक्षलताद्या अपि वर्द्धन्त इति दृश्यते, अन्नग्रहणं विना कथं वृद्धिः, इच्छां विना च कथमन्नग्रहणे प्रवृत्तिरिति तत्राप्यशनाया स्फुटं सिद्धा । खनिजेषु धात्वादिष्वपि वृद्धिर्दृश्यत इति तत्रापि पूर्वोक्तरीत्या द्वयमनुमेयं स्यात् । लोहादिभ्यः किट्टं मलरूपं निःसरति, मलनिःसारणं चान्नभोजिनामेवेति तत्राप्यन्नग्रहणमशनाया चानुमेये । शुष्ककाष्ठप्रस्तरादिष्वपि कालेनोपरि किट्टभूतं पपड़ीति ख्यातमायातीति, तत्रापि पूर्वोक्तप्रक्रिययाऽन्नाशनाशनाये अनुमातुं शक्ये । पर्वतादिस्थिताः प्रस्तरा अपि सन्निहितां मृदमात्मसात्कृत्य वर्द्धन्ते क्रमेणेति तत्परिचयशीला जानन्ति । वस्तुतस्तु सर्वेष्वपि जडचेतनेषु पुराणावयवनिःसरणमभिनवावयवोत्पत्तिश्चेति नि`मागमौ भवत एव, तत एव क्रमेण प्राचीनता जीर्णता च दृश्यत इति पूर्वमेव प्रत्यपीपदाम । आगतनवावयवस्वीकरणमेवाशनमिति अशनं सर्वत्रैव सिद्ध्यति । विनेच्छां तज्जनितं च प्रयत्नं विनान्नग्रहणं चेतने न दृश्यते—इति चेतनानेव दृष्टान्तीकृत्य जडेष्वपीच्छाप्रयत्नावनुमातव्यौ । इच्छा चेष्टपदार्थज्ञानमीक्षणपदाभिधेयं विना चेतनेषु न दृश्यत इति इच्छया ज्ञानमपि चेतनदृष्टान्तेनैवानुमातव्यं जडेष्विति सर्वोऽप्यध्यवसायस्तत्रापि सिद्धः ।

[2] अथ वृक्षकाण्डस्थानीया या क्रियाऽधिकरणस्यास्य प्रथमपद्ये उक्ता, तत्स्थाने व्यवसायमन्ये ब्रुवन्ति । अध्यवसाय आन्तर उक्तः, तज्जन्यो व्यवसायस्तु शारीर इति अध्यवसायव्यवसायशब्दौ परैर्निवेशिताविति तात्पर्यम् । अध्यवसायवत् तस्यापि व्यवसायस्य त्रयः कोशाः, सोऽपि त्रिभाग इति यावत् । तेषां भागानां नामानि कम्पः, गतिः, क्षोद इति । क्षोद एवाग्रे नोदनापदेनोच्यते । पूर्वप्रकरणे व्याख्याता नोदनाद्याः शक्तिरूपाः, अत्राभिधीयमानास्तु तज्जन्याः स्थूलरूपाः क्रिया इत्यत्राप्यनुसन्धेयम् । एतास्तिस्रः क्रियाया वृत्तयः प्रभेदा उच्यन्ते । एतैस्त्रिभी रूपैः क्रिया लोके दृश्यते इति भावः ।

[3] उक्तानां तिसृणां परस्परं भेदमुपपादयति—उच्छेदपरा—विनाशकरी क्रिया कम्प उच्यते । फलोन्मुखी—फलोत्पादिका—पोपकरी च गतिः । भिन्नवलोन्मुखी—अन्यत्र वलान्तरोत्पादिका च नोदना तृतीया । एवं क्रियानाम्ना य एकोऽर्थः कथ्यते, तस्यैव फलदृष्ट्या नाम त्रयं व्यवह्रियते ।

[4]अथ वृक्षस्य फलस्थानीयं यदावरणमादिपद्य उक्तम्, तद् भोगशब्देनान्ये व्यवहरन्ति ।

[१]रसेऽमिते स्यादभितोमितिर्या माया तु सोक्ता बलमन्यदेतत् ।
अभ्वं तु सत्यं मितिनामरूपे छन्नं हि सत्येन सदामृतं तत् ॥८१॥

---

भोगो नाम भोक्तव्यः, कस्य भोक्तव्य इत्याकाङ्क्षायां ब्रह्मण एवेति वक्तव्यम् । कर्मणा जनितं ब्रह्मणा भुज्यत इति । यद्यपि ब्रह्मणि भोगो नाम तस्यात्मसात्करणं नास्ति, तथापि कर्म स्वफलं तत्रैवार्पयतीति तावतैव ब्रह्मणि भोग उक्तः । स एव भोगः संस्कारपदेनाप्युच्यते । अयमपि भोगस्त्रिकोशः पूर्ववदेव । ते कोशाश्च माया, सत्यम्, परकर्मबीजं चेति विज्ञेयाः ।

[१] त्रीन् कोशान् विभज्य दर्शयति—अमिते—अपरिच्छिन्ने रसे या अभितः—सर्वासु दिक्षु, मितिः—परिच्छेदो विलोक्यते सा माया । जगति सर्वमपि पदार्थजातं दिगवच्छिन्नं पश्यामः । प्रत्येकं पदार्थस्य कश्चिद्भागः पूर्वस्यां कश्चिच्च दक्षिणस्यामितीयमेव दिगवच्छिन्ना अभितो मितिः । मुख्ये रसे विभौ सा न संभवतीति कर्मप्ररोहेणैवेयं जाता मन्तव्या । पूर्वं मिति साधनीभूता शक्तिस्तत्पूर्वरूपं बलं वा मायाशब्देन व्याख्यातम् । इह तु तज्जन्या मितिरेव मायानाम्ना व्याख्यायते इति सर्वत्र स्मारं स्मारं भ्रमो न कार्यः । मीयतेन या इति कारणसाधनो मायाशब्दः प्राक् शक्तौ व्यवहृतः । इह तु मानम्—परिच्छेद एव मायेति भावसाधनो द्रष्टव्यः । इदं बलजन्यं परिच्छेदरूपं कर्म पृथग् वक्ष्यमाणाभ्यां भिन्नमित्यर्थः । द्वितीयः कोशः सत्यपदेन य उक्तः, स एव 'अभ्वम्' इत्यप्युच्यते । मितिभाजो मितस्य परिच्छिन्नस्य ये नामरूपे—तदेव अभ्वं सत्यमिति विज्ञेयम् । यद्यपि नामरूपे कल्पिते मिथ्या, वस्तुभूतं ब्रह्म तु सत्यमिति वेदान्तग्रन्थेषु प्रसिद्धिः, परं क्वचिच्छ्रुतिषु 'नामरूपे सत्यम्' तदवच्छिन्नं ब्रह्म तु अमृतम् इति नामभेदोऽप्यस्ति । तदेवाश्रित्य च 'सत्येनामृतं छन्नम्'—इत्यादि श्रुत्युक्तमुपपद्यते । नामरूपाभ्यां हि मुख्यं वस्तु आच्छन्नं भवति । नामरूपे एव सर्वत्र प्रतीयेते, तदतिरिक्तं वस्तु तु किमपि न न्द्रियैर्गृह्यते—इत्येव छन्नशब्दस्यार्थः । इह सति भवं सत्यमिति सत्यशब्दो व्याख्येयः । नामरूपाणि हि सति ब्रह्मणि आधेयतया भवन्ति, तदेवाश्रित्य स्वरूपं लभन्ते इति नामरूपयोः सत्यशब्दव्युत्पत्तिः । इत्थमेव श्रीभागवतदशमस्कन्धगतगर्भस्तुतिपद्ये 'सत्यस्य सत्यम्' इति पद्यखण्डं व्याचक्षते आप्ता व्याख्यातारः । नामरूपे सत्यम्, तयोरपि सत्यं तत्स्वरूपप्रतिष्ठापकं तदाधारभूतं सत्यं ब्रह्मेति । ब्रह्मणि सत्यशब्दः सदेव सत्यमिति व्याख्येयः । त्रिकालाबाध्यं सदैकरूपं तत्र सत्यशब्दस्यार्थः । क्वचित्तु 'सच्च त्यच्च' इति विभज्य सत्यशब्दः श्रुतिषु व्याख्यातो दृश्यते । ब्रह्म सत्, नामरूपे तु त्यमिति । नामरूपरहिते ब्रह्मणि कल्पिते नामरूपे इत्येक एवार्थो विभिन्नैः शब्दैर्व्याख्यायते । नामरूपे ब्रह्मण्याश्रिते एव स्वरूपं लभेते । ब्रह्म च वस्तुतो न नामरूपवत्, तत्र कल्पिते नामरूपे इत्येव वक्तव्यम् । सोऽयमर्थः क्वचिन्नामरूपे मिथ्या इति मिथ्यापदेनोच्यते । मिथ्याशब्दोऽपि 'मिथु—सङ्गमे' इति धातोर्व्याख्यातोऽनेन ग्रन्थकृता, 'अन्यत्र संगते एव तिष्ठतः' इत्येवार्थमभिदधाति । क्वचिन्नामरूपे सत्यम्, ब्रह्म तु अमृतमित्युच्यते । तत्रापि अमृतप्रातिलोम्येन नामरूपयोर्विनाशित्वम्, विनाशिनोश्च निराधारं स्थितेरभावादाश्रितत्वं सिद्ध्यत्येव । सत् त्य इति खण्डाभ्यामपि विभज्य तदेवोच्यते । यथा त्य शब्दः सच्छब्दमाश्रितः, तथा नामरूपे सत्पदबोध्यं ब्रह्माश्रिते इति । एवं विमर्शेन श्रुतिस्मृत्यादीनां

[१]क्रमाद्बलं यद्घनतामुपेयात् तद्वासनाख्यावरणं रसस्य।
तद्बीजमुप्तं पुनरत्र मूलं भूत्वा प्ररोहत्यपरं प्ररोहम् ॥८२॥

[२]यच्छाद्यते तेन रसो रसेऽथवा वसत्तदा वासयते परं रसम्।
तदुत्तरं वासयते पुनर्बलं सा वासना तेन च भावना मता ॥८३॥

[३]सा वासनाऽपि त्रिविधा निरुक्ता विकर्म चाकर्म च कर्म चेति।
ये वै यमा ये नियमाश्च तानि कर्माणि यज्ञश्च तपश्च दानम् ॥८४॥

अकर्म्म यन्नात्र परत्र कामः क्रोधः प्रजातिर्व्यसनं विकर्म।
कर्म प्रसादं च विकर्म बन्धनं न किञ्चिदग्रे जनयेदकर्म ॥८५॥

---

सर्वत्रैवैकवाक्यता भवति। अविमृश्य तु शब्दमात्रामादाय वृथैव कलहायन्ते वादरसिका इति सम्यक् पर्यालोच्यं सुधीभिः। तदेव महामतिना बालगङ्गाधरतिलकेनापि स्वीये गीतारहस्य उक्तम् 'यदि श्री शङ्कराचार्यकथिते मिथ्या शब्द एव विद्वेषः, तर्हि मिथ्याशब्दं परित्यज्य तत्स्थाने सत्यशब्दः, सत्यस्थाने चामृतशब्दः प्रयुज्यताम्, सत्यं चामृतं चेति। तावतापि न कापि हानिः। प्रतिपाद्योऽर्थः सिद्धयत्येवेति।'

[१] अथ परकर्मबीजं तृतीयं कोशं विवृणोति। बलं घनताम्—निविडत्वमुपेत्य वासनारूपेण परिणमति। सा वासनापि रसस्यावरणरूपा। सा च वासना बीजरूपा, सा मूलतामुपात्य पुनरपरं प्ररोहमारभते, तयाऽन्यो वृक्षरूपः कर्मप्ररोहः प्रादुर्भवतीत्यर्थः।

[२] वासना शब्दं व्युत्पादयति। 'वस आच्छादने' इति धातोः 'वस निवासे' इति धातोर्वा णिजन्ताद्युचि वासना शब्दः। आदिपक्षे रसमाच्छादयतीति वासना इत्यर्थः। द्वितीये पक्षे स्वयं रसे वसति, रसान्तरं बलान्तरं च पुनः रोहक्रमेण तत्र वासयति—इत्यर्थः। इयं भावनाप्युच्यते। तत्रापि भावयते प्ररोहान्तरमुत्पादयतीत्येवार्थोऽनुसन्धेयः। क्वचित्तु कर्मजन्यः संस्कारो वासना, ज्ञानजन्यस्तु संस्कारो भावनेति भेद आख्यायते। संस्काररूपता तूभयत्र समाना। संस्काराधायकं ज्ञानमपि वृत्त्यात्मकं कर्मरूपमेवेति कर्मजन्यत्वमप्युभयत्र समानम्।

[३] वासनापि त्रिविधा व्याक्रियते। कर्म, अकर्म, विकर्म चेति। यया वासनया जनितोऽपरः प्ररोहः आत्मप्रसादकः सुखकरो भवति, सा वासना शुभकर्मप्ररोहजनकत्वात् कर्मरूपा। यया जनितश्च दुःखकरो भवति, सा विरुद्धकर्मजनकत्वाद्विकर्मरूपा। यया च जनितं कर्म सुखं दुःखं वा किमपि न प्रसूते जलताडनादिवत्, सा अकर्मेति ख्याप्यते। यम-नियमयज्ञतपोदानादीनि च शुभानि कर्मपदेनोच्यन्ते। कामः, क्रोधः, तज्जनिता मैथुनव्यसनाद्याश्च विकर्मपदेनोच्यन्ते। यत्तु इह लोके परत्र वा न किमपि सुखदुःखादिकं प्रसूते, तदकर्म भवति—विनोदवार्तालापादि, जलताडनादि वा। यद्यपि तैरपि तात्कालिकं विनोदरूपं सुखं भवति, तथाप्यत्यल्पकालत्वान्न तत् फलत्वेन गण्यते। संस्कारस्तु तज्जन्यो नैव कश्चिद्भवति—इति पद्यद्वयस्य सारः।

[१]प्रसादवृद्धिक्रमतः सुखोदयो निःश्रेयसं चातिशयात्प्रसादतः ।
क्रमेण नैष्कर्म्यमुपागतं यदा चैकत्वमायात्यमृतं सुखं हितम् ॥८६॥

[२]विभूतिमान् स्यादथ निर्विभूतिर्बन्धो द्विधा तत्र विभूतियोगात् ।
आद्ये [१]क्रमेणाभ्युदयः सुखं स्यादन्यत्र दुःखं भवति॰ क्रमेण ॥८७॥

[३]बन्धः प्ररोहाय पुनः प्ररोहः पुनः प्ररोहस्तदितिक्रमेण ।
तैस्तैः प्ररोहैः पुनरात्मनोऽयं महाप्ररोहः क्रमते चिराय ॥८८॥

## (५०) कर्मवृक्षाधिकरणम्[४]

विकर्मवृक्षः स महाप्ररोहः क्वचिद्विशुष्कः प्रलये प्रसुप्तः ।
पुनर्नवं पोषमितो विसर्गे विमोक्षपर्यन्तमनुक्रमेण ॥८९॥

अश्वत्थवृक्षोऽयमुदीरितः पुरा बुधैर्यमालम्बत एष पुरुषः ।
[५]अधः प्रशाखः पुनरूर्ध्वमूलवान् रसेऽमृते मूलममुष्य सुस्थिरम् ॥९०॥

---

[१] प्रसादस्य—स्वच्छतायाः—आवरणभङ्गस्येति यावत्, वृद्धौ सत्यामधिकाधिकसुख-प्रतीतिर्जायते । प्रसादस्य पराकाष्ठा तु बुद्धिस्थैर्यं द्वारीकृत्य निःश्रेयसप्राप्तिः—मोक्ष इत्यर्थः । तदुक्तं भगवद्गीतायाम्—

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ (अ० २) इति ।

कर्मबन्धस्य क्रमेण ह्रासे नैष्कर्म्यं भवति, तदेव चात्मन एकत्वम्—कर्मरहितत्वमित्यर्थः । तदेव कैवल्यं वा मोक्षो वा ख्याप्यते शास्त्रेषु ।

[२] उक्तो बन्ध व तावद् द्विविधः—विभूतिमान् निर्विभूतिश्च । यत्रात्मनो विभूति-नामकः संबन्धः सुस्फुटः स विभूतिमान् । विभूतिसंबन्धस्वरूपं प्रथमेऽधिकारे संसर्गाधिकरणे विवृतम् । यत्र तु अत्यल्पा रसविभूतिः स संबन्धो निर्विभूतिः । विभूतिमति क्रमेण सुख-वृद्धिर्भवति । निर्विभूतौ तु दुःखपरम्परैवेति ।

[३] बन्धानां पुनः पुनः प्ररोहेण महाप्ररोहो भवति, यश्चिराय—बहुकालपर्यन्तमात्मानं जगत्प्रवाहे पातयतीति ।

[४] महाप्ररोहप्रसङ्गेनैव भगवद्गीतायाः पञ्चदशेऽध्याय उक्तं कर्मवृक्षमनुवदति—यद्य-प्ययं सामान्यरूपेण कर्मवृक्ष एवोच्यते, अत्र कर्म विकर्म कर्माणि सर्वाणि एवैकीभवन्ति । परं वस्तुतस्तु आत्मनो बन्धहेतुत्वात् सर्वाणि विरुद्धरूपाणि विकर्माण्येवेति ग्रन्थकृता प्रथमपद्ये विकर्मवृक्षपदमेव प्रयुक्तम् । अयं वृक्षः क्वचिद्विशुष्को भवति—यदा योगाङ्गसमाध्यादिषु जनः कर्मफलमत्यल्पं भुङ्क्ते । प्रलये तु प्रसुप्तो भवति—फलानि न प्रसूते परं सृष्टौ पुन-र्जागर्ति । एवं मोक्षपर्यन्तमनुवर्तमानः कर्मप्रवाह एव वृक्षरूपेण रूप्यत इति भावः ।

[५] अस्य अश्वत्थवृक्षरूपेण निरूप्यमाणस्य कर्मवृक्षस्य मूलमूर्ध्वम्, शाखास्तु अधःस्थिताः । मूलं रसः, स च सर्वेषामाधारः सर्वगम्यः सर्वपूज्य इत्यूर्ध्वं आख्यायते । शाखास्तु विभिन्ना लोकाः, ते च संसारगता दुःखबहुला इति नीचैर्गता आख्यायन्ते ।

[१]अधस्तथोर्ध्वं प्रसृताः प्रशाखा गुणप्रवृद्धा विषयप्रवालाः ।
[२]अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥९१॥

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।
[३]छन्दांसि पर्णानि मतानि यस्मिन् यो वेद तं वेदविदेष एव ॥९२॥

अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ।
ततः पदं तत्परिमार्गितव्यं निवर्तते यत्र गतो न भूयः ॥९३॥

तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ।
परोऽतिशेते पुरुषोत्तमोऽसावतीत्य विश्वं क्षरमक्षरं च ॥९४॥

इति परविद्याध्याये बलाधिकारस्तृतीयः ॥३॥

इति ब्रह्मविज्ञाने परविद्यायामुत्तरार्धे बलप्रतिपत्तिविभागे कर्माधिकारः पूर्णः ।

---

[१] इत ऊर्ध्वं भगवद्गीतापद्यान्येव क्वचिच्छन्दोऽनुरोधेन अल्पं पाठभेदं कृत्वा क्वचिच्च यथारूपाण्येवानूदितानि । यद्यपि शाखा मूलरसापेक्षया अधःस्था उक्ताः, तथापि तास्वपि ऊर्ध्वाधोभावो विद्यते । स्वर्गलोकाद्या ऊर्ध्वाः, पृथिव्यादयस्तु अधोगता इति ।

[२] अत्र मूलपदेन 'जड़' इति भाषायां ख्यातः । शिफा संघात उच्यते । तानि मूलानि कर्मानुसारीणि अधः संततानि । अथवा मूलभूतो रस एव कर्म सहकृतो नानारूपेण मनुष्यादिलोकेषु तत्तज्जीवरूपेण संतत इति व्याख्येयम् ।

[३] पद्यं स्पष्टार्थम् । छन्दःपदेनात्र तत्तेषां पदार्थानां परिच्छिन्नं स्वरूपमुच्यते—आकृतिर्मर्यादाबन्ध इति यावत् । तदेव पर्णरूपम् । बहवस्तु छन्दःपदेन वेदानेव गृह्णन्ति, त एव संसारवृक्षस्य पर्णरूपाः, पर्णानि यथा छायाप्रदानि भवन्ति, तथा वेदा अपि छायाप्रदा इति साम्यमाचक्षते । अस्मद्दृष्ट्या तु संसारवृक्षोन्मूलनमेव येषां परमं प्रयोजनम् तेषां संसारवृक्षपर्णत्वकथनं नैवौचित्यमावहतीति विद्वांसो विचारयन्तु । छन्दःपदस्यास्मदुक्ते आकृतिमर्यादाबन्धरूपेऽर्थे प्रमाणं तु "मा छन्दः, प्रमा छन्दः, प्रतिमा छन्द" इति याजुषी श्रुतिरेव विस्तरेण चायमर्थो विद्यावाचस्पतिभिः स्वीयायां छन्दःसमीक्षायां छन्दो निरुक्तिप्रकरणे विवृत इत्यधिकं जिज्ञासुभिस्तत्रैव द्रष्टव्यम् । अग्रेतनं पद्यद्वयं गीतानुवादरूपं स्पष्टार्थम् । द्वितीये पद्येकं प्रपद्ये य आद्यः पुरुष इति जिज्ञासाया उत्तरं ग्रन्थकृता दत्तम्—यः क्षराक्षरातीतोऽव्ययपुरुष उत्तमपुरुष इति गीतायां व्याख्यातः, स एवाद्यः पुरुषः, स एव च प्रवक्तव्य इति ।

## (५१) [1]उपसंहाराधिकरणम्

इतीत्यमर्थः सर्वोऽपि क्षराक्षरपरीक्षया ।
प्रतीतिमात्रसंसिद्धो दर्शितः स्वानुभूतिवत् ॥१॥

रसं बलं च पश्यामो यत्किंचिदिह दृश्यते ।
तत्र मूलरसो मूलबलं च परमुच्यते ॥२॥

बलं कर्मेति निर्दिष्टं रसो ब्रह्मेत्यधीयते ।
कर्मैव श्रमणा आहुर्ब्रह्मैव ब्राह्मणा विदुः ॥३॥

भूमज्योतिःप्रतिष्ठाश्च तथेच्छावरणक्रियाः ।
इति षट् शक्तिविज्ञानं परिविज्ञानमुच्यते ॥४॥

षडप्येताः शक्तयः स्युः सृष्ट्युत्पादनहेतवः ।
सर्वात्मना तु विज्ञानमसाध्यमिति चक्षते ॥५॥

भूमा ज्योतिः प्रतिष्ठा वा शयानावरणं क्रिया ।
यावन्निरूपितं किञ्चिदक्षरे च क्षरे च तत् ॥६॥

[2]क्षरमक्षरमेवोक्तं रसस्य च बलस्य च ।
रूपं युक्तिर्विवर्तो वा न शक्यं वस्तुमण्वपि ॥७॥

[3]कर्त्ता गोप्ता च देवानां पुरा ब्रह्मा बभूव ह ।
स एवोद्भावयामास ब्रह्मविद्यामिमां पुरा ॥८॥

---

[1] इतः परमुपसंहाराधिकरणे प्रस्तुतानि पद्यानि ायेण न व्याख्यामपेक्षन्ते । यत्र तु किञ्चिद्वक्तव्यं तत्र संहृत्यैव स्वीयेन गद्येन वदामः । पूर्वं यद्यत् प्रतिपादितम्, तदेवात्र प्रथमैः षड्भिः श्लोकैरुपसंहारे स्मारितम् ।

[2] अत्र ग्रन्थे क्षराक्षरयोरेव विवरणं विशेषेण कृतम् । मूलभूतयो रसबलयोस्तु साक्षात् स्वरूपम्, बलाद्रसस्य कथं मुक्तिः, कथं च निर्विकार एव रसो जगद्रूपेण विवर्तते—इति सर्वं विशिष्य सूक्ष्मतयापि न वक्तुं शक्यम् । विना योगसमाधिमेतत्सर्वं कथमप्यनु—भवविषयतां नायातीति भावः । सामान्येन रूपेण यावच्छास्त्रेषु लभ्यते, तावदेवात्र विवृतमिति ।

[3] इतः परं विज्ञानमिदं कथं प्रकटतां गतमिति तस्येतिहासं सूक्ष्मरूपेण संकेतयति । अनेनैव ग्रन्थकृता जगद्गुरुवैभव-महर्षिकुलवैभव—देवासुरख्यातीन्द्रविजयादिषु अनेकेषु ग्रन्थेषु इतिहासो वेददृष्टो विस्तरेण विवृतः । तत्र त्विदं प्रमाणैः साधितम्—यद्यथा द्युलोकः सूर्य-मण्डलाधिष्ठितो मुख्यः स्वर्गः, तत्र च प्राणरूपाः प्राणिरूपाश्च तत्तन्नाम्ना ख्याता देवाः, तथात्र भूलोकेऽपि उत्तरदिग्भागः स्वर्गनाम्ना पुरा व्यवहृत आसीत्, यस्य पुराणेषु बहुधोल्लेखः । दशरथ इन्द्रसाहाय्याय गतः, अर्जुन इन्द्रसकाशेऽध्ययनार्थं गतः—इत्याद्या भूस्वर्गस्यैव घटनाः । तस्य स्वर्गस्य सीमादिकमपि तेषु ग्रन्थेषु सप्रमाणं निरूपितम् । तत्रापि च ब्रह्मा, विष्णुः, इन्द्रः, वरुणः-इत्याद्या देवास्तत्तत्प्रदेशाधिपतय आसन् । एते अष्टाङ्गयोगसम्पन्ना अस्मदपेक्षया

ब्रह्मविद्याप्रभावेण यज्ञविद्या च सोऽत्यगात् ।
तत्राध्यक्षोऽभवद्विष्णुर्यज्ञविद्याप्रवर्तकः ॥९॥

---

विशेषशक्तिशालिनो मनुष्यविशेषा एवाभूवन् । मुख्या देवा दिविष्ठाः, तत्प्रतिरूपा एवैते भूलोके कल्पिताः । तत्र तेषां देवानां कर्ता गोप्ता—अर्थात्तादृशदेवलोककल्पकः साध्येषु ब्रह्मा आसीत्, यस्य चरितं जगद्गुरुवैभवे विशेषेण विवृतम् । तेनैवेयं ब्रह्मविद्या प्रकटिता । तस्मिन्नेव स्वर्गे निवसता विष्णुना पूर्वं यज्ञविद्या प्रकटितासीत् । ब्रह्मणा तु अस्य ब्रह्मविद्यायाः प्रभावातिशयः ख्यापित इति यज्ञविद्या गौणतां गता । यज्ञेन स्वर्गप्राप्तिरेव, ब्रह्मज्ञानेन तु मोक्ष इति सर्वैर्ज्ञातमभूदित्येव यज्ञविद्याया अतिगमनम् । अनेन ब्रह्मणैव नासदीयसूक्तं दृष्टम् । तस्य हि सूक्तस्य परमेष्ठी प्रजापतिर्नाम ऋषिराख्यायते सर्वानुक्रमण्याम् । अयमेव ब्रह्मा परमेष्ठि—नाम्ना प्रजापतिनाम्ना च प्रसिद्धोऽभूत् । तत्सूक्तमेव ग्रन्थस्यास्य मुख्य आधारः । तदिदं सूक्तं ग्रन्थस्यादिमे प्रकरण एवोद्धृतम् । तत्र दशवादास्तु विभज्य दर्शिताः, परं सिद्धान्तो यैर्मन्त्रैराम्नातः, तेषां व्याख्यात्र ग्रन्थे न कृता । दशवादरहस्याभिधे ग्रन्थे तु कृतेति तामत्रोचिततया व्याहरामः । ग्रन्थारम्भे दशमे पृष्ठे 'ब्रह्ममते सिद्धान्तवादाभ्युपगमः' इति शीर्षकाधो मन्त्रान् दृष्ट्वा तदर्थः संगमनीयः । 'एकं तद् आनीत्' इत्यत्र एकपदेन ब्रह्मापरपर्यायो रस एवोपदिष्टः । स्वधापदेन च तच्छक्तिरूपं बलमिति तत्रैव टीकायां व्याख्यातमस्माभिः । 'आनीत्' पदस्य अवातमिति पदस्यापि च तात्पर्यं तत्रैव व्याख्यातम् । दशवादरहस्य—टिप्पण्यान्तु ग्रन्थकृता स्वयमेवमुक्तम्—अत्रैकपदेन सामान्येन किञ्चिदेकमासीदित्युक्तम् । स्वधापदेन चान्नवाचकतया निघण्टुषु पठितेन अन्नं नाम जगत उपादानं तत्सहचरितया समाम्नातम् । अथ किं तदेकमासीदिति जिज्ञासायाम् अग्रिमे मन्त्रे 'अप्रकेतं सलिलं सर्वं मा इदम्' इत्याद्याम्नातम् । अत्र सलिलपदेन न जलं शक्यं ग्रहीतुम् , तस्य स्थितेः 'अम्भः किमासीत्' इति पूर्वं प्रत्याख्यातत्वात् । तस्मात् सलिलपदेन रस एवाम्नातः । सलिलपदेन लोके प्रसिद्धं जलमपि रसरूपमेव भवतीति सादृश्यान्मूलतत्त्वे रसशब्दे पर्यायः सलिलशब्दो निवेशितः । तत्सूक्तप्रभवत्वं स्वप्रक्रियाया बोधयितुं ग्रथकृतापि मूलतत्त्वे रस शब्द एवादृतः । स च मूलतत्त्वे "रसो वै सः" इति श्रुतिसिद्ध एवेति प्रागेवोक्तम् । तच्च सलिलं 'सर्वं मा इदम्' सर्वमभिव्याप्य स्थितमासीत् । विभु आसीदित्यर्थः । तच्च न विशिष्य विज्ञातुं शक्यमिति बोधनाय 'तम आसीत्' इत्यपि प्रयुक्तम् । तमोवत्तदज्ञातमेवासीदित्यर्थः । अत एव मनुनापि 'आसीदिदं तमोभूतम्' इत्येव प्रथमावस्थोक्ता । कुतो न ज्ञायते तदिति तत्कारणमपि तत्र निर्दिष्टम् । 'तमसा गूढम्' इति । अत्र तमःपदेन तदीया शक्तिरेवोच्यते, या पूर्वस्मिन् मन्त्रे स्वधाशब्देन समाम्नाता या चास्मिन् ग्रन्थे बलनाम्ना विवृता । तस्यास्त्रिगुणत्वात् त्रिषु गुणेषु आवरणे तमस एव प्रधानत्वात् तमःपदस्य प्रकृतिपर्यायस्यापि सांख्या—भासप्रकरणेऽस्माभिः साधितत्वाच्च तमःपदेनाख्यानं सुसंगतमेव । तया शक्त्या तन्निगूढम् समावृतमिति न विशिष्य ज्ञायत इत्यर्थः । सा शक्तिरपि न स्पष्टं ज्ञातुं विवरीतुं वा शक्यत इत्यपि शक्तौ तमःपदोपानाद् बोधितम् । मन्त्रोत्तरार्द्धे पुनरनयोः प्रकारान्तरेण संकेतः क्रियते—तुच्छेनाभु अपिहितमासीत्—इति । आभुः—विभुः—व्यापको रसः । तुच्छं च सत्त्वासत्त्वाभ्यामनिर्वाच्या शक्तिः । पृथक् सत्त्वाभावादेव तस्यास्तुच्छत्वम् । तया शक्त्या मेघखण्डेन सूर्य इव रसोऽपिहितः—आवृत इति । द्रष्टुर्जीवस्य दृष्टिनिरोधादेव विभोरा-

विराजौ तावुभौ ब्रह्मविष्णू साम्राज्यरक्षकौ ।
ब्रह्मा विद्याप्रभावेण विष्णुर्यज्ञप्रभावतः ॥१०॥

---

वरणमुच्यते भविष्यद्वृत्त्या वा जीवानामप्यनादित्वाद्वेति । अग्रे किमासीदित्युच्यते । तस्य तपसः—'यस्य ज्ञानमयं तपः' इति परिभाषितस्य ज्ञानस्य महिना—महिम्ना प्रभावेण एकमपूर्वं रूपं सृष्ट्युत्पादकं प्रादुरासीत् । शक्तिविशिष्टं रसतत्त्वमेव प्रथम ज्ञानरूपेणाविर्भवति, ततश्चाभिनवं सृष्ट्यारम्भकमुत्पद्यत इति भावः । किमभिनवं तत्त्वमुत्पन्नमिति तदग्रे उच्यते । अग्रे सर्वतः प्रथमं कामः समवर्तत । 'एकोऽहं वहु स्याम्' इतीच्छा प्रादुर्भूतेत्यर्थः । इच्छा ज्ञानजन्या भवतीति इतः पूर्वं ज्ञानप्रादुर्भाव आम्नातः । अयं च कामो मनसः प्रथमं रेतः मनसः साररूपं वीर्यमिच्छेति भावः । एतेन च कामादपि पूर्वं मनसः प्रादुर्भाव उक्तः । मनो विना तद्रेतः—कामः कथं प्रादुर्भवेदिति । रेतःपदेन चेदं वोधितम्—यन्महदाख्यं यत् प्रकृतेः प्रथमं रूपम्, तत्र रेतसो रसस्याधानात्कामो जायत इति । तदुक्तं भगवद्गीतायाम्—

'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत' इति (अ० १४।३)

एतेन सर्वेणेदं फलितम्—यद् अव्ययपुरुषः 'आनीदवातम्' इति निर्दिष्टः । स रस-प्रधानः । वलप्रधाना तु तच्छक्तिर्महन्नाम्नी प्रादुर्भवति । सा ब्रह्मनाम्ना गीतायां निर्दिष्टा । "तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।" "तस्मादेतद् ब्रह्मनामरूपमन्नं च जायते" इत्यादि श्रुतिषु ब्रह्मपदस्य शक्तिवाचकस्य प्रसिद्धत्वात् । अनयोरव्ययपुरुषस्य महन्नाम्न्याः शक्तेश्च सम्वन्धे रसो यो महति प्रविशति, तेन महतो वृत्तिः कामरूपा प्रादुर्भवतीति । अव्ययपुरु-षस्य कलासु मनः सृष्टौ मोक्षे चोभयत्रान्वयि व्याख्यातम् । कलासु मध्ये गणितं चेति मनः पदेनैवात्र मन्त्रेऽव्ययपुरुषः संकेतितः । गीतायां चाहंपदवाच्यः सर्वत्राव्ययपुरुष एवेत्यपि ग्रन्थ-कृता गीताविज्ञानभाष्ये ख्यापितम् । उपनिषत्स्वपि सृष्ट्यारम्भे 'तन्मनोऽकुरुत' इति मनस एव प्राथम्यमुक्तम् । तस्मादेवं व्याख्याने सर्वैकवाक्यता जायते । तोऽन्यत् स्पष्टं सर्व—समन्वयपरं च व्याख्यानं नास्य सूक्तस्य संभवन्तीति । अत्रेयं शङ्का समुदेति—यन्मनस्तु रसप्रधानत्वात्सत्, महदाख्या प्रकृतिश्च बलप्रधानत्वादसती, वलस्य स्वतन्त्रसत्ताविरहात् । ततश्च सदसतोः संवन्धः कथमिति । तत्र श्रुतिराह "सतो बन्धुमसति निरविन्दन्' इत्यादि । प्राचीनाः कवयो विद्वांसः हृदि स्वीये समाधिज्ञाने सतोऽव्ययपुरुषस्य वन्धुम्—वन्धनम्, वन्धु-तारूपं साहचर्यं वा असति वलप्रधानायां शक्तावेव दृष्टवन्तः । सदसतो रसवलयोर्योगेनैव सर्वं भवति । नात्र शङ्का कार्येत्यर्थः । अग्रिमे मन्त्रे इत एव सृष्टिरिति निगमयति वेदपुरुषः—एषां पूर्वोक्तानामव्ययशक्तिकामानां रश्मिः तिरश्चीनो विततः—सर्वतः प्रसरति । एतद्रश्मिभूतमिदं जगदित्यर्थः । स रश्मिरधोऽप्यस्ति, उपर्यप्यस्ति । अव्ययपुरुषस्य रश्मि-भूता एवाक्षरक्षराद्याः, महतश्च रश्मिभूता एवाहंकाराद्याः प्रकृतयः तस्य समष्टिरूपस्य कामस्य रश्मिभूताश्च सर्वत्र जगति प्रसृताः । कामी अशनायापदवाच्या इति भावः । एषु चोच्चावचभावोऽपि काल्पनिकोऽस्त्येवेति । कियन्तः पदार्था अग्रे कामवशादुत्पद्यन्त इत्युत्त-रार्द्धेन मन्त्रे उक्तम् । तत्र रेतोधाः—गर्भधरिण्यो वलप्रदानाः शक्तयः, महिमानोऽक्षरक्षराद्याः । स्वधाशब्देन प्रकृत्युत्पादितं पशुनामकेन जीवेन भुज्यमानमन्नम् यत्सप्तान्नरूपेणोपनिषत्सु इहापि च पूर्वं व्याख्यातं ग्राह्यम् । प्रयति—पदेन च जीवात्मसहचरं भुक्तौ मुक्तौ च

तावेव सर्वप्रथमं ब्रह्मविद्यामपश्यताम् ।
किन्त्वेनयोरपि रसे बुद्धिः प्राक्कुण्ठिताऽभवत् ॥११॥
यज्ञविद्या प्रसिद्धयर्था ब्रह्मविद्यानुगामिनी ।
देवविद्या पराप्यासीद्देवर्षिभिरुदीरिता ॥१२॥
इत्थं[1] विद्यात्रयी लोके वेदशब्देन कथ्यते ।
अपौरुषेयी सा विद्या यया सृष्टिः प्रवर्तते ॥१३॥

---

तत्सहायकं मनइन्द्रियादीति । सर्वमेतद्रसबलसंयोगेन जायते । बलं शरीरभूतम् । रसस्तु तदात्मभूत इति सर्वमेतद् ग्रन्थे विवृतम् । तस्मादत्र ग्रन्थे विवृतस्य मूलं ब्रह्मोक्ता श्रुतिरेवेति सम्यगवधेयम् । इतोऽग्रे तु तत्त्वस्य दुरूहत्वमविज्ञेयत्वं च ख्यापयितुं को अद्धा वेदेत्याद्युक्तम् । अध्यक्षोऽपि वेद वा नवेत्यनेन वेद्यत्वाभाव एव स्फुटीकृत इत्यादि विचार्यं विद्वद्भिः । इदमत्र प्रसङ्गागतं बहुविवेचितमावश्यकत्वात्; ग्रन्थमूलप्रदर्शनमन्तरेण विदुषां संशयः स्यादिति । इतोऽग्रे प्रकृतेतिहासबोधकानां श्लोकानां शिष्टः सार उच्यते । इमौ ब्रह्मा विष्णुश्चेत्युभौ विराजौ—विराट् पदभाजावास्ताम् । राजा, सम्राट्, स्वराट्, परमेष्ठी, विराडिति भूम्यधिपतीनामुत्तरोत्तरं प्रभावशालिनां संज्ञाः, या अद्यापि पुष्पाञ्जलिकाले 'स्वस्ति साम्राज्यम्' इत्यादिना वैदिकैरुद्घोष्यन्ते । तद्रीत्यैवेमौ विराट्पदाभिधेयावास्ताम् । एताभ्यामेव सर्वतः प्रथमं परमात्मप्रसादेन वैदिक्यो यज्ञब्रह्मविद्या दृष्टाः । ततः परमिन्द्रेण, ततः परं च महर्षिभिरिति जगद्गुरुवैभव उक्तम् । ब्रह्मविद्याया युक्तानामेव विषयाणां प्रत्यक्षीकृत्य प्रदर्शनार्थं तदनुगामिनी प्राप्त्यर्था च यज्ञविद्या । ब्रह्मविद्यायां यज्ञाधारेणैव सृष्टिः प्रतिपादितेति तादृश यज्ञनिदर्शन यज्ञविद्यायामिति । रसस्य स्वरूपे तु अनयोरपि बुद्धिर्न प्रासरत्, तस्य बुद्धिगम्यत्वाभावात् । आभ्यामतिरिक्ता देवविद्या नाम्नापि महती विद्या पुरा प्रवृत्तासीत्, या महर्षिभिर्दृष्टा । यत्र प्राणरूपाणां देवानां स्वरूपं स्पष्टं निर्दिष्टमासीत् । तत्प्रभावेण नवसृष्टिनिर्माणादि सर्वं कर्त्तुं समर्था आसन् विश्वामित्राद्या महर्षयः—इत्ययमितिहाससंक्षेपो द्वादशपद्यपर्यन्तमुक्तः ।

[1] एता विद्या एव वेदाः । विद्या अपौरुषेय्य इति वेदानामपौरुषेयताख्यानस्य तात्पर्यमित्याह । वेदैर्भगवान् सृष्टिः करोतीत्यादि वाक्यानामपि एताभिर्विद्याभिः सृष्टिं करोतीत्येवार्थः । यथा लोके वेषभूषान्नपानादिकं व्यवह्रियमाणं मनुष्यैः स्वबुद्धया विविच्य संपाद्यते तदुत्पादनविद्या; गतानुगतिपरयैव शिक्ष्यन्ते, तथा नैता विद्याः मनुष्यविचारेण प्राप्तुं शक्यन्ते । तत एव अपौरुषेय्य उच्यन्ते । प्रमाणान्तरेण प्रत्यक्षानुमानादिना तं तमर्थं विज्ञाय परस्मै तद्बोधनाय यानि पदवाक्यानि प्रयुज्यन्ते, तानि पौरुषेयाणि । यस्त्वर्थः प्रमाणान्तरैर्लौकिकैर्न विज्ञातुं शक्यते, तत्प्रतिपादकानि वाक्यान्यपौरुषेयाणीति । 'प्रमाणान्तरेणार्थामुपलभ्य विरचितत्वं पौरुषेयत्वम्, तदभावश्चापौरुषेयत्वम्' इति सर्वसंमतं लक्षणम् । अत्र भारतीयानां शिष्टानां न वैमत्यम् । स्वतो वेदप्रादुर्भाववादिनः, ईश्वररचितत्ववादिनः, महर्षिरचितत्ववादिनश्च सर्वेऽपि शिष्टा अत्रैकमता भवन्ति । तर्हि कथमेषा विद्या पुरुषैर्विज्ञातेति चेत् समाधिनिष्ठैः परमेश्वरप्रसादेनेयं दृष्टा इत्येव वेदानां महर्षिप्रणीतत्ववादिनोऽपि मन्यन्ते । अत एव वेदानां द्रष्टार एव ऋषय उच्यन्ते, न तु कर्तारः । विद्यायाः करणासंभवाद्

वेषभूषामानपण्यनीतिभाषाक्षरादिका ।
लोकविद्या यथाऽन्यान्या पुरुषैः कल्पिता भवेत् ॥१४॥

न तथेयं वेदविद्या पुरुषैः क्वापि कल्प्यते ।
द्रष्टृभिः पुरुषैस्त्वेषा वस्तुसिद्धैव दृश्यते ॥१५॥

यथा यज्ञा यथा देवा यथा वा ब्रह्मकर्मणी ।
जगद्रूपेण वर्तन्ते सा दृष्टिर्वेद उच्यते ॥१६॥

यद्वेद्यं विद्यते नित्यं तदत्राविदितं न हि ।
कर्मातीतो रसस्त्वेको ज्ञातोऽपि ज्ञायते न हि ॥१७॥

[१]संविदन्ति न ये वेदा विष्णुर्वेद न वा विधिः ।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥१८॥

[२]यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥१९॥

यो मन्येत सुवेदेति दभ्रमेव स पश्यति ।
मीमांस्यमेव तद्रूपं यस्त्वं वेदेषु वास्य यत् ॥२०॥

[३]नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥२१॥

---

द्रष्टृत्वमेव संभवतीति । वेदेष्वेव यद् द्रष्टृत्वं कर्तृत्वं चोभयमपि ऋषीणां श्रूयते, तस्यापीयमेव गतिः विद्याया द्रष्टृत्वाद् द्रष्टृत्वम्, वाक्यप्रयोक्तृत्वात्तु कर्तृत्वमिति । अत्र च यद् यद् वेद्यं जगति संभवति, तत्सर्वमेवान्तर्भवतीत्युपनिषत्सु स्पष्टमुक्तम् । तदेतत्सप्तदशसंख्याङ्कित श्लोकपर्यन्तं प्रतिपादितम् ।

[१] ब्रह्मनाम्ना ख्यातस्य रसस्य तु ज्ञानविषयत्वं नास्तीति श्रुत्यैव श्रावितम् । तानि उपनिषद्वाक्यान्युद्धृतान्यत्र । तेषां वाक्यानामर्थः संक्षेपेण विव्रियते भाष्याद्युक्तः ।

[२] यो हि वदति, मया ब्रह्म न ज्ञायते, स जानाति । यस्तु वदति—'मया ब्रह्म ज्ञायते' इति स न जानाति । अविज्ञेयस्य अविज्ञेयत्वेन ज्ञानमेव सत्यं ज्ञानम् । विज्ञेयत्वकल्पनं तु मिथ्याज्ञानमिति । अयमेवार्थः श्रुतिद्वयेन विवृतः ।

[३] सुष्ठु सम्यग् ब्रह्माहं वेद—इत्यपि नाहं मन्ये । न ब्रह्म वेद—सर्वथा न जानामि—इत्यपि च न मन्ये । वेद च जानाम्यपि । यतो हि सर्वेषु व्याप्त आत्मा ब्रह्मैव । तं च सर्वोऽपि सर्वदा विदित्वैव तत्तद् व्यवहारमनुतिष्ठति, अहमेतत् करोमीत्येवानुभवात् । 'अहमस्मि न वा' इति संशयः, 'अहं नास्मि' इति विपर्ययश्चानुन्मत्तस्य कस्यचित् कदापि नोदेति । अविज्ञाते हि संशयविपर्ययौ भवतः, आत्मनि तौ न भवत इति आत्मा विज्ञात एव । प्रकृतेर्विविच्य तु दृश्यरूपेण न ज्ञायते—इत्यविज्ञेयत्वमुच्यते । तदुक्तं भगवता याज्ञवल्क्येन बृहदारण्यकोपनिषदि मैत्रेयीं प्रति—"विज्ञातारं वा अरे केन विजानीयात्, येन सर्वं विजानाति, तं केन विजानीयात्" इति । यदि हि आत्मा विज्ञातः—अर्थाद् ज्ञानविषयः

[१]यावत्तदवरे स्थाने तावद्विज्ञातुमिष्यते ।
परस्थाने स्वतन्त्रं तद्रूपं ज्ञातुं न शक्यते ॥२२॥

[२]सर्वात्मना तु तज्ज्ञानमवरेऽपि न शक्यते ।
अनीशः शक्तिचरितं को नु विज्ञातुमर्हति ॥२३॥

[३]अत्यल्पमपि विज्ञानमिह श्रेयस्करं भवेत् ।
तेनास्मिन् परविज्ञाने सर्वदा यत्नवान् भवेत् ॥२४॥

---

स्यात्, तर्हि तादृशज्ञानाश्रयः कश्चिदन्यो भवेत् । तथा च यो ज्ञानाश्रयः स एवात्मा स्यात्, ज्ञेयस्त्वनात्मैव, कर्मत्वकर्तृत्वयोरेकत्र विरोधादिति । एतदेव सर्वम् 'अविज्ञातं विजानताम्' इति श्रुत्या सूचितम् । नोऽस्माकं मध्ये य एतद्गुरुभिरुक्तं वेद, स एवात्मतत्त्वं जानाती-त्यर्थः । 'न वेद—न जानामि इति, वेद—जानामि इति, उभयमपि न सम्यगिति, अस्याः श्रुतेरर्थः ।

[१] अवरे स्थाने जगति व्याप्तं यद् ब्रह्मतत्त्वं तदेव ज्ञातुं शक्यते । स्वतन्त्रं जगद्विरहितं तु रूपं न केनापि ज्ञातुं शक्यत इति । विश्वरूपम्, विश्वचररूपम्, विश्वातीतं च ब्रह्म । तत्र आद्ये द्वये बुद्धिः प्रसारयितुं शक्यते, विश्वातीते तु न कथमपि बुद्धिप्रवेशः । तदुक्तं पुष्पदन्ताचार्येण महिम्नः स्तोत्रे—

अतीतः पन्थानं तव च महिमा वाङ्मनसयो—
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ।

अर्वाचीनं पदं जगद्रूपम्—तत्रैव मनो वाचौ प्रवर्तेते । परं तत्त्वं तु श्रुतिरपि अतद्-व्यावृत्त्या—निषेधरूपेणैव चकितं यथा स्यात्तथाभिधत्त इत्यर्थः ।

[२] अपरे-विश्वचरेऽपि ब्रह्मणि सर्वात्मना तु ज्ञानं न जायते । अनन्तत्वादिति प्रवाहा-धिकरण उक्तम् ।

[३] नैव चेद् विज्ञातुं शक्यते, तदात्र प्रयत्न एव व्यर्थः परित्याज्य इति चेन्नैतद्युक्तम् । यतो हि अत्यल्पमपि ज्ञानमस्य श्रेयस्करं भवति । तदुक्तं भगवद्गीतायाम्—

'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इति (२ अ०) ।

तस्मादत्रावश्यं यत्नः कर्तव्यः । यत्ने क्रियमाणे क्रमेणेश्वरप्रसादमाप्य सर्वं ज्ञातुं लब्धुं च शक्यते 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतिषु श्रुतत्वात् । दशवादरहस्यान्ते चेदं ग्रन्थ-कृतोक्तं स्मर्तव्यम् ।

'अचिन्त्यभावेष्वपि तेषु यावन् मनुष्यधीः क्षाम्यति तावदूह्यम्' ।
स्वयं तदायाति मनुष्यबुद्धौ न शक्यते ज्ञानमुपेक्षितुं तत्' ।

जिज्ञासा स्वत एव मनस्युदेति, असमाहिता सा दुःखं जनयति । तस्माद्यथाशक्यं ज्ञानायावश्यं यतनीयम् न तु हर्बर्ट् स्पेंसरादि पाश्चात्यविद्वदुक्तो अज्ञेयवाद एव कदापि शरणीकरणीयः ।

